REPRINT FROM THE PANDIT.

# न्यायसूत्रविवरणम् ।

श्रीराधामोहनविद्यावाचस्पतिगोस्वामि-
भट्टाचार्यविरचितम् ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयेन न्याया-
ध्यापकेन तर्कतीर्थोपाधिधारिणा श्रीसुरेन्द्रलाल-
गोस्वामिभट्टाचार्येण संस्कृतम् ।

THE

# NYÁYASÚTRAVIVARAṆAM

BY

RÁDHÁ MOHAN VIDYÁVÁCHASPATI
GOSWÁMI BHATTÁCHÁRYA

EDITED BY

SURENDRALÁL TARKATIRTHA GOSWÁMI BHATTÁCHÁRYA
PROFESSOR, SANSKRIT COLLEGE, BENARES.



BENARES:
PRINTED AT THE MEDICAL HALL PRESS.

1903.

Price Rs. 3.] [मूल्यम् ३)

CC-0. In Public Domain. Digitized by eGangotri

REPRINT FROM THE PANDIT.

# न्यायसूत्रविवरणम् ।

श्रीराधामोहनविद्यावाचस्पतिगोस्वामि-
भट्टाचार्यविरचितम् ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयेन न्याया-
ध्यापकेन तर्कतीर्थोपाधिधारिणा श्रीसुरेन्द्रलाल-
गोस्वामिभट्टाचार्येण संस्कृतम् ।

THE

# NYÁYASÚTRAVIVARAṆAM

BY

RA'DHA' MOHAN VIDYA'VA'CHASPATI
GOSWA'MI BHATTA'CHA'RYA

EDITED BY

SURENDRALÁL TARKATIRTHA GOSWÁMI BHATTÁCHÁRYA
PROFESSOR, SANSKRIT COLLEGE, BENARES.



BENARES:
PRINTED AT THE MEDICAL HALL PRESS.

1903.

SRI PRATAP SINGH LIBRARY
Kashmir
No.........
Received on.........

CC-0. In Public Domain. Digitized by eGangotri

PRATAP SINGH MUSEUM LIBRARY Kashmir
No. ............
Received on ............

॥ श्रीगणेशाय नमः ॥

# न्यायसूत्रविवरणस्य विज्ञापनम् ।

रघुनन्दनभट्टाचार्यविरचितैकादशीतत्त्वग्रन्थस्य राधामोहनगोस्वामिभट्टाचार्यविरचितदीपाख्यटीकायामादौ—

"भवे ऽस्मिन् कान्तारे मुहुरटनदुःखैकविकलः
समीहे संलब्धं तव चरणपाथोजशरणम् ।
न योगो ज्ञानं वा भजनमपि वा यद्यपि हरे
तथाप्याशा दीर्घा तव च करुणा किं न कुरुते ॥
वन्दे श्रीकृष्णमानन्दघनं परममीश्वरम् ।
राधास्वर्णलतासङ्गतमालरुचिविग्रहम् ॥
श्रीराधामोहनो दीपं करोति शुभदर्शनम् ।
एकादश्यादितत्त्वानां पूर्वाचार्यमतेच्छया ॥" इति ।

तत्रान्ते च—"इति कलियुगपावनावतारश्रीमदद्वैतवंशसम्भवश्रीराधामोहनगोस्वामिभट्टाचार्यविरचितैकादशीतत्त्वटिप्पणी सम्पूर्णा । शकः १७५० ।

शाके व्योमसुताद्रिचन्द्रपरिमे शम्भुं मुहुः संस्मरन्
भाद्रे सूर्यजवासरे कृततिथौ पक्षे च कृष्णेतरे ।
राधामोहनशर्मणः कृतिमिमां टीकां मुदैकादशी-
तत्त्वस्यैव धरामरो हरिहरो यत्नाद् व्यलेखीत् स्वयम् ॥" इति ।

इदं तु हुगूलिबुधोदययन्त्रालयमुद्रितैकादशीतत्त्वपुस्तके दृश्यते ।

CC-0. In Public Domain. Digitized by eGangotri

बाबूराजेन्द्रलालमित्र एल्. एल्. डि., सी. आई. ई. महोदयकृतनोटिसूअवृदि संस्कृतमेनुस्कृप्ट्सूनामकपुस्तके १० खण्डे ११३ पृष्ठे महामहोपाध्यायश्रीयुक्तहरप्रसादशास्त्रिमहाशयैः एकादशीतत्त्वदीपपुस्तकस्य निरूपणं कृतम् ।

तत्र—

"लिखितैकादशीतत्त्वटीका भारतशर्मणा ।

पत्तवेदाब्धिभूमाने(१) ऽब्दे पीताम्बरदेशतः ॥

१७४२" इति लिपिकालो दत्तः । तत्रैव शास्त्रिमहोदयैः कोलब्रूक्साहब्महाशयस्य मित्रं राधामोहनगोस्वामिभट्टाचार्य आसीदिति लिखितम् ।

कलिकातानगरमुद्रितामरादिकोषचतुष्टयपुस्तके—

"श्रीमदमरकृतकोषः पुरुषोत्तमकृतत्रिकाण्डशेषश्च ।

हारावल्यभिधानं मेदिनीकरस्य नानार्थः ॥ १ ॥

नगरे कलिकात्ताख्ये कोलब्रूक्साहबाज्ञया ।

श्रीविद्याकरमिश्रेण कृतसूचीसमन्वितः ॥ २ ॥

वेदर्त्तवसुकलानाथसम्मिते विक्रमाब्दके ।

मुद्राक्षरेण विप्रेण बाबूरामेण लेखितः ॥ ३ ॥"

इति दृश्यते ।

एतेन १८६४ विक्रमसंवत्सरे कोलब्रूक्साहबसमय आयाति । एकादशीतत्त्वटीकाप्रणेतुर्न्यायसूत्रविवरणप्रणेतृत्वस्वीकारे महामहोपाध्यायश्रीयुक्तहरप्रसादशास्त्रिमहाशयवाक्यस्य सप्रमाणत्वे च १८६४ विक्रमसंवत्सरे राधामोहनगोस्वामिभट्टाचार्य आसीदिति लभ्यते ।

(१) यद्यपि गणितशास्त्रे ऽब्धिशब्देन समुद्रशब्दपर्यायेण चत्वार इति व्यवह्रियते । परं तु चतुष्टयग्रहणे लेखक एव प्राचीनस्तदा ग्रन्थकारः कुत्र तिष्ठेदिति सप्त समुद्रा एवाब्धय इत्यनुसृतं लेखकेन ।

CC-0. In Public Domain. Digitized by eGangotri

सम्भाव्यते चेदं न्यायसूत्रविवरणप्रणेतुरेव राधामोहनगोस्वामिभट्टाचार्यस्य एकादशीतत्त्वटीकाप्रणेतृत्वम् । यतः स एव कुत्रचित् "इति श्रीराधामोहनगोस्वामिभट्टाचार्यविरचित" इति लिखतिस्म क्वचिच्च "इति श्रीराधामोहनविद्यावाचस्पतिगोस्वामिभट्टाचार्यविरचित" इति लिखतिस्म क्वचिच्चाद्वैतवंशसम्भवादिशब्देन स्वोत्कीर्तनं कृतवान् । यथा अस्मिन्नेव न्यायसूत्रविवरणे प्रथमाध्यायाद्याह्निकान्ते "इति श्रीराधामोहनगोस्वामिभट्टाचार्यविरचितन्यायसूत्रविवरणे प्रथमाध्यायस्याद्याह्निकविवरणम् ।" इति लिखितवानिति पञ्चमाध्यायान्ते च "इति श्रीराधामोहनविद्यावाचस्पतिगोस्वामिभट्टाचार्यविरचिते गोतमसूत्रविवरणे पञ्चमाध्यायविवरणम् ।" इति लिखितवानिति । हरिदासकृतकुसुमाञ्जलिकारिकाटीकोपरि राधामोहनगोस्वामिभट्टाचार्येण टीका कृता (१) । तत्र द्वितीयस्तवकान्ते च "इति श्रीराधामोहनविद्यावाचस्पतिगोस्वामिभट्टाचार्यविरचिता हरिदासीयकुसुमाञ्जलिद्वितीयस्तवकव्याख्या समाप्ता ।" इति लिखतिस्मेति च दृश्यते । तथैव एकादशीतत्त्वटीकान्ते ऽपि विद्यावाचस्पतिपदं विहाय कलियुगपावनादिपदानि योजयित्वा लिखितवानिति नासम्भवः । तथात्वे चास्य नदियाप्रदेशान्तर्गतशान्तिपुरग्रामनिवासित्वमायाति यतोऽद्वैतवंशसम्भूता गोस्वामिनः शान्तिपुरनिवासिनः । प्रवादोऽप्येवमेव शान्तिपुरनिवासी राधामोहनगोस्वामिभट्टाचार्य एव न्याये धर्मशास्त्रादौ च बहुधा ग्रन्थान् रचितवानिति । उपलभ्यन्ते च

(१) तत्राद्यमाद्यश्लोकः ।

शिशुरसि दुग्धमुखस्त्वं कलयसि मुरलीं कुतोऽतिचित्रम् ।
इति गोपीस्मितवचनैः सुस्मितवदनो हरिः पातु ॥ इति ।

CC-0. In Public Domain. Digitized by eGangotri

अनुमानखण्डे जगदीशगदाधरादिकृतग्रन्थोपरि यथोक्तगोस्वामिभट्टाचार्यविरचितानि क्रोडपत्त्राणीति। नोपलभ्यते चैवंलक्षणाक्रान्तो राधामोहनगोस्वामीत्याख्यया प्रसिद्धः कश्चिदन्यो विद्वानिति।

एकादशीतत्त्वटीकादीपप्रणेतुर्न्यायसूत्रविवरणप्रणेतृत्वास्वीकारे महामहोपाध्यायश्रीयुक्तहरप्रसादशास्त्रिमहाशयवाक्यास्वीकारे ऽपि अस्मिन् न्यायसूत्रविवरणे ३२ पृष्ठे १८पङ्क्तौ "बाधादिग्रन्थे जगदीशैरप्युक्तत्वादिति" इतिलेखदर्शनात् तत्त्वचिन्तामणिटीकादीधितिव्याख्यातृजगदीशतर्कालङ्कारभट्टाचार्यात् पश्चाद्भावी राधामोहनगोस्वामिभट्टाचार्य इत्यत्र नास्ति विवादः।

वाराणसीस्थमेडिकल्हाल्नामकयन्त्रालयमुद्रितसटीकप्रशस्तपादभाष्यपुस्तकविज्ञापने वाराणसीस्थराजकीयसंस्कृतपाठशालापुस्तकालयाध्यक्षैः श्रीयुक्तविन्ध्येश्वरीप्रसादद्विवेदिमहाशयैः "जगदीशभट्टाचार्यकृतशब्दशक्तिप्रकाशिकापुस्तकस्य १६२४ शालिवाहनशकलिखितस्योपलम्भात् तत्समयात् पूर्वं तद्ग्रन्थकर्तुः स्थितिरिति सुव्यक्तम्।" इति लिखितम्।

तत्त्वचिन्तामणिव्याख्यातृमथुरानाथस्य दीधितिकारानन्तर्यं व्याप्तिपञ्चकग्रन्थे "तच्चागुणवत्त्वमितिसाधर्म्यव्याख्यानावसरे गुणप्रकाशरहस्ये तद्दीधितिरहस्ये च स्फुट"मिति "अत एव निविशतां वा वृत्तिमत्त्वं साध्यसामानाधिकरण्यं वेति केवलान्वयिग्रन्थे दीधितिकृत" इत्यादिलेखदर्शनात् पक्षताग्रन्थे संशयपक्षताव्याख्यानावसरे दीधितिकृद्व्याख्यानस्य मथुरानाथेन भट्टाचार्यास्त्वित्यादिना प्रदर्शनात् दीधितिग्रन्थोपरि मथुरानाथकृतटीकोपलम्भाच्चावगम्यते। व्यधिकरणधर्मावच्छिन्नाभावग्रन्थीयमथुरा-

CC-0. In Public Domain. Digitized by eGangotri

नाथकृतव्याख्यानस्य जगदीशेन नव्यास्त्वित्यादिना प्रदर्शितत्वेन व्याप्तिपञ्चकद्वितीयलक्षणस्य मथुरानाथीयव्याख्यानस्य जगदीशेन केचित्त्वित्यादिना प्रदर्शितत्वेन च मथुरानाथतर्कवागीशानन्तर्यं जगदीशतर्कालङ्कारस्यायातीति। एवं च मथुरानाथतर्कवागीशानन्तरं १६२४ शकाब्दतः पूर्वं जगदीशतर्कालङ्कारस्य समय इति निश्चीयते। जगदीशतर्कालङ्कारानन्तर्यं च राधामोहनगोस्वामिभट्टाचार्यस्येति सिद्धम्।

दीधितिकारसमयस्तु १४०७ शाकवर्ष इति अस्मन्मुद्रिततर्कभाषाग्रन्थविज्ञापने द्रष्टव्यम्।

इदं च न्यायसूत्रविवरणपुस्तकमेकमेव वाराणसीस्थराजकीयसंस्कृतपाठशालीयभूतपूर्वप्रधानन्यायाध्यापककालीप्रसादशिरोमणिभट्टाचार्यमहाशयसङ्गृहीतं तदीयदौहित्रश्रीयुक्तनीलकमलभट्टाचार्यमहाशयसमीपतोऽस्माभिः प्राप्तम्। अस्मिंश्च ग्रन्थे नवीनरीत्या व्याख्यानकौशलं ग्रन्थकृता प्रचुरतया प्रदर्शितम्। क्वचिच्च सूत्रपाठोऽपि विलक्षणतया धृतः। क्वचिच्च सूत्रमप्यधिकं धृत्वा व्याख्यातम्। यथा प्रथमाध्याये प्रथमाह्निके प्रत्यक्षलक्षणसूत्रव्याख्यानान्तरं १४ पृष्ठे २१ पङ्क्तौ "सविकल्पकमपि द्विविधं संस्कारोद्भवतदनुद्भवभेदादित्याह। संस्कारोद्भवा प्रत्यभिज्ञा"। इति प्रत्यभिज्ञासूत्रमेकमधिकं दृश्यते एवमग्रेऽपि। विश्वनाथपञ्चाननकृतं वृत्तिव्याख्यानमपि स्वव्याख्यानकौशलं दर्शयित्वा क्वचित् केचिदित्यादिना क्वचिद् यद्वेत्यादिना प्रायशो दर्शितम्।

तदिदं न्यायसूत्रविवरणपुस्तकं प्राप्य अस्य व्याख्यानरीतिं चावलोक्य प्रकाशयितुकामः वाराणसीश्वरा-

CC-0. In Public Domain. Digitized by eGangotri

जकीयसंस्कृतपाठशालाप्रधानाध्यक्षश्री १०८मदार्थर् वेनि-
स् साहब् महाशयानामाज्ञयाहं मुद्रयित्वा प्रकाशितवान्।

इदानीन्तनानां सूत्रभाष्यविषये बहूनां विप्रति-
पत्तिमुपलभ्य वाराणसीस्थराजकीयसंस्कृतपाठशालासा-
हित्याध्यापकमहामहोपाध्यायश्रीयुक्तगङ्गाधरशास्त्रि सी.
आइ. ई. महाशयैः वाराणसीस्थमेडिकल्हाल्नामकयन्त्रा-
लयमुद्रितन्यायभाष्यपुस्तके सूत्रभाष्यनिर्णयः कृतः। तत्र
च विवेचकानामपरितोषमनुभूय प्राचीनोक्तसूत्रप्रमाण-
वाक्यानां टिप्पण्याकारेण सन्निवेशोऽस्माभिः कृतः। यत्र
च सूत्रप्रमाणं प्राचीनग्रन्थकारैरुक्तं स्पष्टतोऽस्माभिर्न लब्धं
तत्र वाचस्पतिमिश्रविरचितो न्यायसूचीनिबन्ध एव प्रमा-
णतया शरणीकृतः। सूत्रविषये पाठान्तराण्यपि तथैव
दर्शितानि।

अस्मिन् मुद्रितन्यायसूत्रविवरणपुस्तके अस्मत्प्रमाद-
वशात् सीसकाक्षरदौर्बल्यादिदोषाच्च यद्यदशुद्ध्यादिकं
तत्सर्वं शोधयित्वा क्षमासारा हि साधव इति गुणैकद-
र्शिनः क्षन्तुमर्हन्ति सन्त इति प्रसीदतु च भगवान्
सर्वशक्तिः सर्वान्तर्यामी व्यापारेणानेन श्रीबालगोपाल-
देव इति च प्रार्थयते।

श्रीसुरेन्द्रलालशर्मा।



CC-0. In Public Domain. Digitized by eGangotri

श्रीगणेशाय नमः ॥

## न्यायसूत्रविवरणोक्तसूत्राणामकारादिवर्णानुक्रमेण सूचीपत्रम् ।



CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

॥ श्रीहरिः ॥

CC-0. In Public Domain. Digitized by eGangotri

श्रीगणेशाय नमः ।

# न्यायसूत्रविवरणोक्तसूत्रसम्बन्धिप्रकरणानां सूचीपत्रम् ।

## प्रथमाध्याये प्रथमाह्निके ।



## प्रथमाध्याये द्वितीयाह्निके ।



## द्वितीयाध्याये प्रथमाह्निके ।



CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

(१) विवरणकृता पञ्चमाध्यायद्वितीयाह्निके प्रकरणोल्लेखो न कृत इति न्यायसूचीनिबन्धानुसारेणात्र प्रकरणसन्निवेशोऽस्माभिः कृत इति बोध्यम् ।

CC-0. In Public Domain. Digitized by eGangotri

॥ श्रीहरिः ॥



CC-0. In Public Domain. Digitized by eGangotri

श्रीगणेशाय नमः ।

# न्यायसूत्रविवरणोक्तविषयाणामकारादिवर्णानुक्रमेण सूचीपत्त्रम् ।



CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

श.



CC-0. In Public Domain. Digitized by eGangotri

CC-0. In Public Domain. Digitized by eGangotri

ह.



॥ श्रीहरिः ॥

CC-0. In Public Domain. Digitized by eGangotri

श्रीगणेशाय नमः ॥

# न्यायसूत्रविवरणस्य

# शुद्धिपत्रम् ।

| पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३ | १४ | द्वन्दः | द्वन्द्वः |
| ४ | १८* | श्रोतव्य | ननु श्रोतव्य |
| ५ | १७ | त्रयहेतु | त्रयस्य हेतु |
| ५ | २३ | प्रधानार्थे | प्रधानार्थम् । |
| ६ | १९ | इति ॥ | इति ॥ १ ॥ |
| ७ | १३* | काल | कालिक |
| ८ | ६ | दर्शनात् । | दर्शनात् |
| १० | ११ | कूर्वीत् | कुर्वीत |
| १० | १८ | शरा- | शरी- |
| ११ | १ | ततश्च | तस्याश्च |
| ११ | ८ | ॥ | ॥ २ ॥ |
| १२ | ४ | मिति | र्मिति । |
| १२ | ५ | सूचितः ॥ | सूचितः ॥ ३ ॥ |
| १३ | २२* | स्फुटत्वेन | स्फुटत्वेन लाभे |
| १४ | २१ | णादिति प्राहुः । | नादिति प्राहुः ॥ ४ ॥ |
| १६ | १३ | मित्येवकथं | मित्येव कथं |
| १७ | ९ | पशना | पशूना |
| १८ | १० | दुपजावि | दुपजीवि |

* एतच्चिह्नयुक्तस्थलीयशुद्धपाठाः सम्भावितत्वेनादृताः ।

CC-0. In Public Domain. Digitized by eGangotri

| पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १९ | ६ | रवो माद्र | रवोमाद्र |
| २३ | २५* | श्रोत्रस्या | ननु श्रोत्रस्या |
| २५ | ११ | मीति | मीति । |
| २६ | ७ | विभजयन् | विभाजयन् |
| २६ | २० | कार्यताव | कार्यतानव |
| २९ | ६ | मन्तव्योनि- | मन्तव्यो नि- |
| ३२ | १७ | कोटिकं च | कोटिकं च । |
| ३३ | ४ | तावाच्छेदका | तावच्छेदका |
| ४२ | ७ | न्तगततत्वे | न्तर्गतत्वे |
| ४८ | २* | ॥ ३९ ॥ | ॥ ३९ ॥ इति न्यायस्वरूपप्रकरणम् ॥ |
| ४८ | ९ | चापाद्यग्रह | चापादकग्रह |
| ४९ | ११ | यापेत्तिता | पेत्तिता |
| ५२ | २३ | प्रयोगेनै | प्रयोगेणै |
| ५३ | २५ | स्फुर्तिका | स्फूर्तिका |
| ७० | २ | विशेष्ये । | विशेष्ये |
| ७१ | ३ | छलमिति | वाक्छलमिति । |
| ७८ | १ | त्वादिमादा | त्वादिकमादा |
| ७९ | ९ | तथा | तथा च |
| ७९ | २१ | न संशय- | न स्वसंशय- |
| ९३ | ४ | श्रायचत्तु | र्षीयचत्तु |
| ९४ | ११ | तथापि | तस्यापि |
| ९८ | २ | प्रत्यक्षाजन | प्रत्यक्षजन |
| १०१ | १५ | रुपपत्तिः | रुपपत्तिः |
| १०१ | १८ | त्वैकादेशा | त्वैकदेशा |
| १०३ | १० | वृद्ध्युपघात | वृद्ध्युपघात |

CC-0. In Public Domain. Digitized by eGangotri

| पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १०७ | २ | नासात् | नासीत् |
| १०८ | २५* | तयोरप्यभाव | वर्तमानाभाव |
| ११९ | १६ | प्रज्ञ। | प्रज्ञा |
| १३४ | ८ | केचित्त | केचित्तु |
| १५६ | २२ | बहुवचन | बहुवचन- |
| १५७ | २६ | प्रयोग | प्रयोग- |
| १५८ | १२ | संख्या वृद्धय | संख्यावृद्धय |
| १७० | १५ | दक्षिणचक्षः | दक्षिणचक्षुः |
| १७५ | ८ | प्रक्ति:सा | प्रक्तिः सा |
| १७६ | १ | तीन्द्रियत्व | तीन्द्रियत्वे |
| १९१ | ५ | वह्न- | वह्ना- |
| १९१ | ६ | घादेर्घटा | देर्घटा |
| १९३ | १४ | चक्षरा | चक्षुरा |
| १९८ | १ | श्चक्षपा | श्चक्षुपा |
| २०२ | ३ | वृत्तयो | वृत्तयो |
| २०३ | ८ | वाधिकरण | वाविरल |
| २०८ | १८ | तद्व्युत्पादयति | तद्व्युत्पादयति |
| २१४ | ३ | शरीर | शरीर |
| २२९ | ९ | चक्षरादिना | चक्षुरादिना |
| २३९ | १९ | द्विभूयाल | द्विभ्रियाल |
| २४२ | ४ | सिद्धः | सिद्धिः |
| २४५ | ९ | रुपपत्तः | रुपपत्तेः |
| २५२ | १५ | काशादेर्न | काशादेर्नि |
| २५४ | ४ | स्वाकारात् | स्वीकारात् |
| २६६ | १० | बलवद् | बलवद् |
| ३०१ | १८* | वैधर्म्यावेव | वैधर्म्ये एव |

CC-0. In Public Domain. Digitized by eGangotri

| पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३०१ | १८ | पन्यस्तावितिा | पन्यस्ते इति |
| ३०४ | २ | कत्वादि रूप | कत्वादिरूप |
| ३३२ | १२ | फलितायः | फलितार्थः |
| ३३३ | २६ | तद्दो- | न दो- |
| ३३६ | २१ | नानबोध | नानवबोध |

सूत्रसूचीपत्रे

| | | | |
|---|---|---|---|
| १९ | ४ | भूतेभ्यो भूर्त्यु | भूतेभ्यो मूर्त्यु |

॥ श्रीहरिः ॥



CC-0. In Public Domain. Digitized by eGangotri

श्रीगणेशाय नमः ॥

## न्यायसूत्रविवरणस्थटिप्पण्याः

# शुद्धिपत्त्रम् ।

| पृ० । | पं० । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३७ | २१ | भ्यपगम | भ्युपगम |
| ४७ | २६ | ह्लोप ी क | ह्लोपजीवक |
| ६४ | २४ | टीका | टीका । |
| ६८ | २६ | भाष्यकृद्व्या ख्य नं | भाष्यकृद्व्याख्यानं |
| ७८ | २३ | वाचस्पति | वाचस्पति- |
| ८२ | २४ | वात्तिकम् | वार्त्तिकम् |
| ९७ | २३ | तात्प ंमाह | तात्पर्यमाह |
| ११२ | २८ | नाचा ाः | नाचार्याः |
| १२५ | २२ | टिप्पणी | टिप्पणी |
| १३३ | २२ | सूत्रत्वं सम्भाव्यते। | सूत्रत्वम् । आदिशब्दादर्थापत्तिरप्रमाणमनैकान्तिकत्वात् नानैकान्तिकत्वमर्थापत्तेः अनर्थापत्तावर्थापत्त्यभिमानात् तथा नाभावः प्रमाणं प्रमेयासिद्धेरित्याद्यन्तर्भावोपयोगिप्रमाणपरीक्षासूत्राणां सङ्ग्रह इति तार्किकरक्षाटीकास्थमल्लिनाथीयलेखदर्शनाच्च । तत्र चेदृश एव सूत्रपाठः । वाराणसीस्थमेडिकल्हाल्नामकयन्त्रालयमुद्रितसटीकतार्किकरक्षापुस्तके ९६ पृष्ठे । |
| १६९ | २६ | बधातिदि | बधादिति |

CC-0. In Public Domain. Digitized by eGangotri

| पृ०। | प०। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १७१ | २४ | नेकत्व | नैकत्व |
| १७३ | २२ | पलव्धि | पलब्धि |
| १७४ | २७ | तत्त्वालोके। | तत्त्वालोके। न्यायसूत्रकारैरेव आत्मप्रतिपत्तिहेतूनां मनसि सम्भवादितिचोद्यपूर्वकं ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रमित्यादिभिरिन्द्रियत्वपरीक्षणमिति तार्किकरक्षायां वरदराजेनोक्तम्। सटीकतार्किकरक्षापुस्तके १७३ पृष्ठे। |
| १७५ | २६ | पूर्ववत्। | पूर्ववत्। आदिशब्दान्नियमश्च निरनुमान इत्युत्तरसूत्रसङ्ग्रह इत्युक्तं मल्लिनाथेन तार्किकरक्षाटीकायाम्। सटीकतार्किकरक्षापुस्तके १७३ पृष्ठे। |
| १९७ | २२ | ऽविद्याता | ऽविघाता |
| २१४ | २४ | न्यायसूची | न्यायसूची- |
| २३८ | २३ | वर्तत्। | वर्तते। |
| २८५ | २४ | याथात्म्या | याथात्म्या- |
| २९४ | २३ | इति। | इति |
| २९७ | २४ | रिति पाठः। | हिति पाठः। तदुक्तं तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयादिति तार्किकरक्षायां वरदराजः। वादस्य वीतरागमात्राधिकारित्वे सूत्रसम्मतिमाह तदुक्तमितीति तट्टीकायां मल्लिनाथः। सटीकतार्किकरक्षापुस्तके २११ पृष्ठे। |
| ३१० | २५ | निवृत्तिरि | निर्वृत्तिरि- |
| ३१६ | २४ | निबन्धे। | निबन्धे। स्वव्याघातप्रदर्शनपरमपि सूचनम्। प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रति- |

CC-0. In Public Domain. Digitized by eGangotri

| पृ० | प० | अशुद्धम् । | शुद्धम् । |
| --- | --- | --- | --- |
| | | | येध इति तार्किकरक्षायां वरदराजः । सटीकतार्किकरक्षापुस्तके २८५ पृष्ठे । |
| ३२१ | २४ | वर्तते । | वर्तते । तदुक्तं तदनुपलब्धेरनुपलम्भादभावसिद्धावित्यादि तार्किकरक्षायां वरदराजः । एतद्व्याख्याने इति सूत्रार्थ इति ज्ञानपूर्णः । सटीकतार्किकरक्षापुस्तके २९५ पृष्ठे । |
| ३२४ | २३ | पाठः । | पाठः । व्याप्तिलक्षणयुक्ताङ्गहानिप्रदर्शनपरं सूत्रम् । दृष्टान्ते साध्यसाधनभावेन प्रतिज्ञातस्येत्यादि तार्किकरक्षायां वरदराजः । सटीकतार्किकरक्षापुस्तके ३०० पृष्ठे । |
| ३२७ | २४ | सूत्रप | सूत्रम् |
| ३२९ | २५ | मतानुज्ञति | मतानुज्ञेति |
| ३३० | २३ | उप्रेक्षा | उपेक्षा |
| ३३८ | २५ | हीनमन्य | हीनमन्य |
| ३४१ | २१ | निन्धे | निबन्धे |
| ३४३ | २५ | मूत्रम् | सूत्रम् |
| ३४४ | २२ | सूचम् | सूत्रम् |
| ३४५ | १८ | नियह | नियह- |

॥ श्रीहरिः ॥



श्रीहरये नमः ॥

# न्यायसूत्रविवरणम् ।

तमालश्यामाङ्गो द्रुतकनकचीनांशुकरुचिः
शुचिः साक्षान्मूर्तो रस इव परानन्दनिविडः ।
द्रवच्चेतो राधाप्रियसहचरः कोऽपि विहरन्
ममास्तां स्वच्छन्दं हृदयसदने चारुविजने ॥
भवारण्ये भीमे विमतिलतिकाकण्टकवृते
सदा लोकान् कर्मप्रचुरतरदुःखाकुलतया ।
तमोऽन्धानालोक्य भ्रमत इह शास्त्राणि करुण-
स्तदुच्छेदे न्याये मुनिरमलसूत्राणि विदधे ॥
नत्वा श्रीकृष्णपादाब्जं तं मुनिं श्रीगुरुं तथा ।
व्याख्यामातनुते तेषां श्रीराधामोहनः सुधीः ॥

तत्रादौ प्रेक्षावत्प्रवृत्तये प्रयोजनं दर्शयन् विधेयं निर्दिशति ।

**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः**(१) ॥ १ ॥

प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगम इति तानि तत्त्वेन निरूप्यन्त इति शेषः । अन्यथा शिष्यावधानानुपपत्तेः । निरूपणं ज्ञापनं ग्रन्थात्मकशब्दसमूह इति

(१) प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिमं सूत्रमिति वार्त्तिकम् । तत्र संक्षेपतः प्रथमसूत्रमनूद्य तस्य तात्पर्यमाहेत्यादि तात्पर्यटीका । अतोऽस्य सूत्रत्वमित्यवसीयते ।

CC-0. In Public Domain. Digitized by eGangotri

यावत्। व्यापारानुबन्धिनी विषयता च तत्पदलभ्यप्रमाणाद्यन्वयिनी आख्यातार्थः। अत्र यद्यपि अविगीतशिष्टाचारविषयत्वेनानुमितवेदविहितकर्तव्यताकं मङ्गलं कर्तुमुचितं तथापि मङ्गलस्य ग्रन्थसमाप्तिप्रतिकूलविघ्नविनाशकतया ग्रन्थादौ कर्तव्यत्वेन सर्वज्ञस्य मुनेः स्वतो विघ्नविरहनिश्चयवतो मङ्गलाकरणे ऽपि न दोषः। मङ्गलस्य कृतत्वे ऽपि तद्रूपनिबन्धनस्यानियमेनाकृतत्वे ऽपि न क्षतिः। वस्तुतोऽत्रापि शिष्यशिक्षार्थं मङ्गलोपनिबन्धः परमेश्वरपरप्रमाणपदोपन्यासरूपः कृतः प्रमाणपदस्य कर्तृव्युत्पत्त्या प्रमातृपरत्वात् प्रशब्दसमभिव्याहृतमाधातुना च नित्ययथार्थसर्वविषयकं ज्ञानमुच्यते तदुक्तं भारतीयनामसहस्रमध्ये प्रमाणं बीजमव्ययमिति। सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तत इति न्यायेन(१) विशेषदर्शिनां प्रवर्तनाय प्रयोजनाभिधेयसम्बन्धानाह प्रथमसूत्रेण। सिद्धो ज्ञातोऽर्थः प्रयोजनं यस्य एवं सिद्धः सम्बन्धोऽभिधेयप्रयोजनाभ्यां यस्य तं ग्रन्थम्। तत्र प्रयोजनं निःश्रेयसपदबोधितापवर्गः। अभिधेयानि पदार्थतत्त्वानि। सम्बन्धो निःश्रेयसप्रमाणादिपदार्थतत्त्वज्ञानयोर्हेतुहेतुमद्भावः प्रमाणादितत्त्वनिरूपणात्मकग्रन्थयोः प्रतिपाद्यप्रतिपादकभावश्च। प्रतिपादकत्वं च ग्रन्थस्य ज्ञानद्वारेति मुमुक्षूणां निःश्रेयसोपयोगिप्रमाणादितत्त्वज्ञानजनकत्वरूपनिःश्रेयसोपयोगित्वज्ञानादेतद्ग्रन्थश्रवणे प्रवृत्तिरिति दर्शितम्। केचित्तु तत्त्वं ज्ञायते ऽनेनेति व्युत्पत्त्या तत्त्वज्ञानशब्दः शास्त्रपरः निःश्रेयसस्याधिगमो यस्मात् स निःश्रेयसाधिगम इति

(१) श्लोकवार्त्तिके प्रतिज्ञासूत्रव्याख्याने १७ श्लोकपूर्वार्द्धम्। तत्र सिद्धसम्बन्धमित्यत्र ज्ञातसम्बन्धमिति पाठः। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इत्यपरार्द्धम्।

CC-0. In Public Domain. Digitized by eGangotri

शास्त्रस्य निःश्रेयसोपयोगितत्त्वज्ञानजनकत्वलाभः । एवं च इति तानि निरूप्यन्त इति न पूरणीयमित्याहुः । तच्चिन्त्यम् । प्रमाणादयः पदार्था इत्यादिज्ञानं न मोक्षप्रयोजकमिति तत्त्वेत्युक्तम् । तत्त्वं च लक्षणस्वरूपादिकं तथा प्रमाणादीनां तत्त्वेन प्रकारेण विशिष्य ज्ञानान्मोक्षाधिगम इत्यर्थः । प्रमाणप्रमेयेत्यादि सर्वपदार्थप्रधानो द्वन्द्वनिर्देशः । अथ

पदार्थानां प्रधानत्वे परस्परविभेदतः ।
एकदैव क्रियायोगाद् भवति द्वन्द्वसंज्ञकः ॥

इत्यभियुक्तस्मरणात् प्रमाणादीनां प्रमेयाद्यभिन्नतया द्वन्द्वानुपपत्तिरिति चेत् । न । पदार्थो हि जात्याकृतिव्यक्तय इतिभाष्यानुसारेण पदार्थतावच्छेदकस्यापि पदार्थत्वात् । जातिपदं पदार्थतावच्छेदकपरं तथा चात्र पदार्थतावच्छेदकभेदादेव द्वन्द्वविधानम् । घटा इत्यादिस्वरूपैकशेषस्थले पदार्थभेदादेव द्वन्द्वः । न च तत्र द्वन्द्व एव नेति वाच्यम् । सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति नियमाद् घटा इत्यनेनानेकघटबोधानुपपत्तेः । न चानेकपदमेलनरूपसमासत्वस्य घटौ घटा इत्यादौ नास्तीति कथं द्वन्द्व इति वाच्यम् । द्वन्द्वोत्तरमेकशेषस्य करणात् । वस्तुतस्तु तादृशनियम एव नोपगम्यते एकार्थावच्छिन्नार्थकस्वरूपैकशेषोऽपि नास्तीति सर्वत्र पदार्थतावच्छेदकभेदादेव द्वन्द्वः पदार्थभेदेनापि द्वन्द्वविधाने घटकलसावित्यादिप्रयोगापत्तेरिति । यत्तु द्वन्द्वापवादक एवैकशेषः स च द्वन्द्वप्रसक्तावेव सम्भवतीति पदार्थभेदेऽपि द्वन्द्वविधानम् । अत एव युञ्जावित्यादौ तुनर्विधानं साधु समासभिन्न एव तस्य साधुत्वादिति । तन्न । घटा इत्यादौ बहुवचनस्य लुप्तघटपदाप्रकृतिकतया तदर्थेन बहुवचनार्थस्यान्वये प्रकृत्यर्थ एव संख्याद्यन्वये स्या-

CC-0. In Public Domain. Digitized by eGangotri

दिविभक्तीनां साकाङ्क्षत्वमितिनियमभङ्गापत्तेः। तत्र च निर्देशे यथावचनं विग्रह इति भाष्यम्। तथा च प्रमाणानि च प्रमेयं च संशयश्च प्रयोजनं चेति विग्रहं वर्णयन्ति। निर्देशसूत्रे च क्वचिदेकवचनं क्वचिच्च बहुवचनं सप्रयोजनमिति तत्रतत्रैव व्याख्येयम्। केचित्तु प्रथमोपस्थितत्वादेकवचनेनैव प्रमाणं च प्रमेयं चेत्यादिविग्रहमाचरन्ति। प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रधानतया प्रथमतः प्रमाणनिर्देशः। जीवात्मपरमात्मनोः प्रमेयत्वेनावधारितयोरेव सत्त्वस्थैर्यादिसिद्धिस्तत्सिद्धौ च जीवात्मनि उत्तरकालं दुःखानुवृत्तिनिवृत्तिकामनया तत्त्वेन तदुभयनिरूपणश्रवणे प्रवृत्तिसम्भवस्तत्त्वं च देहादिव्यतिरिक्तत्वं परमात्मतत्त्वं च जगत्कर्तृत्वादिकमपि एतद्द्वयं साक्षान्मुक्तिहेतुरितरेषां देहादीनां प्रमेयाणां सामान्यविशेषरूपेण तत्त्वावधारणं च देहादिव्यतिरिक्तत्वज्ञानस्य प्रतियोगिज्ञानसापेक्षतया प्रयोजकमिति प्रमाणानन्तरं प्रथमतः प्रमेयनिर्देशः। परार्थस्थले पदार्थव्यवस्थापनस्यानुमानस्य न्यायसाध्यतयाऽवसरतो न्याये निरूपणीये तत्पूर्वाङ्गसंशयस्यादौ निर्देशः। श्रोतव्य इत्यादिश्रुत्या श्रवणानन्तरं मननबोधनात् मन्तव्यश्चोपपत्तिभिरिति बहुवचनेनैकेन हेतुनानुमानानन्तरमन्यहेतुकानुमानज्ञापनात् संशयो नानुमानाङ्गम्। न च तत्रापि आहार्यसंशयाभ्युपगम इति वाच्यम्। मानाभावादिति चेत्। न। श्रोतव्य इत्यादिश्रुतौ श्रवणमननयोर्नानाहेतुकानुमानानां च नैकप्रकारत्वं विवक्षितम्। तेनैकरूपेण शाब्दादौ सत्यपि रूपान्तरेणानुमानात् न संशयानुपपत्तिः। वस्तुतः संशयस्यानुमितावहेतुत्वे ऽपि विचारस्थले मध्यस्थसंशये सत्येव तन्निवृत्तये कः साध्यवानिति तत्प्रश्ने

CC-0. In Public Domain. Digitized by eGangotri

वादिना न्यायोद्भावनान्न्यायाङ्गत्वं संशयस्येति । एवं शाब्दसिद्धावप्यर्थान्तरतात्पर्यसम्भावनयाऽप्रामाण्यसंशयादर्थसंशयेन निश्चितप्रामाण्यकानेकहेतुकानुमितिः । ततश्च प्रयोजनज्ञानं विना न्यायप्रवृत्तिर्न सम्भवतीत्येककार्यप्रयोजकत्वसङ्गत्या प्रयोजनोद्देशः । सदृष्टान्तोदाहरणस्य न्यायघटकतया तज्ज्ञाने दृष्टान्तज्ञानापेक्षेति तदादौ तन्निरूपणम् । यद्वा दृष्टान्त एव न्यायेन परप्रत्यायनमिति तदादौ तद्विधापनम् । तेनोदाहरणस्य दृष्टान्ताघटितत्वेऽपि घटितत्वेऽपि वा तदव्यवहितपूर्वं स्वातन्त्र्येण तन्निरूपणस्यानुपयुक्तत्वेऽपि न क्षतिः । सिद्धान्तविषयस्यैव न्यायस्य वस्तुसाधकत्वं सिद्धान्तविषयत्वज्ञानं च दृष्टान्तं विना नेति दृष्टान्तानन्तरं न्यायपूर्वं सिद्धान्तकथनम् । ततश्चावसरतो न्यायावयवकथनं तत्र चावयवकथनेनैव न्यायकथनम् । ततश्चैककार्यकारितर्कोपन्यासः । ततस्तत्कार्यतया निर्णयस्य । ततश्च तदनुकूलयोर्वादजल्पयोः । ततो विजयलक्षणैककार्यकारितया वितण्डायाः । एतत्कथात्रयहेतुप्रयोगाङ्गकतया तत्र च वादस्थले विरोधिहेतौ दोषज्ञानं विना स्वहेतुना साध्यसाधनं न भवति जल्पवितण्डयोश्च परकीयहेतौ दोषोद्भावनं विना विजयो न भवतीति वितण्डानन्तरमेककार्यकारितया हेत्वाभासानाम् । ततश्चावसरतः कथाङ्गानां छलजातिनिग्रहस्थानानां निग्रहरूपैककार्यकारिणामुपन्यासः । छलजात्योर्निग्रहस्थलान्तःपातित्वेऽपि विशेषेण कथनं प्रधानार्थं तथा च प्रमाणत्वादिकं न पदार्थविभाजकं मिथो विरुद्धत्वाभावात् परं तु मोक्षोपयोगिज्ञानविषयतावच्छेदकं पदार्थविभागश्चार्थतोऽवसेयः । कण्ठतः कणादैरुक्तः । इति प्रथमसूत्रव्याख्या ॥ अस्य सूत्रत्वं च

CC-0. In Public Domain. Digitized by eGangotri

अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः(१) ॥

इति तल्लक्षणादवसेयम् । एतद्ग्रन्थस्यान्वीक्षिकीन्यायतर्कादिशब्दैर्व्यपदेशश्च योगेन रूढ्या च । तत्र श्रवणादनु पश्चादीक्षा आत्ममननमन्वीक्षा तन्निर्वाहिका आन्वीक्षिकीति योगार्थः । अस्यार्थस्य वेदान्तादिगतत्वे ऽपि अत्र न्यायस्य बलवत्त्वेन प्राचुर्येण च भूरिप्रयोगाद् रूढिकल्पनमिति तथा च न्यायो मीमांसा धर्मशास्त्राणीति श्रुतेः । धर्मशास्त्राणि (२)

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥

इति विष्णुपुराणाच्च । न्यायस्य बलवत्त्वं च सिद्धान्तानुसारित्वम् । तथा च कूर्मपुराणम् ।

श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च ॥
श्रुतिस्मृतिसहायं तत् प्रमाणान्तरमुत्तमम् ।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ॥
पूर्वोत्तरविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ।
इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत् ॥ इति ॥

ननु तत्त्वज्ञानस्य कुतो मोक्षहेतुत्वं तत्त्वज्ञानिनामपि मोक्षादर्शनात् । एवं सर्वाण्येव तत्त्वानि ज्ञातानि साक्षात् कारणानि किं वा कानिचित् कारणानि कानिचित् प्रयोजकानि तच्च कारणत्वादि नैयायिकं वाचनिकं वा इत्याकाङ्क्षायामाह ।

(१) अयं श्लोकः पराशरोपपुराणे १८ अध्याये वर्तते ।
(२) धर्मशास्त्राणीति तु सम्पातायातमिति सम्भाव्यते ।

CC-0. In Public Domain. Digitized by eGangotri

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः[1] ॥ २ ॥**

दुःखादीनां मध्ये यद्युत्तरोत्तरं तस्यतस्यापाये ऽभावे सति तदनन्तरस्य तत्तत्सन्निहितपूर्वपूर्वस्याभावादपवर्ग इत्यर्थः । अत्र सतिसप्तम्याः पञ्चम्याश्च प्रयोजकत्वं प्रयोज्यत्वं वाऽर्थः । मिथ्याज्ञानादीनां कारणानामभावस्य प्रयोज्यत्वं कार्याणां दोषादीनामभावे स्वरूपसम्बन्धविशेष एव दण्डाभावाद् घटाभाव इतिप्रतीतिसिद्धवदिति । अथ दुःखाभावप्रयोज्यत्वं नापवर्गे तस्य चरमदुःखध्वंसरूपत्वात् । न चाभेद एव पञ्चम्यर्थ इति वाच्यम् । जन्मापायप्रयोज्यस्य दुःखात्यन्ताभावस्य चरमदुःखध्वंसात्मकमोक्षभेदात् न हि जन्मापायप्रयोज्यो दुःखध्वंस इति चेत् । न । तदनन्तरकालदुःखविरहस्य स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसम्बन्धेन दुःखवदन्यत्ववैशिष्ट्यप्रयोजकतया तादृशविशिष्टदुःखध्वंसरूपमोक्षं प्रत्यपि तस्य प्रयोजकता । अयमभिप्रायः । जीवात्मनो देहादिभिन्नत्वरूपतत्त्वप्रकारेण साक्षात्कारे जाते तेन प्रतिबन्धात् तदात्मदेहाद्यभेदावगाहिज्ञानस्वरूपस्य मिथ्याज्ञानस्य निरासः । न चोत्पन्नतत्त्वज्ञानस्य तद्विरहदशायां मिथ्याज्ञानोत्पत्तौ बाधकाभाव इति वाच्यम् । तादृशतत्त्वज्ञानेन मिथ्याज्ञानजनकीभूतदोषविशेषस्य मिथ्याज्ञानजन्यसंस्कारस्य नाशात् समानविषयकविरोधिज्ञानस्य संस्कारनाशकतायाः क्लृप्तत्वात् । न च तादृशमिथ्याज्ञानजन्यसंस्कार-

---

(१) तदनन्तरापायादपवर्ग इति विश्वनाथपञ्चाननसम्मतः पाठः । परं निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति क्रमप्रतिपादनार्थं चेदं सूत्रं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामित्येवमादीति वार्त्तिकम् ।

रूपवासनाया दोषविशेषतया मिथ्याज्ञानजनकत्वे ऽनवस्थेति वाच्यम्। अनादित्वेन बीजाङ्कुरवत् तद्दोषाभावात्। तथा च तत्त्वज्ञानेन समूलमिथ्याज्ञाने निरस्ते दोषस्य रागद्वेषादेस्तत्कार्यस्यानुत्पत्तिः। रागादिकं प्रति तादृशमिथ्याज्ञानस्य हेतुत्वमन्वयव्यतिरेकाभ्यां ग्राह्यम्। न च तत्त्वज्ञानिनामपि रागादिदर्शनात्। कथं तत्र मिथ्याज्ञानस्य हेतुत्वमिति वाच्यम्। विजातीयरागादिकं प्रत्येव तस्य हेतुत्वात्। अत एव श्रीभगवद्गीतावचनम्। अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इति। अज्ञानेन मिथ्याज्ञानेन आवृतं प्रतिरुद्धं ज्ञानं तत्त्वज्ञानं तेनाज्ञानेन मुह्यन्ति च रागादिमन्तश्च भवन्तीत्यर्थः। अन्यत्र च

यदात्मानं विजानीयादहमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय संसारमनुसंसरेत्॥ इति।

न चैतद्वचनाभ्यां तत्त्वज्ञानाभावस्यैव रागादिहेतुत्वं बोध्यत इति वाच्यम्। तत्त्वज्ञानाभावत्वापेक्षया लघुत्वेन मिथ्याज्ञानत्वे रागादिजनकतावच्छेदकत्वावधारणात्। उत्पन्नतत्त्वज्ञानिनामप्यविरलतत्त्वज्ञानधारायां प्रमाणाभावेन तद्विरहदशायां रागाद्युत्पत्तेः। रागाद्यपाये च तत्कार्यप्रवृत्त्यपाय इति। तथा च रागापाये धर्माधर्मजनकप्रवृत्त्यपाय इति धर्माधर्मानुत्पत्त्या प्राक्तनाप्रारब्धादृष्टस्य तत्त्वज्ञानाधीननाशेन प्रारब्धस्य च भोगेनैव क्षयात् कारणस्यादृष्टस्य विरहे जन्मनो विलक्षणशरीरसम्बन्धस्याभावे तदधीनदुःखस्याप्यभावादपवर्ग इति पर्यवसितम्। न च धर्माधर्मयोः सुखदुःखहेत्वोरभावेनैव सुखदुःखानुत्पत्तिसम्भवात् कथं जन्मापाय इत्युक्तमिति वाच्यम्। जन्मान्तरसम्भवे भोगस्यापि सम्भव इति तदर्थं पापपु-

CC-0. In Public Domain. Digitized by eGangotri

ण्ययोरपि सम्भावना यथा जीवन्मुक्तभोगदर्शनेन प्रारब्धधर्माधर्मकल्पनेतिशङ्कानिरासाय तदुपादानात् । अत एव धर्मनिरासोऽपि धर्मसत्त्वे तदधीनसुखभोगार्थं शरीरसम्बन्धस्वीकारे दुःखप्रसक्तिरपीति। एतेन तत्त्वज्ञानाद्विलक्षणमदृष्टं जन्यते तेन च नित्यसुखसाक्षात्काररूपा मुक्तिर्जन्यत इति भट्टमतमप्यपास्तीकृतम्। तदानीं शरीरविरहेण साक्षात्कारासम्भवात्। न च मुक्तस्य शरीरमपि सम्भवति तदारम्भकपापपुण्ययोरभावात् । न च तत्त्वज्ञानजन्यादृष्टेन शरीरमपि जन्यत इति वाच्यम् । शरीरस्य नित्यत्वासम्भवेन तद्बाधे मुक्तेरपि बाधापत्तेः अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इतिश्रुतिबाधापत्तेश्च वावेत्यव्ययमेवार्थे तथा च अशरीरमेव सन्तमित्यर्थः। वावसन्तमिति यङ्लुगन्तं वा। प्रियाप्रिये सुखदुःखे। एतेन नित्यसुखसाक्षात्कारान्यजन्यज्ञानत्वावच्छिन्नं प्रत्येव शरीरस्य हेतुतया मुक्तादशायां शरीरविरहेऽपि न तदनुपपत्तिः। वस्तुतोऽवच्छिन्नज्ञानत्वावच्छिन्नं प्रति शरीरस्य हेतुत्वान्नानुपपत्तिः नित्यसुखसाक्षात्कारस्यावच्छिन्नत्वविरहेण व्यभिचारानवकाशादिति परास्तम्। तादृशसुखे मानाभावात् । आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमिति श्रुतौ चानन्दपदेन पुंलिङ्गत्वानुपपत्त्या आनन्दपदं सुखवत्परं ब्रह्मपदं जीवपरं रूपपदं स्वरूपपरं मोक्षपदोत्तरसप्तम्या निमित्तत्वमर्थः। तथा च सुखवज्जीवस्वरूपं मोक्षनिमित्तीभूतसाक्षात्कारविषय इति तादृशश्रुतितात्पर्यान्न तद्बलान्नित्यसुखसिद्धिरिति । वस्तुत आनन्दपदं दुःखाभाववत्परमिति मोक्षे मोक्षदशायां प्रतिष्ठितं स्थितं भवतीत्यर्थः। तथा च जीवात्मतत्त्वज्ञानं मिथ्याज्ञाननिवृत्त्यादिद्वारा मोक्षसा-

CC-0. In Public Domain. Digitized by eGangotri

धनं नैयायिकम्। वाचनिकं च आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिश्रुतेः। इतरपदार्थज्ञानं च साक्षात् परम्परयाऽऽत्मतत्त्वज्ञानोपयोगीति बोध्यम्। न च तत्त्वज्ञानिनां कर्मदर्शनान्न कथं धर्माधर्मोत्पत्तिरिति वाच्यम्। विजातीयरागादिजन्यकर्मण एवादृष्टजनकत्वात्। न च रागादिकं विनापि नित्यसन्ध्यावन्दनादेरज्ञानादिनाप्यकरणे पापजननात् कथं पापं प्रति रागादेर्हेतुत्वमिति वाच्यम्। पापविशेष एव तस्य हेतुत्वात्। न च तत्त्वज्ञानिनामपि सन्ध्याद्यकरणे न कथं पापोत्पत्तिरिति वाच्यम्। तत्त्वज्ञानपूर्वमेव नित्यकर्माधिकारात्।

तावत् कर्माणि कुर्वीत न निर्विद्येत यावता।
सत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥

इत्यादिश्रीभागवतीयभगवद्वचनात्। न च तथापि दैववशसम्पन्नगङ्गाजलसंयोगादिना तत्त्वज्ञानिनां पुण्योत्पत्तिरिति वाच्यम्। तादृशपुण्योत्पादेऽपि तेषां तत्त्वज्ञानादेव क्षयात्। ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन इति भगवद्वचनात्। एवं चादृष्टान्तरोत्पादेऽपि न क्षतिः तेषामपि तत्त्वज्ञानादेव क्षयात्। रागादिजन्यादृष्टानां शरीरारम्भकतावच्छेदकावच्छिन्नतया नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीत्यादिवचनात् तत्त्वज्ञानानाश्यतया रागादिनिरासेन तेषां निरासात्। यद्वा नीरागस्य दैववशसम्पन्नगङ्गाजलसंयोगादीनां पापनाशकत्वमेव न तु पुण्यजनकत्वमपीति नव्याः। तत्त्वज्ञानिनां दैववशसम्पन्नकर्मजन्यादृष्टानामुत्पादविनाशकल्पने गौरवान्मिथ्याज्ञानजन्यवासनाया एवादृष्टमात्रहेतुत्वं कल्प्यते तद्विरहादेव तत्त्वज्ञानिनां न धर्माधर्मोत्पत्तिः दोषपदेनाप्यत्र सैवोच्यते

CC-0. In Public Domain. Digitized by eGangotri

ततश्च मिथ्याज्ञानाभावेऽनुत्पादात् प्राक्तनानां तत्त्वज्ञानादेव नाशात् प्रवृत्तिपदं च धर्माधर्मसामान्यपरमित्याहुः । प्रथमप्रकरणमिति[1] । उक्तमिति शेषः । प्रथमपदमभिधेयप्रयोजनपरं प्रकरणं जिज्ञासाधीनवाक्यमधीनत्वं च साक्षात्परम्परासाधारणं तेन द्वितीयादिसूत्रे नाव्याप्तिः तथा च जिज्ञासायां प्रथमपदार्थप्रयोजनाभिधेययोरन्वयात् प्रयोजनाभिधेयजिज्ञासाधीनवाक्यजातमित्यर्थः । समूहत्वं चानेकत्वम् ॥

इति न्यायसूत्रविवरणे प्रयोजनाभिधेयप्रकरणम् ॥

यथोद्दिष्टं क्रमेण लक्षयितुं प्रथमोद्दिष्टप्रमाणानि लक्षयति ।

**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि[2] ॥ ३ ॥**

प्रत्यक्षाद्यन्यतमत्वं प्रमाणलक्षणम् । अथ प्रशब्दसमभिव्याहृतमाधातुना तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टानुभवो बोध्यते स्मृतौ तान्त्रिकाणां प्रमाव्यवहाराभावात् ज्ञानवाचिनापि माधातुनाऽनुभवो लक्ष्यते तत्करणं च प्रमाणमिति प्रमाकरणत्वमेव लक्षणम् । प्रत्यक्षेत्यादि विभागपरमिति व्याख्यानं सम्यगिति चेत् । न । कानि प्रमाणानीति जिज्ञासायां प्रमाणानीत्युत्तरासङ्गतेः । प्रमाणानीति बहुवचनं प्रत्यक्षादीनां विजातीयप्रमाकरणताभेदलाभाय । यद्यपि तत्पदार्थभेदेन तद्वति तत्प्रकारकत्वस्याननुगततया प्रमापदस्य नानार्थत्वात् कथं प्रमाणपदेन सकलप्रमाणलाभः तथापि प्रमाणपदेन प्रमापदप्रवृत्तिनिमित्त-

(१) एतद्व्याख्यानुमते इति प्रथमप्रकरणमिति सूत्रपाठग्रन्थे वर्तत इति गम्यते। एवमग्रेऽपि ।

(२) यथोद्दिष्टत्रिभागद्वारेण सूत्रं प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीतीति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

त्वेन प्रमात्वानामनुगमात्। शक्तिविशेषसम्बन्धेन प्रमापदवत्करणत्वं वा प्रमाणत्वं तेन प्रमापदप्रवृत्तिनिमित्तस्याप्येकस्यासत्त्वेन तद्रूपेणानुगमाभावे ऽपि न क्षतिः। प्रमाणव्यवहारविषयत्वं वा प्रमाणत्वमिह विवक्षितमिति प्रत्यक्षादिविशेषोपादानात् प्रमाणविभागोऽपि सूचितः॥

तत्र क्रमेण विशेषलक्षणं कर्तुं प्रत्यक्षलक्षणमाह।

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्[१] ॥ ४ ॥**

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति प्रत्यक्षसामान्यलक्षणम्। तत्रात्ममनःसंयोगजन्यसुखादिवारणाय ज्ञानमिति। तच्चाव्यभिचारि चेत् प्रत्यक्षप्रमेत्यर्थः। अव्यभिचारित्वं भ्रमसामान्यभिन्नत्वं आंशिकभ्रमस्य लक्ष्यत्वे स्वानुयोगिवृत्तित्वस्वप्रतियोगिनिष्ठस्वावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन यत्किञ्चित्सम्बन्धविशिष्टविशेष्यतासंसर्गानवच्छिन्नविषयतान्यतरवत्त्वं संसर्गानवच्छिन्नत्वं तु सांसर्गिकविषयत्वानिरूपितत्वमतः सर्वांशे भ्रमात्मकज्ञानीयमुख्यविशेष्यतामादाय न दोषः। संसर्गानवच्छिन्नेत्यादिकं निर्विकल्पकसाधारण्याय। तच्च प्रमात्मकप्रत्यक्षं द्विविधमव्यपदेश्यमतीन्द्रियं निर्विकल्पकात्मकमव्यभिचारि व्यवसायात्मकं व्यवसायो विशिष्टप्रत्यक्षम्। अत्राव्यभिचारित्वं निरुक्तोभयसम्बन्धेन सम्बन्धविशिष्टविशेष्यतावत्त्वमिति। यद्यपि आत्ममनःसंयोगरूपेन्द्रियार्थसन्निकर्षजन्यत्वाज् जन्यज्ञानमात्रे लक्षणमिदं गतमगतं चेश्वरप्रत्यक्षे। न चात्र ज्ञानपदं साक्षात्करोमीतिप्रतीतिसिद्धसाक्षात्कारत्वरूपजात्यवच्छिन्नपरमिति वाच्यम्। तथा

(१) इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादि सूत्रमिति वार्त्तिकम्।

CC-0. In Public Domain. Digitized by eGangotri

सति विशेषणदलवैयर्थ्यात् तथापि विषयताप्रत्यासत्त्यवच्छिन्नजन्यत्वस्य विवक्षणात् । ईश्वरप्रत्यक्षं तु न लक्ष्यमिति । ननु इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यत्वमेव लक्षणमस्तु किं सन्निकर्षघटनयेति । न चेन्द्रियत्वं न जातिः तेजस्त्वादिना साङ्कर्यात् तथा चानुगतेन्द्रियत्वस्याभावात् कथं तेन हेतुतेति वाच्यम् । शब्देतरोद्भूतविशेषगुणशून्यत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वस्येन्द्रियत्वरूपत्वात् । तत्रात्मादिवारणाय सत्यन्तम् । श्रोत्रसङ्ग्रहाय शब्देतरेति । रूपस्य चक्षुषि सत्त्वादुद्भूतेति । उद्भूतत्वं न जातिः शुक्लत्वादिना सङ्करात् । न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम् । उद्भूतरूपत्वादिना चाक्षुषादिजनकतानुपपत्तेः । किं तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावकूटश्चोद्भूतत्वं तच्च संयोगादावपि संयोगादिश्चक्षुरादावस्तीति विशेषेति । कालादिवारणाय विशेष्यदलं कालादे रूपाद्यभावप्रत्यक्षे सन्निकर्षघटकचक्षुःसंयोगाश्रयस्य कालादेर्वारणाय मनःपदं ज्ञानकारणदलं चेति चेत् । न । एवमिन्द्रियत्वस्यानुगतत्वे ऽपि तेन प्रत्यक्षहेतुतायाः सर्ववादिसिद्धत्वाभावादिन्द्रियत्वेन हेतुत्वमते ऽपि तद्धेतुतायाः सन्निकर्षद्वारैवेति सूचनाय सन्निकर्षजन्यत्वघटितं लक्षणमाहृतमिति । न च प्रमाणप्रस्तावे प्रमालक्षणमर्थान्तरग्रस्तमिति वाच्यम् । प्रत्यक्षप्रमालक्षणे कृते तत्करणत्वस्य प्रत्यक्षप्रमाणलक्षणस्य स्फुटत्वेन तात्पर्यात् । अथवा इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं यत इत्यध्याहारेणैव तादृशार्थलाभात् । वस्तुतः प्रत्यक्षानुमानेत्यादिप्रमाणलक्षणे प्रत्यक्षपदं प्रत्यक्षप्रमाकरणपरं तत्र प्रत्यक्षप्रमायां निरूपितायां तत्करणत्वस्य सुग्रहत्वात् सैव निरूपिता प्रत्यक्षपदस्य अक्षमिन्द्रियं प्रति जातमिति

CC-0. In Public Domain. Digitized by eGangotri

व्युत्पत्त्या प्रमापरत्वे ऽपि लक्षणया प्रमाणबोधकत्वादायुर्घृतमितिवत् । अथ तथापि सन्निकर्षत्वस्याननुगतत्वेन संयोगादिभेदेन लौकिकसन्निकर्षाणामलौकिकसन्निकर्षाणां ज्ञानलक्षणादीनां चानुगतानतिप्रसक्तधर्मस्य दुर्वचत्वादन्यतमत्वादिनानुगमसम्भवे ऽपि गौरवम् । एवमिन्द्रियत्वमेव प्रत्यक्षप्रमाणलक्षणमस्तु कृतमधिकेनेति तथापि प्रमाणान्तरतानियामकं प्रमावैजात्यमिति सूचनाय प्रत्यक्षप्रमाकरणत्वमेव तत्प्रमाणलक्षणं प्रागेवाभिहितमिदानीं प्रसङ्गतः प्रमालक्षणमिन्द्रियत्वावच्छिन्नजन्यत्वरूपमिति तत्र तादृशजन्यताविशेषलाभायैव सन्निकर्षपदम् । साक्षात्कारत्वस्य लक्षणत्वसम्भवे ऽपि तस्य लक्षणान्तरत्वादिन्द्रियाणां प्रमाणस्वरूपताज्ञापनायैव प्रमाणतैक्यज्ञापनाय वा गुर्वपि तथा लक्षणं प्रदर्शितमिति भावः । केचित्तु इन्द्रियार्थसन्निकर्षेत्यनेन ज्ञानाकरणकं ज्ञानं प्रत्यक्षमित्यर्थो विवक्षणीयः । न च विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षविशेषे ऽव्याप्तिस्तस्य विशेषणतावच्छेदकात्मकविशेषणज्ञानजन्यविशेषणतावच्छेदकप्रकारकविशेषणज्ञानजन्यत्वेन ज्ञानकरणकत्वादिति वाच्यम् । ज्ञानाकरणकज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्यैव लक्षणत्वेन विवक्षणीयत्वात् तथा च तादृशप्रत्यक्षत्वमादाय सर्वत्र लक्षणगमणादिति प्राहुः । सविकल्पकमपि द्विविधं संस्कारोद्भवतदनुद्भवभेदादित्याह । संस्कारोद्भवा प्रत्यभिज्ञा [१] ॥

अनुमानं लक्षयति विभजते च ।

**अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतो दृष्टं च[२] ॥ ५ ॥**

(१) एतन्मते इदमपि सूत्रम् । क्वचित् सूत्रपाठपुस्तके ऽपीदं वर्तते ।

(२) प्रत्यक्षलक्षणानन्तरमनुमानलक्षणपरं सूत्रं पठति । अथ तत्पूर्वकं त्रिविधमनुमानमितीति तात्पर्यटीका ।

अथशब्द आनन्तर्यार्थः । तेन प्रत्यक्षनिरूपणस्यानुमाननिरूपणहेतुत्वं लभ्यत इति प्रत्यक्षमादौ निरूपितमिति सूचितम् । प्रत्यक्षपूर्वकत्वेनानुमाननिरूपणे प्रत्यक्षज्ञानस्य विशेषणज्ञानमुद्रयाऽपेक्षितत्वात् । अत्र तत्पदं प्रत्यक्षप्रमाणपरम् । पूर्वपदं कारणवाचि । अनुमानमनुमितिकरणम् । प्रत्यक्षजन्यत्वेन निरूपणं च ज्ञायमानलिङ्गस्य करणतानिराकरणाय । इतरभेदानुमापकं त्वनुमितिकरणत्वमात्रम् । प्रत्यक्षजन्यत्वं च प्रत्यक्षमात्रवृत्तिधर्मावच्छिन्नकारणताप्रतियोगिककार्यत्वं तेन कालविधया प्रत्यक्षजन्यतामादाय धूमादिहेतूनामपि तज्जन्यतया न लिङ्गकरणतावादिमतानिरासः । न वा शाब्दाद्यात्मकव्याप्तिज्ञानासङ्ग्रहः तत्रापि मनस्त्वावच्छिन्नजनकताप्रतियोगिकजन्यतासत्त्वात् । वस्तुतस्तु उपायाभावाद् व्याप्तिनिश्चय एव न सम्भवति कुतस्तस्य प्रामाण्यमिति चार्वाकशङ्कानिराकरणाय तत्पूर्वकत्वेन निरूपणम् । त्रैविध्यमाह । पूर्ववदित्यादि । पूर्वं कारणं तद्वद् व्याप्यतया तद्विषयकं ज्ञानं यथा चिकीर्षादिना प्रवृत्त्यनुमानम् । शेषः कार्यं तद्वद् व्याप्यतया तद्विषयकं ज्ञानं यथा धूमादिना वह्न्यनुमानम् । समान्यतो दृष्टं कार्यकारणभिन्नलिङ्गविषयकं व्याप्तिज्ञानं यथा पृथिवीत्वादिना द्रव्यत्वानुमानम् । अथवा दृष्टमित्यस्य सर्वत्रान्वयः तथा च पूर्ववद् दृष्टमन्वयसहचारेण दृष्टमन्वयसहचारमात्रजन्यव्याप्तिज्ञानं केवलान्वय्यनुमानमित्यर्थः । शेषवद् दृष्टं व्यतिरेकसहचारमात्रजन्यव्याप्तिज्ञानं केवलव्यतिरेकीत्यर्थः । सामान्यतो दृष्टं तदुभयसहचारग्रहजन्यं व्याप्तिज्ञानमन्वयव्यतिरेकीत्यर्थः । केचित्तु तत्पूर्वकमित्यत्र तत्पदं सहचारप्रत्यक्षपरं तत्र प्रत्यक्षत्वमिन्द्रियजन्यज्ञान-

CC-0. In Public Domain. Digitized by eGangotri

त्वं तथा च सहचारविषयकेन्द्रियजन्यज्ञानजन्यमनुमानमित्यर्थ इत्याहुः। अन्ये तु तत्पदं प्रत्यक्षविशेषपरामर्शकं विशेषत्वं च व्याप्तिपक्षधर्मताविषयकत्वं तेन व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमानं चानुमितिरिति प्रमालक्षणं यत इत्यध्याहारेण च करणमवसेयम् ॥

क्रमप्राप्तमुपमानं निरूपयति।

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्[1] ॥ ६ ॥**

प्रसिद्धस्य पूर्वप्रमितस्य गवादेः साधर्म्यात् सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिकरणं यत् सादृश्यज्ञानं तदुपमानं सिद्धिश्चोपमितिः। अथवा प्रसिद्धात् गवयादौ ज्ञातात् साधर्म्यात् गवादिसादृश्यात् साध्यसाधनमित्यर्थः। ननु सादृश्यज्ञानमुपमानमित्येवकथं नोक्तमिति चेत् तत्फलस्यानुमानभिन्नस्योपमितिरूपस्य प्रदर्शनाय तथाभिधानात्। तत्प्रदर्शनं च कणादादीनामनुमानान्तर्गतत्वमेव मतं तन्निराकरणाय। तथाहि केनचिद् ग्रामीणेन कीदृग्गवय इति प्रश्ने कृते गोसदृशो गवयपदवाच्य इत्यारण्यकेन केनचिदुत्तरिते ततो ग्रामीणोऽरण्ये कदाचिद् गवयदर्शनेनायं गवयो गोसदृश इति निश्चित्य गवयो गवयपदवाच्य इत्यवधारयति। तादृशावधारणं हि न प्रत्यक्षं गवयपदवाच्यत्वस्य चक्षुराद्ययोग्यत्वात्। नापि शाब्दः शब्दादेरभावात्। नाप्यनुमितिः व्याप्यतया लिङ्गानुपस्थितेः तथानुव्यवसायाभावाच्च। तथा चातिरिक्तप्रमासिद्धौ तत्करणमप्यतिरिक्तमिति सिद्धमुपमानं प्रमाणान्तरम्। तत्र च सादृश्यज्ञानं करणं

(१) अथोपमानम्। प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति। सूत्रार्थः पूर्ववदिति वार्त्तिकम्। अथोपमानमिति भाष्यम्। सूत्रं पठति। प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति तात्पर्यटीकाकृता सूत्रभाष्यविभागः कृतः।

CC-0. In Public Domain. Digitized by eGangotri

गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्य स्मरणं व्यापारो गवयो गवयपदवाच्य इत्युपमितिः फलम् । अयं गवयपदवाच्य इति तु न फलं तथात्वे गवयत्वस्य शक्यतावच्छेदकत्वालाभादिदन्त्वादेरननुगमाद् गोसादृश्यादेर्गौरवाच्च गवयत्वमेव शक्यतावच्छेदकं वाच्यमिति । एवं दीर्घग्रीवत्वाद्यसाधारणधर्मज्ञानादुष्ट्रे करभपदवाच्यत्वज्ञानात् तादृशधर्मज्ञानमप्युपमानमिति टीकाकृतः । तत्र च धिक् करभमतिदीर्घग्रीवं चपलतरोष्ठं कठोरकण्टकाशिनं पशूनामपसदमित्यादिवाक्यार्थस्मरणं व्यापार इति । एवं शक्त्यतिरिक्तमप्युपमानविषय इति भाव्यम् । तथाहि का ओषधी ज्वरं हन्तीतिप्रश्ने दशमूलसमौषधी ज्वरं हन्तीतिवाक्यार्थज्ञानाज् ज्वरहरणकर्तृत्वमुपमित्या विषयीक्रियत इत्यादि । उपमाने गवादिपदशक्त्याद्यनुमानापेक्षणादनुमानोपजीवकत्वमेव सङ्गतिरिति बोध्यम् ॥ ६ ॥

शब्दं लक्षयति विभजते च ।

आप्तोपदेशः शब्दः(१) ॥ ७ ॥

स चायं द्विविधो दृष्टादृष्टार्थभेदात्(२) ॥ ८ ॥

शब्द इति लक्ष्यनिर्देशः । शब्द्यते व्यज्यते शाब्दबोधविषयीक्रियतेऽर्थोऽनेनेति व्युत्पत्त्या शाब्दप्रमाकरणं तदर्थः । शाब्दत्वं चेममर्थं शाब्दयामीत्याद्यनुव्यवसायसिद्धजातिविशेषः । आप्तोपदेश इति लक्षणम् । आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान् तदुपदेशः प्रकृतवाक्यार्थबुबोधयि-

(१) अथ शब्दः । आप्तोपदेशः शब्द इतीति वार्त्तिकम् । अथ शब्द इति भाष्यम् । लक्षणसूत्रं पठति । आप्तोपदेशः शब्द इति तात्पर्यटीकायां सूत्रभाष्यविभागो वर्णितः ।

(२) स द्विविधो दृष्टादृष्टार्थत्वादिति तात्पर्यटीकासम्मतः पाठः । स द्विविधो दृष्टादृष्टार्थत्वादितिसूत्रस्य तात्पर्यमाह । नियमार्थमिति तात्पर्यटीका ।



CC-0. In Public Domain. Digitized by eGangotri

षाप्रयुक्तवाक्यम्। अत्र शुकादिवाक्ये भ्रान्तप्रतारकवाक्ये चाव्याप्तिरिति व्याख्यान्तरम्। शब्दः प्रमाणशब्द इत्यर्थः। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्युपन्यासात्। आप्तोपदेश इति। आप्तो यथार्थशाब्दज्ञानकरणज्ञानविषयः तथाविधो य उपदेशः शब्द इत्यर्थः। अथवा आप्तो यथार्थ उपदेशः शाब्दबोधो यस्मादिति व्युत्पत्त्या यथार्थशाब्दज्ञानजनकवाक्यमित्यर्थः। लक्ष्ये प्रमाणपदं प्रमाणव्यवहारविषयपरं न तु यथार्थज्ञानकरणपरं लक्षणाविशेषप्रसङ्गादिति ॥ ७ ॥

स चायमिति। स प्रमाणशब्दः। तत्र दृष्टार्थः शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमितिविषयार्थकः। स च गेहे घटोऽस्तीत्यादिलौकिकशब्दः। अदृष्टार्थकश्च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकः। यथा वेदः स्मृत्यादिश्च। वेदत्वं च तादृशप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्। दृष्टार्थकवाक्यवारणाय सत्यन्तम्। स्मृतिभारतादिवाक्यविशेषवारणाय विशेष्यदलम्। शब्दोपजीविप्रमाणं च वेदादिशब्दमुपजीव्य जातमनुमानादि। गवयो गवयपदवाच्य इत्युपमितिश्च शब्दविषयकतया शाब्दप्रमाकरणमित्युपमानोपजीवकतया शाब्दप्रमाकरणनिरूपणम् ॥ ८ ॥

उपसंहरति। समाप्तं प्रमाणप्रकरणम् ॥

इति प्रमाणलक्षणप्रकरणविवरणम् ॥

प्रमाविषयत्वमेव प्रमेयत्वमिति लक्षणस्य स्फुटतया तदुपेक्ष्य तद्विभजते।

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्**(१) ॥ ९ ॥

(१) एतदर्थप्रकाशनायात्मादिसूत्रमिति वार्त्तिकम्।

CC-0. In Public Domain. Digitized by eGangotri

प्रमेयत्वमेकं सर्वत्रानुगतप्रतीतिबलात् सिद्धमित्येकवचननिर्देशः । तदर्थैकत्वस्य पदार्थतावच्छेदके प्रमेयत्वेऽन्वयः । यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणपदयोः समानवचनत्वनियम इति प्रमेयपदोत्तरमेकवचनं न विरुद्धम् । अत एव वेदाः प्रमाणं पुरूरवो माद्रवसौ विश्वे देवा इत्यादिप्रयोगा इति । आत्मत्वादिकं न प्रमेयमात्रविभाजकं संयोगादीनामपि प्रमेयत्वाद् द्वादशधेति विभागानुपपत्तेः । किं तु मोक्षहेतुप्रमेयविभाजकम् । तथा च तुशब्दः पुनरर्थे । एते पुनः प्रमेयं प्रकर्षेण मेयम् । प्रकर्षश्च मोक्षहेतुज्ञानविषयत्वम् । अथवा तुशब्दश्चार्थे । तथा चोक्तानुक्तसमुच्चयलाभः । एवं च प्रमेयमात्रस्य साक्षात् परम्परया वा मोक्षप्रयोजकत्वेऽपि न क्षतिः । आत्मादीनां च प्राधान्येन विशेषनिर्देशः । तत्रापि पूर्वपूर्वप्राधान्यात् पूर्वपूर्वक्रमनिर्देशः ॥ ९ ॥

प्रथमोद्दिष्टमात्मानं निरूपयति ।

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्**[१] ॥ १० ॥

आत्मनो जीवस्यात्मत्वेन जात्यानुगतत्वादेकवचनम् । लिङ्गं व्यञ्जकमनुमापकमिति यावत् । अनुमापकत्वं च निरूपकतावदनुमितिजनकतावच्छेदकविषयतावत्त्वसम्बन्धेनानुमितिकरणतावत्त्वम् । तत्करणताया एकत्वाभिप्रायेण लिङ्गमित्येकवचनम् । इच्छादिकं यत्किञ्चिद्द्रव्यवृ-

(१) लिङ्गमितीत्याकारः पाठो बहुषु सूत्रपुस्तकेषु दृश्यते । जयन्तकृतवृत्तिदर्शनात् न्यायसूचीनिबन्धदर्शनाच्च इतिरहितः सूत्रपाठो गम्यते । आत्मनः समानासमानजातीयविशेषणार्थं सूत्रम् । इच्छेति । इति वार्त्तिकम् ।

त्ति गुणादित्यादितादात्म्यसंसर्गेणेच्छादिरूपगुणादिहेतुनात्मसिद्धिः। तत्र चेच्छादि न शरीरवृत्ति मृतशरीरे तदभावाद् बाल्ये ऽनुभूतस्य यौवने ऽस्मरणप्रसङ्गाच्च बाल्ययौवनशरीरयोर्भेदादेकत्रानुभूतस्यान्यत्र स्मरणे ऽतिप्रसङ्गाच्च। नापि चक्षुरादिवृत्ति तदुपघाते ऽपि स्मरणदर्शनात्। नापि मनोवृत्ति इच्छादेरप्रत्यक्षत्वापत्तेः। आश्रयस्यातीन्द्रियत्व आश्रितस्य योग्यत्वासम्भवात्। भूतानां च पञ्चानामिच्छादिबाधस्य स्फुटत्वाच्चातिरिक्तद्रव्यवृत्तित्वसिद्धिस्तदेव द्रव्यमात्मेति प्राञ्चः। अत्रात्मन इदन्त्वास्पदत्वेन प्रत्यक्षसिद्धत्वादनुमानप्रदर्शनमयुक्तम्। न चात्मनोऽसाधारणधर्मत्वेनेच्छादिप्रदर्शनं तथा सति धर्माधर्मयोरपि प्रदर्शनापत्तेः। एतेन लिङ्गं लक्षणम्। न च लिङ्गमित्येकवचनेन मिलितानामेव लक्षणत्वं प्रतीयते तच्चायुक्तमेकैकस्यैव लक्षणत्वसम्भवादिति वाच्यम्। किं लक्षणमित्याकाङ्क्षायामिच्छादीनामभिधानान्मिलितं लक्षणमिति प्रयोजकाभावात्। तथा च प्रत्येकमेव लक्षणम्। अत्र ज्ञानेच्छाप्रयत्नानामात्ममात्रस्य लक्षणत्वं सुखदुःखद्वेषाणां संसारिणो लक्षणत्वमिति प्रत्युक्तम्। अत्रोच्यते। लिङ्गं लौकिकप्रत्यक्षविषयतायां विषयविधया नियामकम्। तथा चेच्छादिप्रकारेणैवात्मनो लौकिकमानसप्रत्यक्षविषयतेति बोध्यम्। लक्षणं तु ज्ञानादिमत्त्वं स्फुटमिति भावः॥ १०॥

क्रमप्राप्तं शरीरं लक्षयति।

**चेष्टेन्द्रियार्थाश्रयः शरीरम्**[1] ॥ ११ ॥

द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यत इतिन्यायाच्चेष्टादिपदोत्तराश्रयपदस्य प्रत्येकमन्वयाच्चेष्टा-

(१) शरीरं लक्षयितुं सूत्र चेष्टेत्यादीति तात्पर्यटीका।

आयत्वादिलक्षणत्रये तात्पर्यम् । चेष्टात्वं च प्रयत्नजन्यतावच्छेदको जातिविशेषः । शरीरावयववारणायान्त्यावयवित्वेन विशेषणीयम् । इन्द्रियाश्रयत्वं च चक्षुर्गोलकाद्यवच्छेदेन संयोगसम्बन्धेन चक्षुष्मान् देवदत्तोऽयमित्यादिप्रतीतेः । देवदत्तत्वादेः शरीरवृत्तिजातित्वात् । अर्थाश्रयत्वमित्यत्रार्थशब्दो न रूपादिपरस्तदाश्रयत्वस्य घटादावतिव्याप्तेः । किं तु सुखदुःखान्यतरपरः । अत एव भाष्यम् । यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते स एषामाश्रयस्तच्छरीरमिति । न च सुखाश्रयत्वं दुःखाश्रयत्वमिति प्रत्येकं लक्षणम् । सुखाश्रयत्वस्य नारकिशरीरे दुःखाश्रयत्वस्य स्वर्गिशरीरे व्यभिचारात् । स्वर्गिशरीरे पातभीरुत्वनिबन्धनदुःखस्य नारकिशरीरे भाविसुखसम्भावनया सुखस्य स्वीकारे तादृशलक्षणद्वयमपि सम्भवति । वस्तुतोऽर्थपदमत्रात्मविशेषगुणपरं तेन ज्ञानाद्याश्रयत्वमपि लक्षणं भवतीति । आश्रयत्वं चावच्छेदकतासम्बन्धेन । वृक्षादौ च सुखादिस्वीकारान्नाव्याप्तिः । न च रामकृष्णादिशरीरे सुखादेरवच्छेदकत्वानङ्गीकारादव्याप्तिरिति वाच्यम् । एतल्लक्षणालक्ष्यत्वात् । सर्वसाधारणलक्षणं तु चेष्टावदन्त्यावयवित्वादिकमेव । वस्तुतस्तु चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमेवात्र तात्पर्यविषयीभूतम् । तथा च तादृशरामत्वकृष्णत्वादिजातिमादाय तत्र लक्षणसङ्गतिः । कल्पभेदेन नरसिंहशरीराणां नानात्वात् तद्वृत्तिनरसिंहत्वजातिमादाय तादृशशरीरे लक्षणसमन्वयः । अत एव चेष्टानाश्रयखण्डशरीरविशेषस्वीकारेऽपि तत्र नाव्याप्तिस्तत्रापि चैत्रत्वमनुष्यत्वादिजातिमादाय लक्षणसङ्गतेरिति । यद्वा अर्थपदं रूपादिपञ्चकसमुदायपरम् । घटादौ शब्दाश्रयत्वाभावान्नातिव्याप्तिः । शरीरस्य

CC-0. In Public Domain. Digitized by eGangotri

पाञ्चभौतिकत्वाद्रूपादिसमुदायवत्त्वाल्लक्षणसङ्गतिः। न च शरीरस्यापि पाञ्चभौतिकत्वमग्रे निरसनीयमिति कथं तादृशसमुदायवत्त्वं तस्येति वाच्यम्। समवायस्वसमवायिनिमित्तकत्वान्यतरसम्बन्धेन समुदायवत्त्वस्य विवक्षणात् पार्थिवाद्येकतरस्य भूतान्तराणां समवायिकारणत्वाभावेऽपि निमित्ततास्वीकारादिति। अत्र देहात्मबुद्धिलक्षणमिथ्याज्ञानमेव संसारनिदानं तन्निरासे च मोक्ष इति प्रधानतया तयोरादावुपन्यासः। एवं चेष्टादीनामपीति बोध्यम् ॥ ११ ॥

इन्द्रियाणि विभजते लक्षयति च।

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः(१) ॥ १२ ॥**

इन्द्रियत्वस्यानुगतजातेरभावादिन्द्रियाणीति बहुवचनम्। अथ घ्राणाद्यन्यतमत्वमिन्द्रियलक्षणमित्यत्रास्य न तात्पर्यं मनसोऽपीन्द्रियत्वात्। न च घ्राणादीनामुपलक्षणत्वेन मनसोऽपि ग्रहणमिति वाच्यम्। भूतेभ्य इत्यस्यासङ्गत्यापत्तेः। नापि बहिरिन्द्रियलक्षणमिदं बहिरिन्द्रियत्वेन प्रागनुपन्यासात् तल्लक्षणाकाङ्क्षाविरहात्। एवं पञ्चधा विभागोऽप्यनुपपन्नो मनसः षष्ठत्वादिति। ननु मनसो नेन्द्रियत्वं तेन सूत्रे इन्द्रियमनसोः स्वातन्त्र्येण कीर्तनम्। न च मनःषष्ठानीन्द्रियाणीतिभगवद्गीतावचनासङ्गतिरिति वाच्यम्। वेदानध्यापयामास महाभारतपञ्चमानित्यत्र यथा अवेदेनापि महाभारतेन वेदपञ्चसंख्यापूरणं तथात्राप्यनिन्द्रियेणापि मनसेन्द्रियषष्ठसंख्यापूरणात्। नत्वत्रा-

(१) घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति सूत्रम्। लक्षणसूत्राणि समानासमानजातीयविशेषणार्थानि सर्वाणीति सूत्रार्थो द्रष्टव्य इति वार्त्तिकम्।

6273.

CC-0. In Public Domain. Digitized by eGangotri

णामहं शशीतिवदिन्द्रियाणां मनश्चास्मीति भगवद्वाक्य-
मिति चेत् । न । सुखादिसाक्षात्कारजनकतयेन्द्रियत्वेन
मनसः कल्पनात् । न च सुखादिकं साक्षात्करोमीतिप्रती-
तिसिद्धं प्रत्यक्षत्वं सुखादिग्रहनिष्ठं नेन्द्रियजन्यत्वसाधक-
मप्रयोजकत्वादिति वाच्यम् । इन्द्रियार्थसन्निकर्षोत्पन्नं
ज्ञानमित्यादिप्रागुक्तप्रत्यक्षलक्षणसूत्रविरोधादिति चेत् ।
अत्रोच्यते । आत्मेत्यादिसूत्रे इन्द्रियपदस्य बहिरिन्द्रियप-
रत्वं प्रसिद्धत्वान्मनसस्तदिन्द्रियत्वस्य च सर्ववादिसिद्ध-
त्वाभावेन सप्रमाणं पृथक् तदुपन्यस्तम् । गन्धादीनां तदर्थ-
त्वेन कथनादिन्द्रियपदस्य बहिरिन्द्रियपरत्वं स्फुटमेव ।
शरीरधर्मत्वेन तन्निरूपणानन्तरमिन्द्रियनिरूपणम् । तद-
धीनज्ञेयतया च तदनन्तरमर्थनिरूपणम् । आत्मादिजन्य-
तया च ततो बुद्धिनिरूपणम् । बुद्धौ सिद्धायामेव तदयौ-
गपद्यसाधकतया तदसमवायिकारणसंयोगाश्रयतया च
सिद्धिरिति ततस्तन्निरूपणम् । एतेषां कार्यतया प्रवृत्तिनिरू-
पणम् । ततो धर्मादिजनने सहकारितया दोषनिरूपणम् ।
ततः प्रेत्यभाव इति तन्निरूपणम् । ततः सुखदुःखे तत्र च
सुखस्य रागविषयतया तत्क्रमेण तयोर्निरूपणम् । एवं रीत्या
संसारस्तत्त्वज्ञाने च मोक्ष इति ततस्तन्निरूपणमिति ।
केचित्तु मनसो नेन्द्रियत्वं प्रत्यक्षलक्षणं तु जातिघटनया
सर्वत्र नेयमित्याहुः । घ्राणत्वादयस्तु जातिविशेषा घ्राण-
जादिप्रत्यक्षविशेषजनकतावच्छेदकतया सिद्धाः । श्रोत्रत्वं
तु कर्णशष्कुल्यवच्छिन्ननभस्त्वम् । घ्राणादयो नित्या जन्या
वा पृथिव्यादिभिन्ना वेत्यपेक्षायामाह । भूतेभ्य इति ।
श्रोत्रस्याजन्यत्वात् पञ्चम्यर्थस्य जन्यत्वस्य बाधः । न च
कर्णशष्कुल्या जन्यत्वादेव तद्व्यपदेश इति वाच्यम् । तथापि

CC-0. In Public Domain. Digitized by eGangotri

जन्यत्वस्य श्रोत्रे ऽन्वयासङ्गतेरिति चेत् । न । अत्राभेदे पञ्चम्या विधानात् ॥ १२ ॥

भूतान्येव कानीत्यपेक्षायामाह ।

**पृथिव्यापस्तेजो वायुराकाशमिति भूतानि**[1] ॥ १३ ॥

आरम्भे परस्परानपेक्षत्वसूचनाया समासकरणं वायवाकाशयोरप्रत्यक्षत्वसूचनाय वाऽसमासकरणम् । भूतत्वं तु बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं पृथिव्यादिगुणत्वेनेन्द्रियार्थकथनादवसितम् । पृथिवीत्वादयस्तु जातिविशेषाः । आकाशत्वं तु शब्दाश्रयत्वमखण्डोपाधिर्वेति ॥ १३ ॥

क्रमप्राप्तमर्थं विभजते लक्षयति च ।

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः**[2] ॥ १४ ॥

ग्राह्यत्वरूपमर्थत्वं वस्तुमात्रस्येति कथं गन्धादीनां पञ्चानामेव तत्त्वमित्यत आह । तदर्था इति । तेषामिन्द्रियाणामर्था विषया गुणाः । विषयता च व्यापारानुबन्धिनी । एवमुद्देशे ऽपि अर्थपदमिन्द्रियार्थपरं बोध्यमिन्द्रियपदं च बहिरिन्द्रियपरमित्युक्तमेव । बहिरिन्द्रियविषया द्रव्यादयोऽन्ये ऽपि वर्तन्ते तथाप्येकैकबहिरिन्द्रियग्राह्यगुणाः क्रमेण गन्धादय इत्यत्र तात्पर्यम् । एतेषां निरूपणं च प्रवृत्तिमूलप्रत्यक्षविषयत्वेन संसारमूलतयेति । पृथिव्यादिगुणा इति ।

---

(१) न्यायसूचीनिबन्धदर्शनादस्य सूत्रत्वमिति निश्चीयते । तत्र भूतपदार्थाज्ञाने भूतेभ्य इत्यनर्थक्रमतः प्रसङ्गाद् भूतानि दर्शयति । पृथिव्यापस्तेजो वायुराकाशमिति भूतानीति न्यायसूत्रटीकान्यायतत्त्वालोकीयवाचस्पतिमिश्रलेखदर्शनाच्च । एतेनाधुनिकानां केषाञ्चिद् भाष्यमेवेदं न सूत्रमिति प्रलापोऽपास्तः ।

(२) गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्था इत्येतत् सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

पृथिव्यादीनां यथायोगं गुणा इत्यर्थः । एतत्कथनं च गन्धादीनां तत्त्वानां सांख्यवेदान्तमते पृथिव्यादिकारणत्वं तद्गुणत्वं चेतिनिरासाय । लक्षणं तु गन्धाद्यन्यतमत्वम् । अथवा अधुना विभागमात्रे तात्पर्यं लक्षणं तूद्देश एव ज्ञेयम् । यथा बहिरिन्द्रियद्वयाग्राह्यत्वे सति बहिरिन्द्रियग्राह्यगुणत्वमिति ॥ १४ ॥

बुद्धिं लक्षयितुं स्वरूपमाह ।

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्** (१) ॥ १५ ॥

उपलब्ध्यात्मकं ज्ञानं बुद्धिरित्यनर्थान्तरम् । बुद्ध्यादिपदत्रयमेकार्थकं न तु सांख्यमतवन्महत्तत्त्वाख्यं बुद्धितत्त्वं ज्ञानपरिणामीति व्यक्तीभविष्यति चेदमुपरिष्टात् । उपलब्धिस्वरूपत्वकथनाज् ज्ञानपदस्य करणव्युत्पत्तिभ्रमनिरासः । लक्षणं तु जानामीत्यादिप्रतीतिसिद्धज्ञानत्वजातिरेव स्फुटमिति भावः ॥ १५ ॥

मनो लक्षयति ।

**युगपज्ज्ञानानुपपत्तिर्मनसो लिङ्गम्** (२) ॥ १६ ॥

युगपदेककाले । एकात्मनीति पूरणीयम् । ज्ञानानामनुत्पत्तिर्यतः स एव धर्मो मनसो लिङ्गमितरभेदसाधकमित्यर्थः । स च धर्मः प्रत्यक्षासाधारणकारणेन्द्रियसंयोगाश्रयाणुत्वम् । एतस्य युगपज्ज्ञानानुपपत्तिप्रयोजकत्वं च ना-

(१) अत्र बुद्धेरवसरप्राप्ताया लक्षणापदेशद्वारेण सूत्रम् । बुद्धिरुपलब्धिरित्यादीति वार्त्तिकम् ।

(२) यस्मादिन्द्रियार्थसंनिकर्षे सत्यपि युगपज्ज्ञानानि न सम्भवन्ति अतो गम्यते अस्ति तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि यस्य सन्निधानासन्निधानानुविधानात् ज्ञानस्योत्पत्त्यनुपपत्ती भवत इति । कुतः कारणवैकल्ये कार्यप्रतिबन्धादिति सूत्रार्थ इत्येतत्सूत्रव्याख्याने वार्त्तिकम् । बुद्धिक्रमोन्नेयत्वात् प्रवृत्तिहेतुत्वाच्चानन्तरं मनोलक्षणाय तत्स्वरूपसाधनद्वारा सूत्रम् । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

नेन्द्रियाणां सत्यपि विषयसन्निकर्षे यत्सम्बन्धादेकेन्द्रियं ज्ञानं जनयति यदसम्बन्धादपरं ज्ञानं न जनयतीति। प्रत्यक्ष-कारणेन्द्रियसंयोगाश्रयत्वं मनसस्तत्प्रयोजकम्। मनसो विभुत्वे च युगपज्ज्ञानेन्द्रियासम्बन्धासम्भवादणुत्वमिति तस्यापि तत्प्रयोजकत्वम्। न च मनः सावयवमस्तु नानावयवतन्नाशादिकल्पने गौरवात्॥ १६ ॥

प्रवृत्तिं विभजयन् लक्षयति।

**प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः**[1] ॥ १७ ॥

आरम्भपदस्य प्रत्येकमन्वयात् वागारम्भो बुद्ध्यारम्भः शरीरारम्भ इति त्रिविधा प्रवृत्तिः। तत्र बुद्धिशब्दस्य बुद्धिजनके मनसि लक्षणा। वचनानुकूला प्रवृत्तिर्वागारम्भः। शरीरपदेन शरीरचेष्टापरिग्रहाच्छरीरचेष्टानुकूला शरीरारम्भः। एतद्द्वयातिरिक्ता बुद्ध्यारम्भः। स च ध्यानाद्यनुकूल इति कार्यभेदात् त्रिविधा प्रवृत्तिः। धर्माधर्मयोश्च लक्षणया प्रवृत्तिपदप्रयोगः। प्रवृत्तित्वं च प्रवृत्तोऽस्मीतिप्रतीतिसिद्धजातिविशेषो रागजन्यतावच्छेदकः। लक्षणं तु तदेव स्फुटमिति। निवृत्तौ जीवनयोनियत्ने च मानाभावे यत्नत्वमपि तदेव। ईश्वरकृतेरपि लक्ष्यत्वस्येष्टत्वात्। तयोर्मानपक्षे यत्नत्वव्याप्या सा जातिः। अतिप्रसक्तस्य कार्यतावच्छेदकत्वेऽपीश्वरकृतेरलक्ष्यत्वे जन्यप्रवृत्तित्वमेव रागजन्यतावच्छेदकम्॥ १७ ॥

(१) प्रवृत्तिफले प्रवृत्त्युपचारात्। प्रवृत्तिफलं धर्माधर्मौ धर्मिणः (?) सूत्रे प्रवृत्तिरित्युच्यते। इत्येतत्सूत्रव्याख्यानावसरे वार्त्तिकम्। प्रवृत्तिलक्षणाय सूत्रम्। प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः। अत्रेतिशब्दयुक्तः पाठः क्वचित् सूत्रपाठपुस्तके दृश्यते।

CC-0. In Public Domain. Digitized by eGangotri

दोषं लक्षयति।

**प्रवर्तनालक्षणा दोषाः**(१) ॥ १८ ॥

दोषा इति बहुवचनं रागद्वेषमोहात्मकलक्षयत्रयेषु नानुगतं दोषत्वं जातिरितिसूचनाय। प्रवर्तना प्रवृत्त्यसाधारणकारणत्वं तदेव लक्षणं येषाम्। साधारणकारणशरीरादृष्टपरमेश्वरेच्छादिषु नातिव्याप्तिः। मोहस्यापि रागादिद्वारा प्रवृत्तित्वावच्छिन्नजनकत्वस्वीकारात्। केचित्तु शरीरादिवारणाय लौकिकप्रत्यक्षविषयकत्वे सति प्रवृत्तिजनकत्वं लक्षणमित्याहुः। रागादिगोचरप्रमायाः प्रवृत्तिहेतुत्वे तद्वारणाय प्रमाभिन्नत्वे सतीति विशेषयन्ति॥ १८॥

प्रेत्यभावं लक्षयति।

**पुनरुत्पत्तिः प्रेत्यभावः**(२) ॥ १९ ॥

प्रेत्य मृत्वा भावो जननं प्रेत्यभावः प्रेत्येत्यनेन पुनःपुनर्जन्ममरणाभ्यां संसारदुःखानुवृत्तिं प्रदर्श्य तन्निवृत्तिलक्षणापवर्गः प्रदर्शितः। मरणं च चरमप्राणसंयोगध्वंसः प्राणविभागो वेति। विजातीयाद्यप्राणशरीरसंयोगो विजातीयाद्यशरीरात्मसंयोगः शरीरविशिष्टात्मन आद्यक्षणसम्बन्धो वा जन्मेति॥ १९॥

फलं लक्षयति।

**प्रवृत्तिदोषजनितोऽर्थः फलम्**(३) ॥ २० ॥

---

(१) प्रवृत्त्यनन्तरं दोषलक्षणम्। प्रव-षाः। इति तात्पर्यटीका। प्रेत्यभावलक्षणात् प्राक् दोषलक्षणाय सूत्रम्। प्रवर्तनालक्षणा दोषा इति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

(२) उद्देशक्रमप्राप्तं प्रेत्यभावं लक्षयति। पुन-वः। इति तात्पर्यटीका। आत्म-
नः शरीरादिदोषपर्यन्तेन विश्लेषपूर्वकः सम्बन्धः प्रेत्यभाव इत्यात्मादिनिरूप्यत्वात् तद-
नन्तरं तल्लक्षणाय सूत्रम्। पुनरुत्पत्तिः प्रेत्यभाव इति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

(३) दुःखात् प्राक् फललक्षणाय सूत्रम्। प्रवृत्तिदोषजनितोऽर्थः फलमिति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

धर्माधर्मद्वारा प्रवृत्तेः फलप्रयोजकत्वं प्रवृत्तौ दोषस्य हेतुत्वमिति प्रवृत्तिदोषजनितत्वं फलमात्रे सङ्गतम्। तत्र च प्रवृत्तिदोषेति स्वरूपकीर्तनं प्रवृत्तिदोषसत्त्व एव सुखदुःखादिप्रयोजकशरीरसम्बन्धधर्माधर्मादीति तन्निरासे मोक्ष इतिद्योतनाय। लक्षणं तु जन्यत्वमेव। फलमपि द्विविधं मुख्यं गौणं चेति। तत्र मुख्यं सुखं दुःखं तत्साक्षात्कारः। तथा च भाष्यम्। सुखदुःखसंवेदनं फलमिति। तदन्यत् सर्वं गौणमिति ॥ २० ॥

दुःखं लक्षयति।

## बाधनालक्षणं दुःखम्(१) ॥ २१ ॥

बाधना पीडा स्वतो द्वेषविषयता लक्षणं यस्य। तत्स्वतस्त्वं च द्वेषानधीनत्वम्। शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् सुखेषु च दुःखानुषङ्गाद् दुःखव्यवहारो गौण इति ॥ २१ ॥

अपवर्गं लक्षयति।

## तदत्यन्तविमोक्षोऽपवर्गः(२) ॥ २२ ॥

तस्य दुःखस्यात्यन्तविमोक्षः स्वसमानाधिकरणदुःखासमानकालीनो ध्वंसः। तत्पदेनात्र प्रागुपन्यस्तत्वेन मुख्यदुःखस्यैव ग्रहणम्। अत्र श्रुतिरपि। दुःखेनात्यन्तं विमुक्तश्चरतीति। आत्मतत्त्वज्ञानस्य तत्र हेतुता च तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽनायेतिश्रुतेः। तत्र तमेवेत्यत्रैवकारव्यत्यासेन तं विदित्वैवेत्यर्थः। अन्यः तत्त्वज्ञानाघटितः। अनाय अयनाय मोक्षायेति यावत्। अथ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादिति

(१) दुःखलक्षणाय सूत्रम्। बाधनालक्षणं दुःखमिति न्यायतत्त्वालोके वाचस्पतिमिश्राः। अत्र दुःखमितीत्याकारः पाठो बहुषु सूत्रपाठपुस्तकेषु दृश्यते।

(२) दुःखनिवृत्तिरूपत्वादपवर्गस्य तल्लक्षणाय सूत्रम्। तदत्यन्तविमोक्षोऽपवर्ग इति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

पूर्वप्रतीके ईश्वरमुपक्रम्य तमेवेत्यादिश्रुतौ तत्पदेन ईश्वर-परामर्शात् कथं जीवात्मसाक्षात्कारस्य मिथ्याज्ञानाधीन-वासनानाशद्वारा मुक्तिहेतुत्वमिति चेत् । न । न वारे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवतीतिश्रुत्या ईश्वरासम्भवि प्रियत्वाख्यानेन जीवमुपक्रम्य आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्योनि-दिध्यासितव्य एतदेव खल्वमृतत्वमितिश्रुत्या जीवात्म-साक्षात्कारस्य मुक्तिहेतुत्वबोधनात् । तत्र द्रष्टव्य इति अ-ग्निहोत्रं जुहोति यवागुं पचतीत्यत्राग्निहोत्रे द्रव्याकाङ्क्षा-सत्त्वाद् द्रव्यान्तरानुपदेशाच्च यवागुपाकस्य स्वातन्त्र्याप-त्त्या यवागोरेवाग्निहोत्राङ्गतेति प्रथमं यवागुपाकस्ततोऽग्नि-होत्रमिति क्रमस्तथा आत्मसाक्षात्कारस्य श्रवणाद्यानन्त-र्यम् । श्रवणादित्रिके च पाठक्रमो ज्ञेयः । अमृतत्वममृतसा-धनं कारणे कार्योपचारात् । एवं चात्मतत्त्वज्ञानं द्विविधं परमात्मतत्त्वज्ञानं जीवात्मतत्त्वज्ञानं च द्वयमपि मोक्षसा-धनम् । तत्र परमात्मतत्त्वज्ञानस्य भिन्नविषयतया मिथ्या-ज्ञानजवासनानाशासामर्थ्येन तन्नाशकजीवात्मतत्त्वसा-क्षात्कारोपयोगित्वमिति तस्य मोक्षप्रयोजकतारूपकार-णता श्रुतौ बोध्यते । जीवात्मसाक्षात्कारस्यापि प्रागुक्त-प्रणाल्या मोक्षप्रयोजकतैव न तु साक्षात् कारणता श्रुति-बोधिता कारणविरहेण दुःखान्तरानुत्पादात् चरमदुःख-स्य च स्वोत्तरोत्पन्नविभुविशेषगुणरूपक्लृप्तकारणादेव ना-शान्निरुक्तमोक्षे तत्त्वज्ञानस्यान्यथासिद्धत्वादिति । ईश्व-रतत्त्वज्ञानं च तमेवं वेदानुवचनेन ब्राह्मणा विविदि-षन्तीति श्रवणमनननिदिध्यासनरूपम् । तत्साक्षात्कारस्य तदयोग्यत्वेनासम्भवात् । तच्च जगत्कर्तृत्वादिनाऽस्थूले-त्यादिना तत्त्वेन तत्त्वमसि श्वेतकेतो इत्यादिश्रुत्या जी-

वात्माभेदेनातत्त्वेनापि भ्रमरूपमीश्वरज्ञानं मोक्षप्रयोजकम्। जीवात्मतत्त्वज्ञानं देहादिभिन्नत्वेन श्रवणादिचतुष्टयमिति विवेकः। दुःखेन जन्मनात्यन्तं विमुक्तिरपवर्ग इति भाष्ये जन्मना शरीरसम्बन्धेन निमित्तेन यद् दुःखं तेनात्यन्तं विमुक्तिरित्यर्थः। निमित्तस्य शरीरस्याभावादेव दुःखात्यन्तविमुक्तिरिति सूचयितुं जन्मनेत्युक्तम्। श्रुतिश्च। अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इति। प्रियाप्रिये सुखदुःखे। वावेति सम्बोधनम्। केचित्तु तेषामात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति प्राक्सूत्रोक्तशरीरादिदुःखपर्यन्तानामात्मनोऽत्यन्तविमुक्तिरात्मनोऽपवर्ग इत्यर्थः। तत्रेन्द्रियाणि पञ्च अर्थपदार्थविषयाः पञ्च दोषपदेन मिथ्याज्ञानतज्जन्यसंस्काररागद्वेषाश्चत्वारः प्रेत्यभावपदेनात्र तद्धेतुरदृष्टं लक्ष्यते फलं सुखमिति मिलित्वैकविंशतिप्रकाराणि पारिभाषिकदुःखानि तेषामात्यन्तिकनिवृत्तिरिति पर्यवसितम्। अत्र प्रमाणानि। दुःखेनात्यन्तं विमुक्तश्चरति। अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

इत्यादिश्रुतयः। यद्वा दोषपदेन संस्कारेच्छाद्वेषा ग्राह्याः। बुद्धिनिरासेनैव मिथ्याज्ञानस्यापि निवृत्तिर्लभ्यते। दोषपदेन यद्यपि संस्कारग्रहणं न सूत्रे स्पष्टं तथापि मिथ्याज्ञानादिद्वारा प्रवर्तकस्य मिथ्याज्ञानजन्यसंस्कारस्य संस्कारत्वेन ग्रहणं प्रवर्तनालक्षणा दोषा इतिसूत्रात्। दोषविभागसूत्रे च मोहपदेन सवासनमोहस्य ग्रहणात्। एवं च मुक्तिलक्षणे बुद्धिसंस्कारेच्छाद्वेषयत्नसुखदुःखध-

CC-0. In Public Domain. Digitized by eGangotri

र्माधर्माणां नवात्मविशेषगुणानां लाभः । इन्द्रियनिवृत्त्यार्थनिवृत्तिरर्थाद्यातेति नात्रार्थग्रहणम् । किं त्विन्द्रियविभागसूत्रानुक्तत्वे ऽप्यत्रेन्द्रियपदेन कर्मेन्द्रियपञ्चकस्यापि तेषामपि प्रमाणसिद्धत्वादिति दशेन्द्रियाणि शरीरं मनश्चेत्येकविंशतिप्रकाराणि दुःखानि द्रव्यकिरणावलीमाथुर्यामभिहितानि । न च शरीरादिनाशस्यात्मन्यसत्त्वेन मनःश्रवणयोरजन्यत्वेन तन्नाशाप्रसिद्ध्या च कथमेतदिति वाच्यम् । शरीरादीनामात्मसम्बन्धनाशस्यैव विवक्षितत्वादित्याहुः । तन्न । शरीरादिनाशस्य स्वतःप्रयोजनत्वाभावेन मुख्यपुरुषार्थत्वाभावात् तत्र मुक्तिपदाप्रयोगाद् दुःखात्यन्तोच्छेदहेतुतया शरीराद्यत्यन्तोच्छेदस्य प्रयोजनत्वे ऽपि सुखनाशस्य कथमप्यप्रयोजनत्वात् सांसारिकसुखस्य दुःखानुविद्धतया विवेकिनामिच्छाविषयत्वाभावे ऽपि तदभावे नेच्छा किं तु तदनिच्छाप्रयोजकदुःखानुविद्धत्वाभाव एवेच्छेत्यनुभवात् । श्रुतौ शरीरादिनिवृत्तिकथनं च दुःखात्यन्तोच्छेदहेतुत्वेनेति ॥ २२ ॥

उपसंहरति । समाप्तं प्रमेयप्रकरणमिति ॥

प्रमेयलक्षणविवरणं समाप्तम् ॥

क्रमप्राप्तं संशयं लक्षयति विभजते च ।

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्षः संशयः(१) ॥ २३ ॥**

संशय इति लक्ष्यनिर्देशो विमर्ष इति लक्षणम् । तत्र मृषिर्ज्ञानार्थो विशब्देन एकधर्मिणि विरोधिधर्मद्वयप्रका-

(१) समानानेकधर्मोपपत्तेरिति सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

रकत्वं लभ्यते। धर्मद्वयं क्वचिद् भावाभावरूपं यथायं स्थाणुर्न वेति क्वचिद् भावद्वयरूपं यथा स्थाणुर्वा पुरुषो वेति। न च वह्न्यादेरव्याप्यवृत्तित्वज्ञानदशायां जायमाने पर्वतो वह्निमान् वह्न्यभाववांश्चेतिसमुच्चये स्थाणुत्वपुरुषत्वयोरविरोधग्रहदशायां जायमाने ऽयं स्थाणुः पुरुषश्चेतिसमुच्चये चातिव्याप्तिरिति वाच्यम्। धर्मद्वये परस्परविरोधावगाहित्वस्यापि संशयलक्षणे निवेशादिति प्राञ्चः। अन्ये तु संशये विरोधभानस्य न नियमो मानाभावात्। भावद्वयकोटिकः संशयो नानुभविकः स्थाणुर्वा पुरुषो वेति च ज्ञानं स्थाणुत्वतदभावकोटिकं पुरुषत्वतदभावकोटिकं च संशयलक्षणं च तत्प्रकारतया तदभावप्रकारतया च निरूपितैकविशेष्यताशालिज्ञानत्वं समुच्चये प्रत्येकप्रकारतानिरूपितप्रत्येकविशेष्यतेति तद्व्यावृत्तिः। सा च विशेष्यता अव्याप्यवृत्तित्वज्ञानाभावप्रयोज्या पर्वते वह्निं सन्देह्मीत्याद्यनुव्यवसायसिद्धा। भावाभावयोः समुच्चये चाव्याप्यवृत्तित्वज्ञानं नियामकम्। न चैकत्र द्वयमितिरीत्या जायमाने एकधर्मिण्युभयप्रकारकज्ञाने ऽतिव्याप्तिस्तत्राप्युभयप्रकारतानिरूपितैकविशेष्यताया बाधादिग्रन्थे जगदीशैरप्युक्तत्वादिति वाच्यम्। एकत्र द्वयमितिरीत्या जायमाने ज्ञाने एकप्रकारतानिरूपितत्वेनापरप्रकारतानिरूपितत्वस्यावच्छेद्यावच्छेदकभावस्याङ्गीकारेण संशयवैलक्षण्यात्। इत्थं च प्रकारतानिरूपितत्वानवच्छिन्नोभयप्रकारतानिरूपितत्वाश्रयैकविशेष्यताशालिज्ञानत्वं संशयलक्षणमित्याहुः। केचित्तु संशये सन्देह्मीत्यनुव्यवसायबलात् प्रकारद्वये कोटित्वाख्यप्रकारताद्वयं स्वीक्रियते साक्षात्करोमीतिप्रतीत्या साक्षात्कारत्वाख्यलौकिकविषयतावत्। इत्थं च तदीयकोटित्वाख्यप्रकारताशालिज्ञानत्वं तत्संश-

CC-0. In Public Domain. Digitized by eGangotri

यत्वमित्यादिकमालोचनीयमित्याहुः । अत्र कारणमुखेन चातुर्विध्यं तद्विशेषलक्षणानि चाह । समानेत्यादि । समानेन कोटिद्वयसहचरितधर्मेण प्रकारेण ज्ञानाद् धर्मितावाच्छेदकावच्छिन्नविशेष्यकज्ञानादिति यावत् । तथा अनेकेन तत्तदभाववद्व्यावृत्तेन धर्मेण प्रकारेण ज्ञानात् । तथा विप्रतिपत्तेर्विरुद्धकोटिद्वयोपस्थापकशब्दात् । तथा उपलब्ध्यव्यवस्था प्रमात्वसंशयस्तस्मात् । अनुपलब्धिर्विरोधिभ्रमत्वं तदव्यवस्था तत्संशयस्तस्माच्च जायमानो विमर्षः संशय इत्यन्वयः । अत्र कल्पे पञ्चविधत्वं संशयस्येति । यद्वा संशयस्य त्रैविध्यमेव । संशयसामान्यहेतुमाह । उपलब्ध्येति । उपलब्धिस्तत्कोटिनिश्चयोऽनुपलब्धिस्तदभावकोटिनिश्चयस्तयोरव्यवस्थाऽभावस्तस्मात् । चकाराद् विशेषदर्शनाद्यभावाच्चेति । केचित्तु विप्रतिपत्तिवाक्यस्य न संशायकत्वं संशयात्मकपरोक्षज्ञानानभ्युपगमात् । परं तु विप्रतिपत्तिवाक्यात् कोटिद्वयोपस्थितौ मानसः संशय इत्याहुः । चकारेण व्याप्यसंशयस्य व्यापकसंशयहेतुत्वं समुच्चीयते । एतस्य प्राचीनैरपि सर्वैरनङ्गीकारान्न साक्षादुक्तमिति ॥ वस्तुतः चकारो वार्थे विकल्परूपे विशेषापेक्षः कोटिद्वयस्मरणापेक्ष इत्यर्थः । अत्र च साधारणधर्मप्रकारेण धर्मिनिश्चयत्वादिना साक्षात् संशयहेतुत्वं कोट्युपस्थितिश्च संशयस्मृत्यादिसाधारणी विशेषणज्ञानविधया संशयहेतुः तेन न धारावाहिकसंशयानुपपत्तिः । साधारणधर्मवद्धर्मिज्ञानादिकार्यतावच्छेदके तादृशधर्मवद्धर्मिविशेष्यकज्ञानोत्तरत्वस्य निवेशान्न तद्विलम्बात् संशयधाराया अविरलत्वभङ्गो न वा कार्यकारणभावे व्यभिचार इति । अथवा सर्वाणि पञ्चम्यन्तानि विशेषेत्यनेनान्वितानि । तथा च साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थि-



CC-0. In Public Domain. Digitized by eGangotri

तित्वादिनैव संशयहेतुत्वमिति लभ्यते साधारणधर्मवद्ध-र्मिज्ञानादेश्च तादृशकोट्युपस्थितिद्वारैव संशयहेतुत्वम्। नव्यास्तु साधारणधर्मवद्धर्मिज्ञानत्वादिना तादृशधर्मज्ञान-जन्यकोट्युपस्थितित्वादिना च न संशयहेतुत्वं किं तु कोटि-द्वयविशिष्टबुद्धिसामग्रीसमाजादेव संशयः। एवं ज्ञान-धर्मिकप्रामाण्याप्रामाण्यसंशयोऽपि न विषयसंशयहेतुः। अग्रहीताप्रामाण्यकबाधनिश्चयस्य विरोधितया एककोटिज्ञाने प्रामाण्याप्रामाण्यसंशये विरोधापसरणेनापरको-टिभानसम्भवेन संशयसम्भव इति प्रामाण्यसंशयादेः संशयोपयोगः। तथा व्याप्यसंशयोऽपि न व्यापकसंशय-हेतुरित्याहुः ॥ २३ ॥

क्रमप्राप्तं प्रयोजनं लक्षयति।

**यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्[1] ॥ २४ ॥**

अधिकृत्य उद्दिश्य। तथा च प्रवृत्त्युद्देश्यताख्यविष-यत्वं प्रयोजनत्वम्। प्रवृत्तेर्हि विषयता त्रयी उद्देश्यता सा-ध्यतोपादानता च। तत्र यदिष्टसाधनताज्ञानाधीना य-स्मिन्नुत्पाद्ये प्रवृत्तिस्तस्मिन्निष्टे उद्देश्यता तस्मिन्नुत्पाद्ये च साध्यता। यथा स्वर्गे उद्देश्यता यागे साध्यता हविराद्युपा-दाने चोपादानतेति। तद्धर्मिकेष्टसाधनताज्ञानाप्रयोज्यप्र-वृत्त्युद्देश्यता तन्निष्ठा स्वतः प्रयोजनता। सा च सुखदुःखा-भावयोस्तत्साक्षात्कारे च। इष्टसाधनताज्ञानाधीनप्रवृत्त्यु-द्देश्यता गौणप्रयोजनता सुखाद्युपायेषु। अथवा सूत्रेऽधि-

(१) उद्देशक्रमप्राप्तस्य प्रयोजनस्य लक्षणम्। यम–नम्। अत्रार्थशब्दो गौण-मुख्यप्रयोजनावरोधार्थः। तत्र मुख्यं सुखदुःखाप्तिपरिहारौ गौणं तु तत्साधनम्। अत्र भाष्यं यमर्थमित्यादि। इति सूत्रांशोपन्यासानन्तरं भाष्यनाम धृत्वा भाष्यांशो-पन्यासस्तात्पर्यटीकायां कृतः। प्रयोजनलक्षणाय सूत्रम्। यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनमिति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

कृत्येति । इच्छाविषयीकृत्येत्यर्थः । तथा चेच्छाविषयत्वमेव प्रयोजनत्वम् । अन्येच्छानधीनेच्छाविषयत्वं स्वतः प्रयोजनत्वम् । अन्येच्छाधीनेच्छाविषयत्वं गौणप्रयोजनत्वमिति ॥ २४ ॥

क्रमप्राप्तं दृष्टान्तं लक्षयति ।

**लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः[१] ॥ २५ ॥**

लौकिको यथार्थकोटिनिश्चयशून्यः प्रतिपाद्य इति यावत् । परीक्षको यथार्थकोटिनिश्चयवान् प्रतिपादक इति यावत् । बहुवचनं कथाबाहुल्याभिप्रायेण तथा च प्रतिपाद्यप्रतिपादकयोर्यस्मिन्नर्थे बुद्ध्या साध्यसाधनविषयिण्या साध्यसाधनयोरभावविषयिण्या वा बुद्ध्या साम्यं वैशिष्ट्यं सोऽर्थो दृष्टान्तः । तथा चोभयोः साध्यसाधननिश्चयविशेष्योऽन्वयिदृष्टान्तः । साध्याभावसाधनाभावनिश्चयविशेष्यो व्यतिरेकिदृष्टान्तः । सामान्यलक्षणं तु तादृशान्यतरनिश्चयविशेष्यत्वमिति ॥ २५ ॥

समाप्तं न्यायपूर्वाङ्गप्रकरणम् ॥

न्यायपूर्वाङ्गं न्यायप्रयोजकम् ॥

क्रमप्राप्तं सिद्धान्तं लक्षयति ।

**तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः[२] ॥२६॥**

---

(१) लौकिकपरीक्षकाणामिति सूत्रमिति वार्त्तिकम् ।

(२) अत्राधुनिकनैयायिका अत्र भाष्यकारः सिद्धान्तसामान्यलक्षणसूत्रमपठित्वैव तात्पर्यं व्याचष्टे अथ सिद्धान्त इत्यादिनेति तात्पर्यटीकायां दृश्यते तेन सिद्धान्तसामान्यसूत्रं किमप्यासीद् यदद्यत्वे न क्वाप्युपलभ्यत इत्याहुः । तत्र वयं ब्रूमः । अत्रैव तात्पर्यटीकायामत्रैवार्थं सूत्रमित्याह वार्त्तिककारः । अस्यार्थस्येति । तन्त्रा-न्तः । सूत्रार्थमाक्षिपति किं पुनरिति । इति वार्त्तिकप्रतीकधारणं दृश्यते । ईदृशी चात्रत्या वार्त्तिकपङ्क्तिः । अस्यार्थस्य प्रदर्शनार्थं सूत्रम् । तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्त इति । किं पुनरिदं सूत्रं लक्षणार्थमाहो विभागार्थमित्यादि । समाधानावसरे वार्त्तिक-

CC-0. In Public Domain. Digitized by eGangotri

तन्त्रं शास्त्रं तदेवाधिकरणं बोधकतया यस्य स तन्त्राधिकरणः शास्त्रप्रतिपादितार्थः तस्याभ्युपगमस्य संस्थितिः सम्यक्प्रकारेण निश्चयरूपतयाऽप्रामाण्यज्ञानानास्कन्दिततया वा स्थितिः शास्त्रप्रतिपादितार्थनिश्चयः शास्त्रप्रतिपादितार्थाप्रामाण्यज्ञानानास्कन्दितनिश्चयो वा पर्यवसितः। अथवा शास्त्रेणाधिक्रियत उत्पाद्यते ऽभ्युपगमो यस्य तादृशार्थस्य संस्थितिर्निश्चय इति पूर्वोक्त एवार्थः। तथा च वार्त्तिकटीके। अभ्युपगमः सिद्धान्त इति। अभ्युपगमः शास्त्राधीननिश्चयः। यद्वा तन्त्राधिकरणाभ्युपगमेन संस्थितिर्यस्य स तन्त्राभ्युपगम्यमानोऽर्थः। तथा च भाष्यम्। अभ्युपगम्यमानोऽर्थः सिद्धान्त इति। तथा चाभ्युपगम्यमानोऽर्थोऽर्थाभ्युपगमो वा। अर्थाभ्युपगमयोर्गुणप्रधानभावभेदेन फलतो न कश्चिद्विशेष इति। केचित्तु तन्त्रे चाधिकरणं चाभ्युपगमश्च ते तन्त्राधिकरणाभ्युपगमास्तैः संस्थितिर्यस्य सोऽर्थ इति। तन्त्रपदेन सर्वतन्त्रप्रतितन्त्रयोस्तन्त्रत्वेन ग्रहणम्। तथा च तन्त्राधिकरणाभ्युपगमसंस्थित्यन्यतमत्वं सिद्धान्तसामान्यलक्षणम्। तत्र तन्त्रद्वैविध्येन चतुर्धा विभागमाह सर्वतन्त्रेत्यादीत्याहुः॥ २६॥

---

कृता आद्यस्य लक्षणार्थत्वादुत्तरस्य विभागार्थत्वादित्यादिना सिद्धान्तसामान्यसूत्रत्वं यथोक्तसूत्रस्य व्यवस्थापितम्। तात्पर्यटीकाकृताप्यग्रे तदेवं भाष्यकारेण व्याख्याय सामान्यलक्षणं पठितमेवं व्याख्यानपूर्वकं विभागसूत्रं पठति। तन्त्रार्थसंस्थितिरिति। इति सिद्धान्तविभागभाष्यमवतारितम्। एवं चैतादृशवार्त्तिकटीकादर्शनाद् भाष्यकारैर्व्याख्यानपूर्वकं तन्त्राधिकरणाभ्युपगमेत्यादिसिद्धान्तसामान्यलक्षणसूत्रं पठित्वा पुनर्व्याख्यानपूर्वमेव विभागसूत्रं पठतीत्येतदेवावगम्यते न तु सामान्यसूत्रं किमप्यासीदिति। न्यायाख्यसिद्धान्तप्रकरणं तत्सामान्यलक्षणाय सूत्रम्। तन्त्राधिकरणेत्यादिन्यायतत्त्वालोकीयवाचस्पतिमिश्रलेखदर्शनाच्चास्यैव सिद्धान्तसामान्यसूत्रत्वं निश्चीयते।

CC-0. In Public Domain. Digitized by eGangotri

विभजते ।

**सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्**[१] ॥ २७ ॥

सर्वतन्त्रसंस्थित्यादिभेदेन चतुर्धा । अर्थान्तरभावात् परस्परं भेदात् सिद्धान्तश्चतुर्विध इति पूरितसम्बलितोऽर्थः ॥ २७ ॥

सर्वतन्त्रसंस्थितिं लक्षयति ।

**सर्वतन्त्राविरुद्धस्तन्त्रे ऽधिकृतः सर्वतन्त्रसिद्धान्तः**[२] ॥ २८ ॥

तन्त्रे ऽधिकृतः शास्त्राभ्युपगतः । सर्वतन्त्राविरुद्धः सर्वतन्त्रविरोधिभिन्नः । सर्वपदं सामान्यभेदलाभार्थम् । तेन शास्त्रोक्ताविरोधित्वे सति स्वीयशास्त्राभ्युपगतत्वं सर्वतन्त्रसिद्धान्तत्वम् । यथा जात्यादेरसदुत्तरत्वं तस्य सकलशास्त्रानुक्तत्वे ऽपि सकलशास्त्रोक्ताविरोधित्वात् । वस्तुतः सर्वपदं वादिप्रतिवाद्युभयपरं तेन वादिप्रतिवाद्युभयतन्त्राभ्युपगतः । अविरुद्धपदस्याभ्युपगतपरताज्ञापनाय तन्त्रे ऽधिकृत इति । यथा नैयायिकैर्मीमांसकस्य विचारे जीवात्मनो ज्ञानवत्त्वादिकं सर्वतन्त्रसिद्धान्तः तस्य वेदान्त्यादिभिरनभ्युपगतत्वे ऽपि वादिभ्यामुपगतत्वात् ॥ २८ ॥

(१) सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावादित्यस्य सूत्रार्थोऽन्यो वक्तव्य इति पूर्वमुत्तरं वा सूत्रमनार्षमिति । नानार्षम् । आद्यस्य लक्षणार्थत्वादुत्तरस्य विभागार्थत्वादिति च वार्त्तिकम् । तद्विभागसूत्रं सर्वतन्त्रेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) आदौ सर्वतन्त्रसिद्धान्तलक्षणाय सूत्रम् । सर्वतन्त्राविरुद्ध इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । तन्त्रे ऽधिकृतोऽयं इत्यन्यत्र पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

द्वितीयं लक्षयति ।

**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः**[1] ॥ २९ ॥

समानपदं स्वीयपरं परतन्त्रेत्युपादानात् । यथा मीमांसकैर्नैयायिकस्य कथायां शब्दानित्यत्वम् ॥ २९ ॥

तृतीयं लक्षयति ।

**यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः**[2] ॥ ३० ॥

प्रकरणपदं प्रकृतपरम् । यस्य सिद्धौ सत्यामेव अन्यस्य प्रकृतस्य सिद्धिर्भवतीत्यर्थः । यमधिकृत्य क्रियते प्रकृतसिद्धिः क्रियत इत्यधिकरणपदव्युत्पत्तेः । तथा च शास्त्रायुक्तान्यथानुपपत्त्या स्वीकृतोऽर्थोऽधिकरणसिद्धान्तः । यद्वाऽधि शास्त्रायुक्तमधिकृत्य क्रियते सिद्धिविषयीक्रियते य इतिव्युत्पत्त्या यत्सिद्धौ जायमानायां यस्यान्यप्रकरणस्य सिद्धिः सोऽर्थस्तदधिकरणसिद्धान्तः । तथा च वार्त्तिके । तत्र च वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति । एतद्व्याख्यातं चात्मतत्त्वविवेके दीधितिकृता । येन केनापि प्रमाणेन वाक्यार्थसिद्धौ जायमानायां योऽन्यार्थः सिध्यति स तथेति । यथा द्व्यणुकादौ उपादानगोचरप्रत्यक्षचिकीर्षाकृतिमज्जन्यत्वसिद्धौ तादृशप्रत्य-

(१) समा–न्तः । समानशब्द एकपर्यायः नैयायिकानां हि समानं तन्त्रं न्यायशास्त्रं परतन्त्रं सांख्यशास्त्रमित्यादि । तदेतत् सूत्रं वार्त्तिककृद् व्याचष्ट इति तात्पर्यटीका । उद्देशक्रमसङ्गत्या प्रतितन्त्रसिद्धान्तलक्षणाय सूत्रम् । समानतन्त्रसिद्ध इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) उद्देशक्रमसङ्गत्याधिकरणसिद्धान्तलक्षणाय सूत्रम् । यत्सिद्धावन्येत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

त्वादिमत ईश्वरस्य सर्वज्ञत्वम् । ज्ञानायौगपद्येन मनसः सिद्धौ तस्य विभुत्वाभाव इत्यादि । प्रत्यक्षतः स्थूलत्वसाधनानन्तरं सोऽयमधिकरणसिद्धान्तन्यायेन क्षणभङ्गभङ्ग इत्युक्तं दीधितिकृद्भिरात्मतत्त्वविवेके । केचित्तु लाघवज्ञानादिवशात् कारणीभूतज्ञाने व्यापकतावच्छेदकत्वेनाभातस्याप्यनुमितौ विधेयविशेषणतया भातम् । यथा क्षितिकर्तुरेकत्वादि । एवं पदानुपस्थितस्यापि शाब्दे विषयीभूतं घटादौ छिद्रेतरत्वादीत्याहुः । तन्न । भाष्यादिविरोधात् ॥ ३० ॥

चतुर्थं लक्षयति ।

**अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः**(१) ॥ ३१ ॥

अपरीक्षितः साक्षात् सूत्रानधीनो योऽभ्युपगमस्तस्मात् । विशेषपरीक्षणं विशेषधर्मसिद्धिः । सोऽभ्युपगमसिद्धान्तः । अभेदे पञ्चमी । साक्षादसूत्रिताभ्युपगम इति पर्यवसितम् । यथा मनस इन्द्रियत्वमिति ॥ ३१ ॥

समाप्तं न्यायाश्रयप्रकरणम् ॥

न्यायाश्रयः न्यायप्रामाण्यसम्पादकः ॥

इति न्यायाश्रयप्रकरणविवरणम् ॥

क्रमप्राप्तानवयवान् विभागमुखेन लक्षयति ।

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः**(२) ॥ ३२ ॥

(१) अपरीक्षिताभ्युपगमादिति सूत्रमिति वार्त्तिकम् ।

(२) अवयवानां विभागोद्देशार्थं सूत्रमिति वार्त्तिकम् । तत्राक्षिप्तसामान्यलक्षणं विभागोद्देशसूत्रम् । प्रतिज्ञेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

तथा च प्रतिज्ञाद्यन्यतमत्वमवयवत्वमिति लक्षणम्। तत्र चोदासीनप्रतिज्ञादिसमानार्थकवाक्यवारणाय न्यायान्तर्गतत्वे सतीति पूरणीयम्। प्रतिज्ञादिकं पुनरत्र न्यायान्तर्गतत्वशून्यमेवोपादेयं पञ्चधा तन्निवेशे गौरवात्। न्यायत्वं तु प्रतिज्ञादिक्रमेणावयवनिर्देशात् तथैवाकाङ्क्षोदयाच्च उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं सूत्रकृतोऽभिप्रेतम्। उचितानुपूर्वीकत्वं च प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वघटकत्वम्। तच्च व्युत्क्रमप्रयुक्तविभिन्नपुरुषप्रयुक्तप्रतिज्ञादिभेदकूटवत्त्वपर्यवसितम्। यादृशयादृशानुपूर्व्यवच्छिन्ने न्यायव्यवहारस्तादृशान्यतमानुपूर्वीमत्त्वं न्यायत्वमित्यपि कश्चित्। केषाञ्चिन्मते उपनयमात्रस्य सौगतमते उदाहरणादिद्वयस्य मीमांसकमते प्रतिज्ञादित्रयस्य उदाहरणादित्रिकस्यैव वा केषाञ्चिच्च मते दशावयवा इति तन्निराकरणं प्रतिज्ञादिपञ्चकनिर्देशेन सूचितम्। दशावयवाश्च दर्शिता भाष्ये यथा। जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्चेति। एते प्रतिज्ञादिसहिता दश। व्याख्याताश्च ते तात्पर्यटीकायाम्। प्रयोजनं हानादिबुद्धयः तत्प्रवर्तिका जिज्ञासा तज्जनकः संशयः शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यं संशयव्युदासस्तर्क इति। एतेषां च वाक्यत्वाभावेन तद्घटितन्यायावयवत्वासम्भवादिति भावः। परं त्वेते न्यायाङ्गत्वेनोपयुज्यन्ते। समयबन्धकण्टकोद्धारयोः सार्वत्रिकत्वाभावेन न न्यायावयवत्वम्। कण्टकोद्धारस्तु नायं हेत्वाभास इत्याकारशब्दः। को वह्निमान् पर्वतो वह्निमान् कुतो धूमात् कथमस्य गमकत्वं योयो धूमवान् स वह्निमान् कुतोऽस्य पक्षधर्मत्वं वह्निव्याप्यधूमवानयमेतावता किमायातं तस्माद्वह्निमानित्यादिक्रमेण न्यायप्रयोगात् तत्रा-

CC-0. In Public Domain. Digitized by eGangotri

काङ्क्षाव्यञ्जककिंपदस्तोमो न न्यायघटको विभिन्नपुरुषीयत्वादसार्वत्रिकत्वाच्च । एवमन्यदपि विवेच्यम् ॥ ३२ ॥

क्रमप्राप्तां प्रतिज्ञां लक्षयति ।

**साध्यनिर्देशः प्रतिज्ञा**[1] ॥ ३३ ॥

साध्यं विधेयतावच्छेदकावच्छिन्नं तस्य निर्देशः पक्षतावच्छेदकावच्छिन्ने तद्बोधकः शब्दः प्रतिज्ञेत्यर्थः । अथवा साध्यो विधेयधर्मविशिष्टो धर्मी पक्षस्तस्य निर्देश इत्यर्थः । तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकतापर्याप्त्यधिकरणपर्याप्तावच्छेदकताकप्रकारतानिरूपकबोधजनकवाक्यं प्रतिज्ञेति पर्यवसितम् । अत्राप्युदासीनवाक्यवारणाय न्यायान्तर्गतत्वे सतीति पूरणीयम् । निगमनवारणाय पर्याप्तिनिवेशनम् । सम्बन्धभेदेन हेतोरेव यत्र साध्यता तत्र हेत्ववयववारणाय पक्षविशेष्यतानिरूपितेति । तादृशहेतुत्वपक्षकस्थलीयहेत्ववयववारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं प्रकारताविशेषणं बोध्यमिति ॥ ३३ ॥

क्रमप्राप्तं हेतुं लक्षयति विभजते च सूत्राभ्याम् ।

**उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः**[2] ॥ ३४ ॥

---

(१) ननु साध्यनिर्देशः प्रतिज्ञेत्युक्ते साध्ययोर्हेतुदृष्टान्तयोरपि प्रसङ्गो यथाऽनित्यः शब्दश्चाक्षुषत्वात् नित्यः शब्दोऽस्पर्शत्वाद् बुद्धिवच्चेति । न । सूत्रार्थापरिज्ञानात् साध्यनिर्देशः प्रतिज्ञेति प्रज्ञापनीयधर्मविशिष्टस्य धर्मिणः परिग्रहवचनमित्येतत्सूत्रव्याख्याने वार्त्तिकम् । इहावयवेषु प्रतिज्ञायाः प्राथम्यादादौ तल्लक्षणाय सूत्रम् । साध्यनिर्देशः प्रतिज्ञेति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) हेतोरवसरप्राप्तस्य लक्षणापदेशद्वारेणोदाहरणसाधर्म्यमिति सूत्रमिति वार्त्तिकम् । श्रुत्यर्थाभ्यामुभयलक्षणसूचनात् सूत्रमिति तात्पर्यटीका । प्रतिज्ञानन्तरं हेतुलक्षणाय सूत्रम् । उदाहरणेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

तथा वैधर्म्यात्[1] ॥ ३५ ॥

साध्यस्य साधनं साधकताविशिष्टं यत्रेति व्युत्पत्त्या साध्यसाधकताविशिष्टहेतुबोधकवाक्यमिति पर्यवसितम्। साधकता च ज्ञापकता। तथा च प्रकृतपक्षविशेषणतापन्नसाध्यान्वितज्ञापकतान्वयिप्रकृतहेतुबोधकवाक्यत्वं हेतुत्वमिति सामान्यलक्षणं विवक्षितम्। अत्राप्युदासीनवारणाय न्यायान्तर्गतत्वे सतीति पूरणीयम्। धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमानित्यादिप्रतिज्ञावारणाय प्रकृतपक्षविशेषणतापन्नेति। निगमने ऽयमादिपदस्यानुषङ्गपक्षे ऽतिप्रसङ्गवारणाय प्रकृतहेत्विति। हेतुतावच्छेदकमात्रावच्छिन्नेति तदर्थः। निगमने तस्मादित्यत्र तत्पदेन व्याप्तिपक्षधर्मताविशिष्टहेतुबोधनान्नातिप्रसङ्गः। यद्वा साध्यान्वितज्ञापकत्वबोधकः साध्यान्वितस्वार्थबोधको वाऽवयव इति पर्यवसितोऽर्थः। अस्य त्रैविध्यमाह। उदाहरणसाधर्म्यात् तथा वैधर्म्यादिति। इदं च साधर्म्यवैधर्म्याभ्यामपीत्यस्योपलक्षकमुदाहरणपदं ज्ञातपरं साधर्म्यमन्वयव्याप्तिः वैधर्म्यं व्यतिरेकव्याप्तिस्तथा चान्वयव्याप्तिमात्रगृहीतहेतुबोधको हेत्ववयवः केवलान्वयी। व्यतिरेकव्याप्तिमात्रगृहीतहेतुबोधको हेत्ववयवः केवलव्यतिरेकी। उभयव्याप्तिगृहीतहेतुबोधको हेत्ववयवोऽन्वयव्यतिरेकीति। वस्तुतस्तु एकदा व्याप्तिद्वयानुपन्यासस्तथाकाङ्क्षाविरहादिति द्वैविध्यमेवास्य। तथा च गृहीतान्वयव्याप्तिहेतुबोधकोऽन्वयी गृहीतव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवो व्यतिरेकी। वस्तुतस्तु उदाहरणसाधर्म्यात् साध-

(१) सूत्रान्तरमवतारयति। किमेतावदिति। इति तात्पर्यटीका। किमेतावद्धेतुलक्षणमिति नेत्युच्यते किं तर्हि तथा वैधर्म्यादिति वार्त्तिकम्। साधर्म्यनिरूप्यत्वात् तदनु वैधर्म्यहेतुलक्षणाय सूत्रम्। तथा वैधर्म्यादिति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

र्म्यबोधकोदाहरणात् साधर्म्यमन्वयसहचारो वैधर्म्यं व्यतिरेकसहचारः । उदाहरणस्य व्याप्तिबोधकतामते साधर्म्यमन्वयव्याप्तिर्वैधर्म्यं व्यतिरेकव्याप्तिः । प्रयोजकाकाङ्क्षोत्थापकत्वं पञ्चम्यर्थः । साध्यसाधनं परकीयसाध्यानुमितिप्रयोजकं वाक्यं न्यायावयव इति यावत् । तथा चान्वयव्याप्तिबोधकोदाहरणप्रयोजकाकाङ्क्षोत्थापको न्यायावयवोऽन्वयिहेत्ववयवः । व्यतिरेकव्याप्तिबोधकोदाहरणप्रयोजकाकाङ्क्षोत्थापको न्यायावयवो व्यतिरेकी । इत्थं चोदाहरणप्रयोजकाकाङ्क्षोत्थापको न्यायावयवो हेत्ववयव इति सामान्यलक्षणं बोध्यमिति ॥ ३४-३५ ॥

क्रमप्राप्तमुदाहरणं लक्षयति ।

**साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्**[१] ॥ ३६ ॥

साध्यसाधर्म्यात् हेतौ साध्यसामानाधिकरण्यं गृहीत्वा । ल्यब्लोपे पञ्चमी । तद्धर्मेति । तं साध्यरूपं धर्मं भावयत्यनुमापयति यो दृष्टान्तः सदृष्टान्तपदसमूहः । हेतौ साध्यसामानाधिकरण्यबोधकदृष्टान्तशाली न्यायावयव उदाहरणमन्वय्युदाहरणम् । उदाहरणसामान्यलक्षणं तु सदृष्टान्तन्यायावयवत्वम् । अवयवान्तरे दृष्टान्तविरहान्नातिव्याप्तिः । दृष्टान्तस्यासार्वत्रिकत्वमते साध्यस्य साधर्म्यमन्वयव्याप्तिर्यत्र तं हेतुमादाय तादृशहेतुमतीति यावत् । दृष्टान्तः साध्यवत्त्वबोधकः । तद्धर्मभावी न्यायावयवः । तेन साध्यान्वयव्याप्तिविशिष्टहेतुमद्धर्मिकसाध्यप्रकारकबोधजनको न्यायावयवोऽन्वय्युदाहरणमित्यर्थः । योयो धूमवान् स वह्निमानित्यत्र धूमपदेन वह्निव्या-

(१) साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणमिति सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

व्यधूमे लक्षणा। तेन वह्निव्याप्यधूमवान् वह्निमानित्यन्वयबोधः। यत्तत्पदं तु तादृशलक्षणाग्राहकमित्युदाहरणे यथोक्तलक्षणसम्भवः। सामान्यलक्षणं च प्रकृतसाध्यान्वयव्याप्तिविशिष्टहेतुमद्धर्मिकसाध्यवत्त्वबोधकसाध्याभावव्यापकहेत्वभाववत्त्वबोधकान्यतरावयवत्वम्। यन्मते यत्तत्पदवैयर्थ्यापत्त्या धूमपदे न लक्षणा किं त्वेकं यत्पदं महानसपरमपरं च यत्पदं महानसान्यपरम्। तेन योयो धूमवानित्यनेन महानसं धूमवन्महानसान्यच्च धूमवदित्यन्वयबोधः। एवं तत्पदेनापि महानसत्वेन महानसान्यत्वेन चोपस्थितिः। तेन महानसं वह्निमन्महानसान्यच्च वह्निमदित्यपरभागजन्यान्वयबोधः। एतस्य च भूयःसहचारदर्शनद्वारा व्याप्तिग्रहोपयोगित्वं व्याप्तिबोधस्तूपनयादेव। दृष्टान्तस्यापि न नियमस्तन्मते दृष्टान्त उदाहरणमिति सामान्यलक्षणम्। तत्र दृष्टान्तशब्दो दृष्टान्तयोग्यावयवार्थकः। दृष्टान्तयोग्यत्वं चावयवान्तरार्थानन्वितार्थकत्वम्। तच्चोदाहरणं द्विविधमन्वयिव्यतिरेकिभेदात्। तत्रान्वय्युदाहरणमाह साध्यसाधर्म्यात् हेतौ साध्यसहचारात् तद्धर्मभावी एकधर्मावच्छिन्ने साध्यसाधनवत्त्वबोधको न्यायावयव इत्यर्थः। दृष्टान्त इत्यनेनान्वयादवयवान्तरार्थानन्वितार्थकत्वे सत्येकधर्मावच्छिन्ने साध्यसाधनवत्त्वबोधको न्यायावयवोऽन्वय्युदाहरणमिति ॥ ३६ ॥

व्यतिरेक्युदाहरणं लक्षयति।

**तद्विपर्ययाद्वा विपरीतं व्यतिरेक्युदाहरणम्**[(१)] ॥ ३७ ॥

(१) सूत्रस्यश्च वाशब्दः समुच्चय इत्येतत्सूत्रव्याख्यानावसरे तात्पर्यटीका। अत्र व्यतिरेक्युदाहरणमिति अन्यत्र सूत्रपाठपुस्तके वार्त्तिकतात्पर्यटीकादौ च न

तयोः साध्यसाधनयोर्विपर्ययाद् व्यतिरेकादेकधर्मिणीति यावत् । पूर्ववत् ल्यबलोपे पञ्चमी । एकधर्मिणि साध्यसाधनयोरभावं बोधयित्वेत्यर्थः । विपरीतं साध्याभावविपरीतं साध्यसाधकमिति यावत् । वाशब्दो दृष्टान्तवचनसमुच्चायकः । तथा च साध्यसाधनाभावसामानाधिकरण्यबोधकदृष्टान्तशाली न्यायावयवो व्यतिरेक्युदाहरणमित्यर्थः । अथवा तद्विपर्ययात् साध्यव्यतिरेकव्यापकहेतुव्यतिरेकात् तथा च साध्याभाववति साध्याभावव्यापकत्वेन हेतुव्यतिरेकवत्त्वबोधको न्यायावयव इत्यर्थः । ह्रदो धूमाभाववान् वह्न्यभावादित्यादौ यत्र धूमस्तत्र वह्निरित्याद्युदाहरणे धूमवति धूमव्यापकत्वेन वह्निबोधनात् । अथवा तद्विपर्ययादेकधर्मिणि साध्यसाधनयोरभावात् । तथा च धर्मिणि साध्याभावसाधनाभावबोधकोऽवयवान्तरार्थानन्वितार्थकन्यायावयव इति पर्यवसितम् । वाशब्दो विकल्पपरः स च प्रयोगमपेक्ष्य । तथा चान्वय्युदाहरणं व्यतिरेक्युदाहरणं वा प्रयोक्तव्यमिति ॥ ३७ ॥

क्रमप्राप्तमुपनयं लक्षयति ।

**उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः**(१) ॥ ३८ ॥

तथाशब्देन बुद्धिस्थत्वेन साध्यव्याप्यहेतुमतो बोधने बुद्धिस्थत्वज्ञानमपेक्षितं तच्च न तादृशबुद्धिं विना सा

---

दृश्यते । व्यतिरेकोदाहरणलक्षणाय सूत्रम् । तद्विपर्ययाद्वा विपरीतमिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(१) उदाहरणानन्तरमुपनयं लक्षयति । उदा-यः । अपेक्षापदं भाष्यकृद्व्याचष्टे । उदाहरणतन्त्र इति । इति तात्पर्यटीका । उद्देशक्रमसङ्गत्योपनयलक्षणाय सूत्रम् । उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनय इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

च बुद्धिरुदाहरणादेवेत्युदाहरणापेक्षत्वम् । एतेन साध्यव्याप्यहेतुमद्वाचकत्वं तथाशब्दविशेषणं सूचितम् । साध्यस्य पक्षवाचकपदस्य उप समीपे पक्षवाचकपदसमभिव्याहृततया संहारः संहृत उपन्यस्तः साध्यव्याप्यहेतुमद्बोधकतथेतिशब्द इति समुदितार्थः । एतच्चान्वय्युपनयलक्षणं तत्र तथा चायमित्येवोपनयप्रयोगात् । व्यतिरेक्युपनयमाह । न तथेति । अत्राप्युदाहरणापेक्ष इत्यस्यान्वयः । वाशब्द उपसंहारेत्यनेनान्वयसूचकः । प्रयोगविकल्पार्थो वा । पक्षवाचकपदसमीपवर्ती न तथेतिशब्दो व्यतिरेक्युपनय इत्यर्थः । उदाहरणापेक्षेत्यनेन साध्याभावव्यापकहेत्वभावाभाववाचकत्वं न तथेतिशब्दविशेषणम् । तत्र तथाशब्देन साध्याभावव्यापकहेत्वभावो बोध्यते नञा चाभाव इति तस्य चाव्ययार्थतया हेतुतावच्छेदकसम्बन्धेनेदंपदार्थे पक्षतावच्छेदकावच्छिन्ने ऽन्वयान्न तथायमिति व्यतिरेक्युपनयात् साध्याभावव्यापकहेत्वभावाभावत्वरूपव्यतिरेकव्याप्तिविशिष्टहेतुमत्पक्षलाभ इत्युभयत्रापि न्यायान्तर्गतत्वमुपादेयम् । तेन नोदासीने ऽतिव्याप्तिरिति । सामान्यलक्षणं तूदाहरणोत्थाप्याकाङ्क्षानिवर्तकन्यायावयवत्वमुदाहरणापेक्षेत्यनेन तथासूचनात् । अन्यतरोपनयत्वमिति केचित् । यद्वा उदाहरणापेक्ष उदाहरणोत्थापिताकाङ्क्षाप्रयोज्यन्यायावयव इति सामान्यलक्षणम् । तस्य चोदाहरणव्याप्तिभेदेन द्वैविध्यं तस्य च तथेति न तथेत्यादिना प्रदर्शनम् । तदप्युपलक्षणम् । तेन कदाचिद् वह्निव्याप्यधूमवानयमिति वह्न्यभावव्यापकीभूताभावप्रतियोगिमानयमिति चोपनयशरीरमिति । केचित्तु साध्यस्य पक्षस्य उदाहरणापेक्ष उदाहरणानुसारी उपन्यासः स्वप्रयोजकाकाङ्क्षोत्थापकोदाहरणबोधितव्याप्तिविशिष्टहेतु-

CC-0. In Public Domain. Digitized by eGangotri

विशिष्टपक्षबोधजनको न्यायावयव इत्यर्थः । निगमनं तु हेतुविशिष्टत्वेन न पक्षबोधकं किं तु पक्षवृत्तिहेतुबोधकम् । व्याप्तिश्चान्वयव्याप्तिव्यतिरेकव्याप्त्यन्यतरत्वेन ग्राह्या । उदाहरणबोधितेत्यन्तं परिचायकमात्रम् । अन्वय्युदाहरणोत्तरमन्वय्युपनयस्यैव व्यतिरेक्युदाहरणोत्तरं व्यतिरेक्युपनयस्यैव च न्यायावयवत्वमिति नोदाहरणविपरीतव्याप्त्युपदर्शकवाक्यातिव्याप्तिः । स चोपनयो द्विविधोऽन्वयिव्यतिरेकिभेदात् । तथेति साध्यस्योपसंहारोऽन्वय्युपनयः । न तथेति साध्यस्योपसंहारो व्यतिरेक्युपनयः । एतच्च दिक्प्रदर्शनमात्रम् । तेन क्वचिद् वह्निव्याप्यवानयं वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्चायमित्यादिप्रयोग इति प्राहुः ॥ ३८ ॥

निगमनं लक्षयति ।

**हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्**[1] ॥ ३९ ॥

हेत्वपदेशात् प्रकृतसाध्यव्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुविशेषितहेतुत्वबोधकवाक्यसमभिव्याहारात् प्रतिज्ञायाः प्रतिज्ञार्थस्य पुनर्वचनं बोधकवाक्यम् । तथा च व्याप्तिपक्षधर्मताविशिष्टहेतुविशिष्टहेतुत्वान्वितसाध्यस्य पक्षे वैशिष्ट्यावगाहिबोधजनकन्यायावयवो निगमनमित्यर्थः । अस्य चोपनयस्थायमादिपदानुषङ्गेण पक्षस्य लाभः । आकारश्चास्य अयं तस्माद्वह्निमानित्यादिः अयं तस्मात्

(१) प्रतिज्ञायाः पुनर्वचनमिति । प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणोपपत्तौ साध्यविपरीतप्रसङ्गप्रतिषेधार्थं यत् पुनरभिधानं निगमनमिति । एतस्मिंश्च सूत्रार्थे परस्यावकाशो नास्तीत्येतत्सूत्रव्याख्यानावसरे वार्त्तिकम् । निगमनस्य व्याप्तपक्षधर्मलिङ्गोप...कत्वात् तदुपदर्शकोपनयानन्तरं तल्लक्षणाय सूत्रम् । हेत्वपदेशादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

तथेत्यादिश्च । अस्याप्यन्वयव्यतिरेकभेदेन द्वैविध्यं केचिदाहुः । तस्मान्न तथेत्यादिप्रयोगमप्यङ्गीकुर्वन्ति ॥ ३९ ॥

तर्कं लक्षयति ।

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः**(१) **॥ ४० ॥**

तर्क इति लक्ष्यनिर्देशः । कारणोपपत्तित ऊह इति लक्षणम् । कारणस्यापादकस्यापाद्यव्याप्यतया गृहीतस्येति यावत् । या उपपत्तिराहार्यारोपस्तत ऊह आपाद्यस्याहार्यारोप इत्यर्थः । अत्र चापाद्यग्रहस्याहार्यारोपत्वं स्वरूपकीर्तनमापाद्यग्रहस्याहार्यत्वसम्पत्त्यर्थमापाद्यव्यतिरेकनिश्चयो हेतुरन्यथेष्टापत्तिः स्यादितिसूचनार्थेति भावः । यत्र च ह्रदादौ वह्न्याद्यभावनिश्चयदशायां ह्रदादौ वह्नेः प्रत्यक्षं जायतामितीच्छया यो ह्रदो वह्निमानित्यारोपस्तत्रातिव्याप्तिवारणायापादकाहार्यारोपजन्यत्वं विशेषदर्शनजन्यस्य संशयोत्तरप्रत्यक्षस्य वारणायाहार्यत्वं विशेषितम् । अत्राप्यारोपत्वं स्वरूपकीर्तनमिति । उदाहरणं च पर्वतो यदि निर्वह्निः स्यात् तदा निर्धूमः स्यादित्यादि । ननु तर्कस्य किं फलमित्यत आह । अविज्ञातेति । तत्त्वज्ञानार्थं तत्त्वनिश्चयार्थं संशयनिवृत्तिद्वारेति शेषः । तथा चापादकवत्त्वसंशयप्रतिबन्ध एव तर्कस्य फलमिति भावः । केचित्तु ऊह इति तर्कलक्षणम् । कारणोपपत्तित इति कारणप्रदर्शनपरम् । ऊहत्वं चापादयामीत्यादिप्रतीतिसिद्धमानसत्वव्याप्यजातिविशेष इति । स चायं पञ्चविध आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदात् ।

(१) अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इति सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

यस्य स्वीकारे स्वस्मिन् स्वापेक्षारोपो भवति तदापादकः प्रसङ्ग आत्माश्रयः । अपेक्षा चोत्पत्तिस्थितिज्ञप्तिषु साक्षादपेक्षा । यद्यैतद्घटो यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यात् । तथायं घटो यद्येतद्घटवृत्तिः स्यादेतद्घटभिन्नः स्यात् । तथैतद्घटज्ञानत्वं यद्येतद्घटज्ञानजन्यतावच्छेदकं स्यात् तदैतद्घटज्ञाननिष्ठभेदप्रतियोगितावच्छेदकं स्यादिति । स्वापेक्ष्यापेक्षितत्वारोपप्रयोजकारोपविषयापादकः प्रसङ्गोऽन्योन्याश्रयः । अत्रापि साक्षादपेक्षा उत्पत्तिस्थितिज्ञप्तिषु बोध्या । यथायं घटो यद्येतद्घटजन्यजन्यः स्यादेतद्घटभिन्नः स्यादिति । ज्ञप्तौ स्थितौ च स्वयमुदाहार्यम् । स्वापेक्षणीयापेक्षितापेक्ष्यत्वारोपप्रयोजकारोपविषयापादकः प्रसङ्गश्चक्रकः । अत्र त्वपेक्षा साक्षात्परम्परासाधारणी उत्पत्तिस्थितिज्ञप्तिषु बोध्या । यथैतद्घटो यद्येतद्घटजन्यजन्यजन्यः स्यादेतद्घटभिन्नः स्यादित्यादि । अनवस्था चाप्रामाणिकानन्तप्रवाहारोपप्रयोजकारोपविषयापादकः प्रसङ्गः । घटत्वं यदि घटजन्यताव्याप्यं स्याद् घटान्यवृत्ति स्यादित्यादि । उक्तचतुष्कान्यप्रसङ्गः प्रमाणबाधितार्थः । सोऽपि द्विविधो व्याप्तिग्राहको विषयपरिशोधकश्च । तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादिति । द्वितीयो यथा पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादि । प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवादिज्ञानं तु न तर्को यथोक्तलक्षणाभावात् किं तु तत्त्वनिर्णायकत्वसादृश्यात् क्वचित् तथा प्रयोगो गौणः ॥ ४० ॥

निर्णयं लक्षयति ।

विमृष्य पक्षप्रतिपक्षाभ्यामर्थावधारणं



CC-0. In Public Domain. Digitized by eGangotri

**निर्णयः**[1] ॥ ४१ ॥

अर्थावधारणं निर्णयः कथास्थलीयनिर्णयः । अवधारणत्वं चावधारयामीतिप्रतीतिसाक्षिकविषयिताविशेषशालित्वं तच्च संशयव्यावृत्तं निर्णयविशेषवृत्ति । सा च विषयिता संशयोत्तरं विशेषदर्शनादिप्रयोज्येत्याह । विमृश्येत्यादि । विमृश्य सन्दिह्य पक्षप्रतिपक्षाभ्यां जायमानं यदर्थावधारणं स निर्णय इत्यन्वयः । पक्षोऽनुकूलो न्यायादिप्रयोज्यविशेषदर्शनमिति यावत् । प्रतिपक्षः प्रतिकूलः । विरोधिसाधनस्येति शेषः । तथा च परकीयसाधने दूषणोपन्यासादीति फलितम् । निर्णयसामान्यलक्षणं च तदभावाप्रकारकत्वे सति तत्प्रकारकज्ञानत्वमिति प्राञ्चः । नव्यास्तु संशयत्वघटकविषयताभिन्नप्रकारतानिरूपकज्ञानत्वम् । संशयत्वघटकत्वं च कस्यचिन्मते प्रकारताद्वयनिरूपितविशेष्यतानिरूपितत्वं कस्यचिन्मते प्रकारित्वावच्छिन्नप्रकारितानिरूपितत्वादिकमित्याहुः । नव्यास्तु अवधारणत्वाख्यविषयित्वान्तरे मानाभावः । अवधारणपदनिर्णयपदयोः पर्यायता । तथा चात्रार्थपदं तत्तदर्थपरमवधारणपदं चाभावाप्रकारकज्ञानपरं तत्तदर्थाभावाप्रकारकज्ञानमिति समुदितार्थः । अथवा अर्थपदमर्थप्रकारताकपरं तत्पुरुषे पूर्वपदस्य सम्बन्धिलाक्षणिकत्वात् अवधारणपदं च प्रकारताद्वयानिरूपितविशेष्यताशालिज्ञानपरं तेन न समुच्चयासङ्ग्रहः । प्रकारताद्वयानिरूपितविशेष्यतानिरूपित-

---

(१) एतस्मिंस्तर्कविषये विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति सूत्रमिति वार्त्तिकम् । भाष्यकारो निर्णयलक्षणमवतारयति । एतस्मिंस्तर्कविषय इति तात्पर्यटीका । एवं च वार्त्तिके एतस्मिंस्तर्कविषय इति भाष्यलेखधारणमवशिष्टं सूत्रमित्यवगम्यते ।

CC-0. In Public Domain. Digitized by eGangotri

प्रकारताशालिज्ञानमवधारणपदार्थः तादात्म्येन चरमप्रकारतायामर्थपदार्थस्यार्थनिष्ठस्यान्वय इति वा । वस्तुतो निरुक्तप्रकारताशालिज्ञानमेवावधारणपदार्थः । अर्थपदं तादृशार्थतात्पर्यग्राहकम् । विमृष्येत्यादिकं तु जल्पवितण्डास्थलाभिप्रायेणेति । तदुक्तं भाष्ये । वादे विमर्षवर्जमिति । प्रत्यक्षतः शब्दाच्च निर्णये न विमर्षपक्षप्रतिपक्षाद्यपेक्षेति । इदमुपलक्षणम् । स्वार्थानुमानस्थले ऽपि न विमर्षाद्यपेक्षेति ॥ ४१ ॥

समाप्तं न्यायोत्तराङ्गप्रकरणम् ॥

उत्तराङ्गपदं प्रयोज्यसहकार्यन्यतरपरं तेन तर्कनिर्णययोः सङ्ग्रहः ॥

**इति न्यायसूत्रे प्रथमाध्यायस्याद्यमाह्निकम् ॥**

प्रकरणसमूह आह्निकम् । तत्समूहश्चाध्यायः । समूहत्वं चानेकत्वम् ॥

इति श्रीराधामोहनगोस्वामिभट्टाचार्यविरचितन्यायसूत्रविवरणे प्रथमाध्यायस्याद्याह्निकविवरणम् ॥



CC-0. In Public Domain. Digitized by eGangotri

प्रथमाह्निकेन सप्रमेयप्रमाणनिरूपणानन्तरं सन्दिग्धार्थनिर्णयं सप्रयोजकं लक्षयित्वा द्वितीयाह्निकेन कथादिप्रकरणचतुष्टयात्मकेन वादादि लक्षयितुं निर्णयानुकूलतया प्रथमतो वादं लक्षयति ।

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः**(१) ॥ १ ॥

यद्यपि निर्णयानुकूलतया पूर्वाह्निक एवायं वक्तुमुचितस्तथापि कथान्तर्गततयाऽत्रास्य लक्षणम् । पक्षस्य प्रतिपक्षस्य परिग्रहो विरोधिकोट्युपन्यासो निर्णयानुकूलवचने यत्र वादिप्रतिवादिवाक्यजाते स वाद इत्यन्वयः । तथा च तत्त्वनिर्णयोद्देश्यकं विरोधिकोटिद्वयसाधनतयोपन्यस्तोक्तिप्रत्युक्तिरूपवाक्यजातमिति फलितम् । अथवा पक्षाय तत्त्वनिर्णयाय प्रतिपक्षयोः मिथो विरुद्धकोट्योः परिग्रहः साधनयोग्योक्तिप्रत्युक्तिरूपवाक्यजातं वादः । परिगृह्यते निर्णीयते ऽनेनेतिव्युत्पत्तेः । तत्त्वनिर्णयोद्देश्यकत्वनिवेशेन जल्पवारणम् । अप्रमाणेन तत्त्वनिर्णयदूषणाभिधानवारणाय विशेषणमाह । प्रमाणतर्कसाधनोपालम्भ इति । प्रमाणतर्काभ्यां साधनोपालम्भौ यत्र स इत्यर्थः । तत्र साधनं तत्त्वनिर्णयानुकूलव्यापारः । उपालम्भो विपरीतकोटिसाधने दूषणोपन्यासः । साधनदूषणाभिधानं सिद्धान्तानुसारेणेत्याह । सिद्धान्ताविरुद्ध इति । साधनं पञ्चावयवप्रयोगेनैवेत्याह । पञ्चावयवोपपन्न इति । एतेन प्रमाणाभासतर्काभासापसिद्धान्तन्यूनाधिकावयवाभास-

(१) तत्र प्रमाणतर्कसाधनोपालम्भ इति सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

दृष्टान्तासिद्ध्यादेरुद्भावनं नियम्यते । भाष्यकारानुसारिणस्तु वादस्य वीतरागकथात्वेन तत्त्वनिर्णयस्योद्देश्यतया पुरुषदोषस्याविज्ञातार्थादेरिव न्यूनाधिकयोरपि नोद्भावनं तेन पञ्चावयवोपपन्न इति प्रायिकत्वाभिप्रायेणेत्याहुः । केचित्तु सिद्धान्तेत्यादिविशेषणद्वयेन तावन्मात्रनिग्रहस्थानयोग्यत्वं तावदतिरिक्तनिग्रहस्थानोपन्यासायोग्यत्वं वा लक्षणघटकतया विवक्षितं निग्रहस्थानं प्रतिज्ञाहान्यादीनामेकैकं धृत्वा तदुपन्यासायोग्यत्वमिति निष्कर्षः । तेनोक्तजल्पविशेषवारणमित्याहुः । अन्ये तु वाद इति लक्ष्यनिर्देशः । पक्षप्रतिपक्षौ विप्रतिपत्तिकोटी तयोः परिग्रहस्तत्साधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसन्दर्भः । यद्वा पक्षप्रतिपक्षौ विप्रतिपत्तिविषयकोटिद्वयसाधने तयोरुपग्रहस्तदुबोधकोक्तिप्रत्युक्तिरूपशब्दचयः । तावन्मात्रं च कथान्तरातिव्याप्तमित्यत आह । प्रमाणेत्यादि । प्रमाणतर्काभ्यां तत्त्वेन ज्ञाताभ्यां साधनोपलम्भौ यत्र स तथा । तथा चोभयत्रापि प्रमाणसद्भावे कोटिद्वयस्यापि सिद्धिः स्यादतस्तत्त्वेन ज्ञाताभ्यामिति । ज्ञानमनाहार्यं विवक्षितम् । उपालम्भो दूषणम् । जल्पादौ तु प्रमाणाभासत्वेन ज्ञाताभ्यामपि साधनोपालम्भौ भवत इति तद्वारणं तथेतरथा तद्धेतोरेव दुष्टत्वम् । इत्थं च प्रमाणाभासत्वप्रकारकतर्काभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यत्वे सतीत्यर्थस्तेन तादृशजल्पविशेषे नातिव्याप्तिः । तत्र च निग्रहस्थानविशेषनियमार्थं सिद्धान्तेत्यादि विशेषणद्वयमित्याहुः । वादाधिकारिणस्तु तत्त्वबुभुत्सवः प्रकृतोक्तिका अविप्रलम्भका यथाकालस्फुर्तिका अनाक्षेपका युक्तिसिद्धप्रत्येतारः । भाष्ये । अनुविधेयस्थेयःसभ्यपुरुषवती जनता

CC-0. In Public Domain. Digitized by eGangotri

सभा। तत्रानुविधेयो राजा स्थेयान् मध्यस्थः। सा च वादे नावश्यकी वीतरागकथात्वादिति ॥ १ ॥

जल्पं लक्षयति।

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनो[1]पालम्भो जल्पः[2] ॥ २ ॥**

यथोक्तेन वादलक्षणेनोपपन्नो विशिष्टो यश्छलजातिनिग्रहस्थानैः साधनस्य परकीयसाधनस्योपालम्भो दूषणं यत्र तद्वाक्यजातं जल्प इत्यर्थः। छलेत्यादिना विजिगीषुत्वमात्रं तात्पर्यविषयीकृतं विजिगीषुणैव च्छलादिकरणात्। न तु च्छलादिभिरुपालम्भस्य लक्षणघटकत्वमिति। साधनोपालम्भः साधनाय स्वसाध्यसाधनायोपालम्भो परकीयसाधनदूषणं यत्रेति। तथा च च्छलादिभिः परकीयसाधनदूषणाभिधाने ऽर्थतः स्वसाध्यसिद्धिर्भवतीति केचित्। अत्र जयोद्देश्यकत्वलाभात् तत्त्वनिर्णयोद्देश्यकत्वं विहाय वादलक्षणमत्र विशेषणम्। तदपि वादेयमविरुद्धत्वात्। न चास्य वादविशेषत्वापत्तिः वादे जयेच्छाराहित्यस्य विशेषणात्। न च वितण्डायामतिव्याप्तिः वितण्डायां प्रतिपक्षस्थापनाहीनत्वस्य विशेषणस्य निर्देशादत्रोभयपक्षस्थापनावत्त्वलाभात्। इत्थं चोभयपक्षस्थापनावान् प्रमाणतर्कसाधनोपालम्भो जयोद्देश्यकपक्षप्रतिपक्षपरि-

(१) निग्रहस्थानेन साधनेति पाठ आदर्शपुस्तके। परं तु स्थानसाधनेत्यन्यत्र पाठदर्शनात् निग्रहस्थानैः साधनस्येतिव्याख्यानदर्शनाच्च स्थानसाधनेति पाठ एवोपनिबद्धः।

(२) उद्देशक्रमानुरोधेन वादलक्षणानन्तरं जल्पं लक्षयति। यथो–ल्पः। अत्रापि समानजातीयाभ्यां वादवितण्डाभ्यामसमानजातीयेभ्यः प्रमाणादिभ्यो व्यवच्छेदः सूत्रार्थ इति तात्पर्यटीका। वादद्वारा फलसम्बन्धेन जघन्यतया वादानन्तरमुभयपक्षस्थापनावत्त्वेन वितण्डात उत्कर्षात् ततः प्राग् जल्पलक्षणाय सूत्रम्। यथोक्तोपपन्नश्छलेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

ग्रहो जल्प इति । केचित्तु यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः । मध्यपदलोपी समासः । तथा च प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रह इत्यस्य योग्यतया परामर्शः । अन्यथा जल्पस्य वादविशेषत्वापत्तेः । प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां न तु ज्ञाने ऽनाहार्यत्वं विवक्षितमारोपितप्रमाणभावे ऽपि जल्पनिर्वाहात् । उभयपक्षस्थापनावत्त्वेन विशेषणान्न वितण्डायामतिव्याप्तिः । स्थापनावत्त्वादेव च पञ्चावयवनियमोऽपि लभ्यत इति वदन्ति । अत्र छलादिभिः सर्वैरुपालम्भो न विशेषणमपि तु तद्योग्यतैव । योग्यतावच्छेदकं वादभिन्नकथात्वमेव । तत्र चोक्तवादत्वावच्छिन्नभेदस्तत्तद्वादभेदो वा विशेषणमिति ॥ २ ॥

वितण्डां लक्षयति ।

**स प्रतिपक्षस्थापनाहीनो वितण्डा**[1] ॥ ३ ॥

स जल्पः प्रतिपक्षस्थापनाहीनो वितण्डेत्यर्थः । स्थापनाहीनत्वविशेषणात् तच्छब्देनोभयपक्षस्थापनावत्त्वविशेषणं विहाय जल्पपरिग्रहः । प्रतिपक्षो द्वितीयपक्षस्तथा च प्रतिपक्षस्थापनाहीनविजिगीषुकथा वितण्डेति । न च स्वस्य स्थापनीयाभावात् कथमस्यां कथायां प्रवृत्तिरिति वाच्यम् । परपक्षखण्डनेनैव जयस्यैवोद्देश्यत्वात् । परे तु परपक्षखण्डनेनैव स्वपक्षसिद्धेरर्थादेव प्राप्तेस्तत्साधनाभावे ऽपि न प्रवृत्त्यनुपपत्तिरित्याहुः ॥ ३ ॥

वादादित्रयं कथात्वेनोपसंहरति ।

---

(१) तदेवं पक्षोऽस्यास्तीति साधनं तु नास्तीति सम्यक् सूत्रितं स प्रतिपक्षस्थापनाहीनो वितण्डेतीत्येतत्सूत्रव्याख्याने जयन्तभट्टः । जल्पोपजीवकत्वात् तदनन्तरं वितण्डालक्षणाय सूत्रम् । स प्रतिपक्षस्थापनाहीन इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

समाप्तं कथाप्रकरणम् ॥

यद्यपि कथासामान्यं लक्षयित्वैव तद्विभागो युक्तस्तथापि विशेषलक्षणेषु कृतेषु सामान्यलक्षणं स्फुटं भविष्यतीति विशेषलक्षणान्येव कृतानि । कथासामान्यलक्षणं च तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्यविप्रतिपत्तिविषयकोटिद्वयसाधनन्यायादिवचनत्वम् । लौकिकविवादवारणाय विप्रतिपत्तीत्यादि । कथाधिकारिणस्तु तत्त्वनिर्णयविजयाभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवोऽकलहकारिणः कथौपयिकव्यापारसमर्था इति । तत्र क्रमः । वादिप्रतिवादिवाक्यात्मकविप्रतिपत्त्या मध्यस्थसंशयानन्तरं कः साध्यवानिति तेन पृष्टेन वादिना पक्षे साध्यनिर्देशः क्रियते ततो मध्यस्थस्य कुत इतिजिज्ञासायां वादिना स्वसाध्यसाधनं प्रयुज्य नायं हेत्वाभासस्तल्लक्षणायोगादितिसामान्यतो नायमसिद्ध इत्यादिविशेषतश्चोक्ते प्रतिवादिना स्वाज्ञानादिनिरासाय परोक्तमनूद्य तदनुवादं विनैव वा सम्भावनादेरलाभे उच्यमानग्राह्याणामप्राप्तकालार्थान्तरनिरर्थकापार्थकानामलाभे उक्तग्राह्याणां प्रतिज्ञान्तरप्रतिज्ञासन्न्यासहेत्वन्तराप्रतिज्ञातार्थविक्षेपमतानुज्ञान्यूनाधिकपुनरुक्तनिरनुयोज्यानुयोगापसिद्धान्तानामलाभे पर्यनुयोज्योपेक्षणस्य मध्यस्थोद्भाव्यतया अनुपन्यासार्हत्वेन यथासम्भवं हेत्वाभासेन परोक्तं दूषयित्वा स्वपक्ष उपन्यसनीयः । ततो वादिना तृतीयपक्षाश्रितेन स्वपक्षदूषणमुद्धृत्य पूर्वनिर्दिष्टरीत्या यथासम्भवं प्रतिवादिनः स्थापनायां दूषणमभिधीयते ऽन्यथा क्रमविपर्यासे ऽप्राप्तकालमनवसरे दूषणोद्भावने च निरनुयोज्यानुयोगो यथा त्यद्वयसि चेत् प्रतिज्ञाहानिर्विशेषयसि चेद्धेत्वन्तरमित्यादि । प्रतिज्ञाहान्यादिवद्धेत्वाभासानामु-

CC-0. In Public Domain. Digitized by eGangotri

क्तग्राह्यत्वाविशेषे ऽप्यर्थदोषत्वेनाप्रधानत्वाच्चरममनुसन्धानमेवं यथायथं प्रधानस्य प्रथममुपन्यास इति । वादस्थले त्वर्थदोषाणामेव प्राधान्यं बोध्यम् ॥

विभागमुखेन हेत्वाभासान् लक्षयति ।

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः**[1] ॥ ४ ॥

अत्र बहुवचनेन सामान्यतो विशेषतश्चोद्भाव्यत्वमुक्तम् । लक्षणं तु सव्यभिचारादिनिर्देशेन सव्यभिचाराद्यन्यतमत्वमिति प्राञ्चः । तन्न । तादृशस्य हेत्वाभासत्वे ह्रदे वह्नेः साधने धूमो दुष्ट इत्यादिप्रयोगानुपपत्तेर्दुषधात्वर्थस्य तादृशान्यतमत्वस्य साधन इत्यनेनान्वयायोगात् । यत्तु हेत्वाभासपदस्य हेतुवदाभासन्त इतिव्युत्पत्त्या हेतुवदाभासमानत्वमेव लक्षणं स्फुटम् । तच्च हेतुभिन्नत्वे सति हेतुत्वेन ज्ञायमानत्वम् । हेतुत्वं च गमकत्वं पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वरूपपञ्चोपपन्नत्वमिति यावत् । तत्र तादृशरूपपञ्चाभाववत्त्वमेव लक्षणं तस्यैव दूषकतायामुपयोगात् । न चासाधकतायां प्रत्येकाभावस्यैव गमकत्वसम्भवे समुदायाभावस्य व्यर्थत्वमिति वाच्यम् । प्रत्येकाभावस्य समुदायाभावाघटकत्वादिति । तन्न । पृथिवीतरेभ्यो भिद्यत इत्यादौ सपक्षाप्रसिद्धेः । न च सपक्षसत्त्वमित्यत्र सपक्षत्वं न निश्चितसाध्यवत्त्वं किं तु साध्यवत्त्वमात्रमिति पृथिवीतरेभ्यो भि-

(१) हेत्वाभासेषु लक्षयितव्येषु अर्थाक्षिप्तसामान्यलक्षणमेषां विभागोद्देशपरं सूत्रम् । सव्य-साः । इति तात्पर्यटीका । कः पुनरस्य सूत्रस्यार्थः विभागोद्देशो नियमार्थ इत्येतत्सूत्रव्याख्याने वार्त्तिकम् । तत्राक्षिप्तसामान्यलक्षणविभागोद्देशसूत्रम् । सव्यभिचारेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

द्यत इत्यादौ न तदप्रसिद्धिरिति वाच्यम् । प्रमेयमाकाशादित्यादौ विपक्षाद्यप्रसिद्धेः । एवं पर्वते वह्नेः साधने धूमो न हेत्वाभास इत्यादिप्रयोगानुपपत्तेः साध्याभाववत्पक्षकत्वरूपबाधितत्वाद्यप्रसिद्धेः । अत एव हेतौ पक्षवृत्तित्वग्रहविरोधितावच्छेदकं यद्रूपं यच्च हेतौ साध्यसामानाधिकरण्यग्रहविरोधितावच्छेदकं यच्च हेतौ विपक्षावृत्तित्वग्रहविरोधितावच्छेदकं रूपं यच्च पक्षे साध्यवत्त्वग्रहविरोधितावच्छेदकं तावदन्यतमरूपवत्त्वमेव हेत्वाभासत्वं प्रत्येकरूपस्यासाधकतागमकत्वसम्भवे ऽपि अधिकसङ्ग्राहकतया न वैयर्थ्यमिति । ग्रहश्च निरूप्यनिरूपकभावापन्नभ्रमप्रमासाधारणविषयिताकज्ञानरूपस्तेन क्वचिद्विपक्षाद्यप्रसिद्धावपि न क्षतिरिति प्रत्युक्तम् । व्यापकताग्रहविघटकतया दोषस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदकनिष्ठस्यासङ्ग्रहापत्तेः । न च मणिमन्त्रादिन्यायेन तस्य विपक्षावृत्तित्वग्रहविरोधितया सङ्ग्रहः साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यस्यैव वा व्याप्तित्वमिति वाच्यम् । तथापि व्यतिरेकव्याप्तिविघटकस्य हेतुनिष्ठाभावाप्रतियोगित्वादेरसङ्ग्रहात् । न च व्यतिरेकव्याप्तिरनुमितौ न प्रयोजिकेति तद्विघटकस्यालक्ष्यतया न दोष इति वाच्यम् । तथापि ह्रदे वह्नेः साधने धूमो दुष्ट इत्यादिवाक्यस्यानन्वयापत्तेः । केचित्तु पक्षसत्त्वविपक्षासत्त्वसपक्षसत्त्वव्यतिरेकेण व्याप्तिविशिष्टपक्षधर्मताविरोधित्वम् । अबाधितत्वासत्प्रतिपक्षितत्वव्यतिरेकेण चानुमितिविरोधित्वम् । तेनानुमितितत्कारणज्ञानान्यतरविरोधित्वं पर्यवस्यति । अथवा सव्यभिचारादिपञ्चविधत्वप्रदर्शनेन तादृशान्यतरविरोधित्वमभिप्रेतं सूत्रकृतः । हेत्वाभासपदं च हेतुवदाभासन्त इतिव्युत्प-

CC-0. In Public Domain. Digitized by eGangotri

रया दुष्टहेतुपरं व्यभिचारेण सह वर्तमानः सव्यभिचार इति तत्प्रदर्शनेन व्यभिचारादिदोषस्तद्वत्त्वं दुष्टत्वमिति न तु दुष्टपदं पारिभाषिकमिति सूचितम् । प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वव्यापकप्रतिबध्यताप्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारकप्रकृतपक्षविशेष्यकग्रहत्वव्यापकप्रतिबध्यतान्यतरनिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकविशिष्टवत्त्वं हेत्वाभासत्वमिति निष्कर्षः । तेन समूहालम्बनानुमित्यादिनिष्ठप्रतिबध्यतामादाय नातिप्रसङ्गः । न वा भ्रमादिविषयतामादायातिप्रसङ्गो भ्रमविषयविशिष्टस्याप्रसिद्धेः । प्रत्येकविषयतायाश्च प्रतिबन्धकतातिरिक्तवृत्तित्वादित्याहुः । अन्ये तु प्रकृतानुमितिविरोधिरूपवत्त्वमेव सामान्यलक्षणमभिप्रेतम् । अनुमितिश्च साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारिकैव जायत इति न कोऽपि दोष इति प्राहुः । अत्रेदमवधेयम् । ह्रदादौ वह्नेः साधने धूमो दुष्ट इत्यादौ तादृशसमभिव्याहारविशेषवशाद्ध्रदपक्षकवह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकविशिष्टो दुषधात्वर्थः । साधन इत्यन्तं तादृशानुमितिविशेषघटितनिरुक्तार्थतात्पर्यग्राहकम् । न त्वनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकविशिष्टपदार्थ एव दुषधात्वर्थः । तदेकदेशे ऽनुमितौ ह्रदविशेष्यतानिरूपितवह्निविधेयतानिरूपकत्वस्य साधन इत्यन्तार्थस्यान्वय इति तथात्वे ऽनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्यानुमितिप्रतिबन्धकताशब्दार्थस्याप्रसिद्धेः । वस्तुतस्तु अनुमितित्वव्यापकताघटकपदार्थस्तोमप्रतिबध्यतादौ दुषधातोः खण्डशक्त्यैव प्रसिद्धिरुपपादनीया । तथाहि ह्रदपदं वह्निव्याप्यधुमत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वनिष्ठविशेष्यतावच्छेदकतापरं तस्याश्च

CC-0. In Public Domain. Digitized by eGangotri

निरूपकत्वसम्बन्धेन सप्तम्यर्थे ऽन्वयः । तत्र समभिव्याहारविशेषस्य नियामकत्वम् । सप्तम्यर्थो विशेष्यता साधनपदार्थविधेयतान्वयिनी । साधनपदोत्तरसप्तम्या निरूपकत्वमर्थः । तथा च वह्निव्याप्यधुमवद्‌ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयतानिरूपकत्वं साधन इत्यन्तार्थः तस्य चानुमितौ तस्या वृत्तौ तस्या भेदे तस्य च प्रतियोगितायां तस्या अवच्छेदकत्वे तस्याभावे तस्य प्रतिबध्यतायां तस्या निरूपितत्वसम्बन्धेन प्रतिबन्धकतायां तस्या अवच्छेदकत्वसम्बन्धेन विषयितायां तस्याः पुनरभावे तस्याधिकरणे तस्य पुनर्वृत्तौ तस्याः पुनरभावे तस्य मुख्यविशेष्यितायां तस्या निरूपकतायां तस्याश्च पुनरवच्छेदकतायां तस्याः पर्याप्तिसम्बन्धेन धर्मावच्छिन्नैकदेशे धर्मे धर्मावच्छिन्नस्य च निष्ठाप्रत्ययार्थसम्बन्ध्येकदेशे सम्बन्धे सम्बन्धिनश्चाभेदेन सम्बन्धेन धूमे ऽन्वयः। व्युत्पत्तिवैचित्र्यादेकपदोपात्तानां पदार्थानां परस्परान्वयात् । इत्थं च निरुक्तानुमितिनिष्ठभेदप्रतियोगितानवच्छेदकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशून्यावृत्तिमुख्यविशेष्यितानिरूपकतावच्छेदकतापर्याप्तिमद्धर्मावच्छिन्नसम्बन्धी धूम इति पर्यवसितो बोधः । तादृशधर्मश्च साध्याभाववद्वृत्तिसाधनत्वादिकं संशयाहार्याप्रामाण्यज्ञानास्कन्दितनिश्चयसंस्कारादीनां दोषविषयकाणां प्रतिबन्धकतावच्छेदकविषयितावत्त्वान्न दोषविशेष्यितायां तादृशप्रतिबन्धकतानतिरिक्तवृत्तित्वहानिः । विषयितामपहाय मुख्यविशेष्यितानिवेशान्न व्यभिचारादिघटकसाध्यादावतिव्याप्तिः। सद्धेतौ च निरुक्तपर्याप्तिमद्धर्माप्रसिद्धया नातिव्याप्तिः । पर्वते वह्नेः साधने धूमो न दुष्ट इत्यादौ च धर्मत्वावच्छेदेन पर्याप्तिसम्बन्धेन निरुक्त-

CC-0. In Public Domain. Digitized by eGangotri

निरूपकतावच्छेदकताया अभावो नञा बोध्यत इति दिक् ॥ ४ ॥

कारणीभूतपरामर्शविघटकतया सव्यभिचारं लक्षयति ।

**अनैकान्तः[1] सव्यभिचारः[2] ॥ ५ ॥**

एकस्य साध्यस्य साध्याभावस्य वाऽन्ते ऽधिकरणमात्रे यस्तिष्ठति स ऐकान्तः तदन्योऽनैकान्तः । तथा च साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्य इति पर्यवसितम् । सव्यभिचारोऽपि त्रिविधः साधारणासाधारणानुपसंहारिभेदात् साध्यसाध्याभाववद्वृत्तिः साधारणः साध्यसाध्याभाववद्व्यावृत्तोऽसाधारणः । एतदन्यः केवलान्वयिधर्मावच्छिन्नपक्षकोऽनुपसंहारीति प्राञ्चः । तन्न । निरुक्तस्य सव्यभिचारलक्षणत्वे पारिभाषिकत्वापत्तेः । एवं साधारणलक्षणे सध्यवद्वृत्तित्वस्यासाधारणलक्षणे साध्याभाववद्व्यावृत्तत्वस्यानुपसंहारिलक्षणे केवलान्वयिधर्मावच्छिन्नपक्षकत्वस्य च दूषकतायामनुपयोगित्वेन व्यर्थत्वात् । एतेनैकान्तः साध्यस्य साध्याभावस्य वा व्याप्यो नञा तद्विरोधी बोध्यते । तथा च साध्यव्याप्तिग्रहविरोधित्वे सति साध्याभावव्याप्तिग्रहविरोधि यद्रूपं स व्यभिचारः तद्वान् सव्यभिचारः साध्यवद्वृत्तित्वस्य साध्याभावाभाववद्वृत्तित्वरूपतया साध्याभावव्याप्तिग्रहविरोधितया साधारणे लक्षणसमन्वय इति प्रत्युक्तम् । नव्यास्तु ऐकान्तः साध्यव्याप्योऽनैकान्तस्तद्विरोधी व्या-

---

(१) अनैकान्तिक इति पाठोऽन्यत्र दृश्यते ।

(२) उद्देशक्रमसङ्गत्या सव्यभिचारलक्षणाय सूत्रम् । अनैकान्तिकः सव्यभिचार इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

प्तिश्चान्वयतो व्यतिरेकतश्च ग्राह्या तेन हेतौ हेतुव्यापकसाध्यसामानाधिकरण्यात्मकान्वयव्याप्त्यवगाही यः साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्त्यवगाही बोधस्तत्प्रतिबन्धकतानतिरिक्तवृत्तिर्यादृशविशिष्टविषयिता तादृशविशिष्टो व्यभिचारः। तादात्म्यादियथाकथञ्चित्सम्बन्धेन तद्वान् सव्यभिचारः। तादृशविशिष्टं च साध्याभाववद्वृत्तिसाधनादि। तत्र साध्याभाववद्वृत्तिसाधनादि साधारण्यं तादात्म्यादिना तद्वान् साधारणः। विरुद्धोऽप्यनेन रूपेण लक्ष्य एव। एवं साध्यवद्वृत्तिसाधनादिकमसाधारण्यम्। अभावाप्रतियोगिसाधनादिकमनुपसंहारित्वम्। एतज्ज्ञानं च व्यतिरेकव्याप्तिग्रहविरोधीत्याहुः॥ ५॥

विरुद्धं लक्षयति।

## सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः[१] ॥ ६ ॥

वादिना न्यायादिबोधितसिद्धान्तं तत्प्रतिज्ञातसाध्यरूपमभ्युपेत्यानूद्य तद्दूषणाय प्रयुक्तस्तद्विरोधी साध्याभावव्याप्यप्रकृतहेतुर्विरुद्ध इत्यर्थः। प्रयुक्त इत्यनेन पक्षवृत्तित्वे सतीति लभ्यते अन्यथा दूषणानुपपत्तेः। अथवा प्रतिज्ञायां सिद्धस्य पक्षस्यान्ते साध्यमभिधीयते तथा च साध्यमभ्युपेत्योद्दिश्य तत्साधनाय प्रयुक्तो यो वस्तुगत्या साध्याभावव्याप्यो हेतुः स विरुद्धः। यथा वह्निमान् ह्रदत्वादित्यादि। तथा चात्रापि कल्पे पक्षवृत्तित्वे सति साध्याभावव्याप्यः प्रकृतहेत्वादिरेव विरोधस्तादात्म्यादि-

(१) सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति। कोऽस्य सूत्रस्यार्थ इति वार्त्तिकम्। उद्देशक्रमसङ्गत्या विरुद्धलक्षणाय सूत्रम्। सिद्धान्तमभ्युपेत्येत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

यथाकथञ्चित्सम्बन्धेन तद्वान् हेतुर्विरुद्धः । एतज्ज्ञानं च व्यावर्तकधर्मदर्शनविधया साध्यवत्तांशे विरोधि । न च सत्प्रतिपक्षाविशेषः तत्र द्वौ हेतू अत्र त्वेक एव साध्याभावव्याप्तः साध्यसाधकतयोपन्यस्त इत्यशक्तिविशेषोन्नायकत्वेन विशेषात् । वस्तुतस्तु साध्याभावव्याप्यः प्रकृतहेतुरेव विरोधो न तु पक्षवृत्तित्वघटितो हेतौ साध्याभावव्याप्तिग्रहसत्त्वे हेतुमद्धर्मिकसाध्यानुमित्यनुदयात् । अनुमितौ हेतुभानानियममतेऽपि साध्याभावव्याप्यो हेतुर्हेतुमानितिज्ञानद्वयस्यापि विरोधितया परामर्शे पक्षे हेतुमत्त्वभानात् हेतौ साध्याभावव्याप्तिग्रहे नियमतस्तद्धेतुकानुमितिप्रतिरोधाच्च । तत्र च व्याप्तेरन्वयव्यतिरेकभेदेन द्वैविध्याद् विशेष्यविशेषणभावाच्च नानाविधो विरोधः । तथा च साध्यव्यापकीभूताभावप्रतियोगी प्रकृतहेतुः हेतुनिष्ठतादृशप्रतियोगित्वं हेतुव्यापकः साध्याभावः साध्याभाववृत्ति हेतुव्यापकत्वमित्यादि । अन्वयव्याप्तिघटकसामानाधिकरण्यभागस्य दूषकतायामनुपयोगित्वेन परित्यक्त इति । लक्षणं तु हेतुमद्धर्मिकसाध्यवत्त्वग्रहविरोधिरूपवत्त्वम् । न च हेतुमत्त्वावच्छेदेन साध्याभावस्यापि तादृशग्रहविरोधितया तत्रातिव्याप्तिरिति वाच्यम् । साध्यव्याप्तिग्रहाविरोधित्वेन तादृशविरोधिविशेषणात् । अत एव तस्य व्यभिचारमध्य एव निवेश इति । केचित्तु साध्यासमानाधिकरणहेत्वादिकमेव विरोधो हेतौ साध्यसामानाधिकरण्यग्रहविरोधिरूपत्वं तल्लक्षणम् । एवं च व्यभिचारलक्षणेऽन्वयव्याप्तिग्रहविरोधित्वस्थले साध्ये हेतुव्यापकताग्रहविरोधित्वं वक्तव्यम् । असाधारण्यं तु साध्यव्यापकीभूताभावप्रतियोगिहेत्वादिकं तज्ज्ञानं च कथञ्चित् साध्यधर्मिकहेतुव्यापकताग्रहविरोधीत्याहुः ॥ ६ ॥

CC-0. In Public Domain. Digitized by eGangotri

प्रकरणसमं लक्षयति ।

**यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः[१] ॥ ७ ॥**

स हेतुः साध्यस्य साध्याभावस्य वा निर्णयार्थमपदिष्टः प्रयुक्तः प्रकरणसम इत्यर्थः । ननु हेतुमात्रस्य तथाप्रयोगात् तस्य प्रकरणसमत्वं स्यादित्यत आह । यस्मात् प्रकरणचिन्तेति । प्रकरणं पक्षप्रतिपक्षाविति भाष्यम् । तथा च प्रकरणस्य साध्यवतस्तदभाववतो वा पक्षस्य चिन्ता तुल्यबलाभ्यां हेतुभ्यां परस्परप्रतिरुद्धकार्यकत्वादविशेषतोऽनिर्णयाज् जिज्ञासेत्यर्थः । प्रकरणेन साध्यसाधकेन समः साध्याभावसाधकः साध्याभावसाधकेन वा समः साध्यसाधक इतिव्युत्पत्तेः । यद्वा प्रकृष्टं करणं लिङ्गं लिङ्गपरामर्शो वा तस्य चिन्ता को हेतुरनयोः स्वसाध्यसाधक एतयोः को वा परामर्शः प्रमेति वा जिज्ञासा । यस्मादित्यादि तु स्वरूपकीर्तनमात्रम् । लक्षणं तु तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वम् । तुल्यबलत्वं चाप्रामाण्यग्रहानास्कन्दितत्वम् । एवं च विरोधिपरामर्शकालीनपरामर्शविषयत्वदशायां सद्धेतोरपि प्रकरणसमत्वं तादृशपरामर्शविरहदशायामसद्धेतोरपि न प्रकरणसमत्वमिति । नव्यास्तु यस्मादनन्तरं यस्य प्रयोगानन्तरमिति यावत् । प्रकरणस्य प्रकृष्टकरणस्य साध्याभावव्याप्तिपक्षधर्मताविशिष्टहेतोश्चिन्ता प्रयोक्तव्यत्वेन चिन्ता सम्भवतीति शेषः । निर्णयार्थं साध्यनिर्णयार्थमपदिष्टः सा-

(१) यस्मात् प्रकरणचिन्तेत्युक्तं सूत्रकृतेत्येतत्सूत्रव्याख्यानावसरे तात्पर्यटीका उद्धेशक्रमसङ्गत्या प्रकरणसमलक्षणाय सूत्रम् । यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसम इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

ध्यव्याप्तिपक्षधर्मतयोरन्यतरभ्रमेण तद्रूपेण प्रयुक्तः स हेतुः प्रकरणसमः प्रकरणस्य समः तद्भिन्नत्वे सति अनुमित्युपयोगित्वेन प्रयुक्तः। इत्थं च साध्याभावव्याप्यहेत्वन्तरवत्पक्षादिरेव दोषो येन केनापि सम्बन्धेन तद्वान् दुष्ट इति फलितम् । अस्य सन् प्रतिपक्षो यस्येतिव्युत्पत्तिसिद्धं नामान्तरं सत्प्रतिपक्ष इति । एवं दोषे ऽपि सत्प्रतिपक्षपदप्रयोगः । सत्प्रतिपक्षदोषलक्षणं तु विशिष्टपक्षसाध्यग्रहाविरोधित्वे सति प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वे च सति प्रकृतपक्षे साध्यवैशिष्ट्यग्रहविरोध्युन्नायकत्वम् । दलव्यावृत्तिरूहनीयेत्याहुः । अत्र काञ्चनमयः पर्वतो वह्निमानित्यादौ काञ्चनमयत्वाभावव्याप्यवत्पर्वतादिवारणाय विशिष्टपक्षग्रहाविरोधित्वदलम् । पर्वतः काञ्चनमयवह्निमानित्यादौ काञ्चनमयत्वाभावव्याप्यवद्वह्न्यादिवारणाय विशिष्टसाध्यग्रहाविरोधित्वदलम् । ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यजलत्वव्याप्यवद्ह्रदादिवारणाय द्वितीयसत्यन्तदलम् । तत्रैव वह्न्यभाववद्ह्रदादिरूपबाधवारणाय विशेष्यदलम् ॥ ७ ॥

साध्यसमं लक्षयति ।

**साध्यत्वात् साध्याविशिष्टः साध्यसमः[१] ॥ ८ ॥**

साध्यत्वात साधनीयत्वात् साध्याविशिष्टः साध्यवत् पक्षे ऽनिश्चितो हेतुः साध्यसमोऽसिद्ध इति च गीयते। यद्यपि पक्षे हेतोरनिश्चय एवासिद्धिरूपो दोष इति लभ्यते तथापि पक्षे हेतुसत्त्वे तदनिश्चयः पुरुषदोषा-

(१) साध्याविशिष्टः साध्यत्वात् साध्यसम इत्यन्यत्र सूत्रपाठो दृश्यते । यथा चास्माभिः सूत्रं वर्णितं तथा चोदाहृतम् । तथायमसम्बद्धो दोषो न सूत्रार्थो विज्ञातो नाक्षरार्थं इत्येतत्सूत्रव्याख्याने वार्त्तिकम् । उद्देशक्रमसङ्गत्या साध्यसमलक्षणाय सूत्रम् । साध्याविशिष्टः साध्यत्वात् साध्यसम इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

देव न तु हेतोर्दुष्टत्वं तेनेति तदनिश्चयप्रयोजकरूपवन्नि-
ष्ठहेत्वभावादिरेव मुनेरभिप्रेत इति। वस्तुतः साध्या-
विशिष्ट इत्यस्य साध्यं यथा पक्षवृत्तितया असिद्धं तथा
हेतुरपि व्याप्तिपक्षधर्मतया असिद्धो व्याप्तिपक्षधर्मताविशिष्टहेतोरेव गमकत्वात्। निर्णयार्थमपदिष्ट इत्यनेनानुवृत्त-
पूर्वसूत्रस्थेनान्वयात् तथातात्पर्यादित्यर्थः। एवं च व्याप्य-
त्वासिद्धितदन्तर्गतसाध्यसाधनाप्रसिद्धीनां आश्रयासि-
द्धिस्वरूपासिद्ध्योश्च लाभो विशेषणस्यासिद्धत्वे विशिष्ट-
स्याप्यसिद्धत्वात्। तेनासिद्धिस्त्रिविधा स्वरूपासिद्धिव्या-
प्यत्वासिद्ध्याश्रयासिद्धिभेदात्। यद्यपि व्यभिचारस्याप्य-
त्रैव व्याप्यत्वासिद्धावन्तर्भावसम्भवे तस्य पृथग्विभागः
कथमिति तथापि स्वतन्त्रेच्छस्येत्यादिन्यायेन स्वातन्त्र्ये-
णोपादानम्। असिद्धिसामान्यलक्षणं तु विशिष्टसाध्यसा-
धनग्रहविरोधितानवच्छेदकं यत् साध्यधर्मिकहेतुव्यापक-
त्वावगाहिहेतुधर्मिकसाध्यसामानाधिकरण्यावगाहिग्रह-
विरोधितावच्छेदकं तदन्यत्वे सति साध्याभाववदवृत्ति-
त्वविशिष्टसाध्यसामानाधिकरण्यावच्छिन्नहेतुतावच्छेद-
कावच्छिन्नप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्यकग्रह-
विरोधितावच्छेदकरूपत्वमिति। निरुक्तविशिष्टसाध्यसा-
मानाधिकरण्यग्रहं प्रति साध्याभाववदवृत्तित्वग्रहस्य सा-
ध्यासामानाधिकरण्यग्रहस्य च विरोधितया साधारण्या-
साधारण्यरूपयोर्वारणाय सत्यन्तम्। साध्याप्रसिद्धिसा-
धनाप्रसिद्धिसङ्ग्रहाय सत्यन्तघटकमनवच्छेदकान्तम्।
व्यापकताज्ञानस्य निरुक्तसाधारण्यग्रहाविरोधित्वे सत्य-
न्तदले व्यापकत्वावगाहित्वमपहाय हेतौ साध्याभाववद-
वृत्तित्वावगाहित्वं वक्तव्यम्। व्याप्यत्वासिद्धिरपि त्रिधा
साध्याप्रसिद्धिसाधनाप्रसिद्धिव्याप्त्यसिद्धिभेदात्। तत्र

CC-0. In Public Domain. Digitized by eGangotri

साध्यतावच्छेदकाभाववत्साध्यादिकं विशिष्टसाध्यग्रहविरोधितावच्छेदकत्वेन लक्षणीयं साध्याप्रसिद्धिः । यथा पर्वतः काञ्चनमयवह्निमान् धूमादित्यादौ । हेतुतावच्छेदकाभाववद्धेत्वादिकं विशिष्टसाधनग्रहविरोधितावच्छेदकत्वेन लक्षणीयं हेत्वप्रसिद्धिः । यथा पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ । तृतीयं यथा द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभाववदवृत्तित्वविशिष्टद्रव्यत्वसामानाधिकरण्याभाववत्सत्तादिकम् । एतल्लक्षणं च प्रकृतहेतौ प्रकृतसाध्याभाववदवृत्तित्वस्य साध्यसामानाधिकरण्यस्य च ग्रहविरोधितानवच्छेदकत्वे सति हेतौ साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यग्रहविरोधितावच्छेदकत्वं व्याप्यत्वासिद्धिसामान्यलक्षणं तत्रैव सत्यन्तदलं विहाय विशिष्टसाध्यसाधनग्रहविरोधितानवच्छेदकं यद्धेतौ साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्यावगाहिग्रहविरोधितावच्छेदकं तदन्यत्वे सतीति दत्त्वा कर्तव्यम् । आश्रयासिद्धिश्च पक्षतावच्छेदकाभाववत्पक्षादिकं विशिष्टपक्षग्रहविरोधितावच्छेदकत्वेन लक्षणीयम् । यथा काञ्चनमयपर्वतो वह्निमान् धूमादित्यादौ । विशिष्टपक्षसाधनग्रहविरोधितानवच्छेदकं यत् प्रकृतपक्षे प्रकृतहेतुमत्त्वग्रहविरोधितावच्छेदकं तत्त्वं स्वरूपासिद्धिः । यथा ह्रदो वह्निमान् धूमादित्यादौ धूमाभाववद्ध्रदादिकम् । सर्वत्र विरोधितावच्छेदकत्वं प्रतिबन्धकतावच्छेदकविषयितानतिरिक्तवृत्तिविषयिताकविशिष्टत्वमिति । केचित्तु नीलधूमत्वादेरपि व्याप्यत्वासिद्धावन्तर्भावं वदन्ति । तेषामयमभिप्रायः । साध्यसम्बन्धितावच्छेदकरूपवत्त्वं व्याप्तिः । अवच्छेदकत्वं च स्वरूपसम्बन्धविशेषस्तच्च गुरुधर्मे नीलधूमत्वादौ नास्तीति साध्यसम्बन्धितावच्छेदक-

त्वाभाववत्साधनतावच्छेदकादिरपि व्याप्यत्वासिद्धिः। सामान्यलक्षणे च साधनतावच्छेदकधर्म्मिकसाध्यसम्बन्धितावच्छेदकत्वप्रकारकत्वमपि ग्रहविशेषणमिति। परे तु साध्यसम्बन्धितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वे मानाभावान्न तादृशं व्याप्तिलक्षणं नीलधूमादावपि व्याप्तिरस्ति नीलधूमादिप्रयोगे तु आधिक्येन निगृह्यत इत्याहुः॥ ८॥

अतीतकालं लक्षयति।

**कालात्ययापदिष्टः कालातीतः(१) ॥ ९ ॥**

कालात्ययेन यथोचितकालस्यातिक्रमेणापदिष्टः प्रयुक्तो हेतुः कालातीत इत्यर्थः। कालमतिक्रम्य इतः प्राप्तः प्रयुक्त इति यावत्। अतीतोऽतिक्रान्तः कालो येन सोऽतीतकाल इतिव्युत्पत्तिसाम्यात् कालातीत इत्युक्तः उचितकालश्चाबाधितसाध्यप्रयोगानन्तरः कालः। बाधसत्त्वे तत्प्रमाया असम्भवेन साध्यवत्त्वेन पक्षस्य हेतुप्रयोगेण साधयितुमशक्यत्वाद् बाधितसाध्यप्रयोगे कालातिक्रमो भवतीति कालातीतशब्देन बाधितो लक्ष्यते। उदाहरणं च वह्निरनुष्णः कृतकत्वादित्यादावुष्णत्ववद् वह्न्यादिकम्। यद्यप्याश्रयासिद्ध्यादिसत्त्वेऽपि कालात्ययो भवति तथाप्याश्रयासिद्ध्यादीनां प्रागूलक्षितत्वेन बाधित एव कालातीतादिशब्देन लक्षितो मुनिभिरिति लभ्यते। न च बाधसत्त्वे व्यभिचारस्वरूपासिद्ध्यन्यतरस्यावश्यकत्वेन दोषत्वाद् बाधस्य कथं स्वतन्त्रदोषत्वमिति वाच्यम्। तद-

(१) काला-तः। अत्र कालातीत इति लक्ष्यनिर्देश इत्यादिनैतत् सूत्रं व्याख्याय एवं व्यवस्थिते भाष्यकारः सूत्रं स्वपरमतविलष्टं व्याचष्टे कालात्ययेनेत्यन्तेनैतत्सूत्रस्य भाष्यकृद्व्याख्यानं प्रदर्शितं तात्पर्यटीकाकाद्भिः। उद्देशक्रमसङ्गत्या बाधलक्षणाय सूत्रम्। कालात्ययापदिष्टः कालातीत इति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

न्यतराज्ञाने बाधज्ञानेऽनुमित्यनुत्पादेन तस्यापि दोषत्वात्। हेतोरैक्येऽपि दोषाणां भेदेन पञ्चधा विभागो नानुपपन्नः। असङ्कीर्णोदाहरणमपि गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् शिखरावच्छिन्नः पर्वतो वह्निमानित्यादि। बाधितस्थले सत्प्रतिपक्षनैयत्येऽपि पृथक् तयोर्विभागो न दोषायेत्युक्तमेव। केचित्तु क्षितिः सकर्तृका कार्यत्वादित्यादौ लाघवज्ञानवशादेककर्तृकत्वस्य सिद्धिर्व्यापकतानवच्छेदकरूपेणाप्यनुमितेः स्वीकारात् तथा च वह्निव्याप्यवत्त्वपरामर्शान्महानसीयवह्निधर्मिकलाघवज्ञानादिसहकृतात् पर्वतो महानसीयवह्निमानित्याद्यनुमितिर्जायमाना महानसीयवह्नेर्बाधसत्त्वे न भवतीति तत्रासङ्कीर्णबाधोदाहरणमित्याहुः। बाधलक्षणं तु विशिष्टपक्षसाध्यग्रहाविरोधित्वे सति प्रकृतपक्षे प्रकृतसाध्यग्रहविरोध्यनुमापकत्वे च सति प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिग्रहविरोधित्वमिति। आश्रयासिद्ध्यादिवारणाय प्रथमसत्यन्तम्। सत्प्रतिपक्षवारणाय द्वितीयम्। उदासीनवारणाय विशेष्यदलमिति ॥ ९ ॥

हेत्वाभाससामान्यमुपसंहरति।

समाप्तं हेत्वाभासप्रकरणम् ॥

छलं लक्षयति।

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम्**(१) ॥१०॥

अर्थस्य वादितात्पर्यविषयीभूतार्थस्य विकल्पो भिन्नो योऽर्थस्तस्योपपत्त्या तात्पर्यविषयकल्पनेन। यद्वार्थस्य विकल्पो विभिन्नार्थकल्पनं तदुपपत्त्या तदुपपादकयुक्तिविशेषेण वचनस्य वाद्युक्तस्य विघातो भ्रमजनकत्वेन कल्पनं

(१) छललक्षणप्रकरणम्। तत्र तत्सामान्यलक्षणाय सूत्रम्। वचनविघातोऽर्थेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

छलमित्यर्थः । वक्तृतात्पर्याविषयार्थस्य तात्पर्यकल्पनेन दूषणाभिधानमिति फलितम् । कल्पनं च विशेष्ये । विशेषणे संसर्गे वा । यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यादौ नवसंख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । सर्वं प्रमेयं धर्मत्वादित्यत्र पुण्यरूपार्थकल्पनया भागासिद्ध्यभिधानम् । वह्निमान् धूमादित्यत्र धुमावयवे व्यभिचाराभिधानमिति ॥ १० ॥

विभजते ।

**तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च[1] ॥ ११ ॥**

तत्र वाक्छलं लक्षयति ।

**अविशेषाभिहिते ऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्[2] ॥ १२ ॥**

अविशेषेणार्थविशेषनिर्णायकाभिधानशून्यस्याभिधानस्य स्वोच्चारितनानार्थशक्तपदस्य विषये ऽर्थे वक्तुरभिप्रायाद् वक्तुरभिप्राये ऽर्थान्तरकल्पना वक्तुरनभिप्रेतार्थे शक्त्या तात्पर्यप्रकटनेन दूषणाभिधानं वाक्छलमित्यर्थः । अभिपूर्वधाधातुयोगाच्छक्तिलाभः । तथा च शक्त्या एकार्थतात्पर्यप्रयुक्तशब्दस्य शक्त्यार्थान्तरतात्पर्यकल्पनया दूषणाभिधानमिति निर्गलितम् । यथा गौर्विषाणीत्युक्ते कुतो गजस्य शृङ्गमित्यादि । अन्ये तु स्वारसि-

(१) न सामान्यलक्षणे छलं शक्यमुदाहर्तुं विभागे तूदाहरणानि विभागश्च । तत्त्रिविधमित्यादिभाष्यमन्यः । विभागश्चेति । विभज्यते ऽनेनेति विभागः सूत्रमुच्यत इति तात्पर्यटीका । एतेन तत्त्रिविधमित्यादेः सूत्रत्वं ज्ञायते । तद्विभागाय सूत्रम् । तत् त्रिविधमित्यादिन्यायतत्त्वालोकीयवाचस्पतिमिश्रलेखदर्शनाच्च । आदर्शपुस्तके तत् त्रिविधमिति नास्ति ।

(२) अविशेषाभिहिते ऽर्थं इति सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

कलक्षणया प्रयोगस्य निग्रहस्थानविशेषत्वाच्छक्त्या निरूढ़लक्षणया वा एकार्थतात्पर्यकशब्दस्य शक्त्यान्यार्थतात्पर्यकल्पनया दूषणाभिधानं छलमिति तत्राद्ये गौर्विशालविषाण इत्युक्ते कुतो गजस्य शृङ्गमिति । द्वितीये श्वेतो धावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो न धावतीति कथनम् । श्वेतशब्दस्य लाघवात् श्वेतगुणे शक्तिस्तद्विशिष्टे च निरूढलक्षणा । निरूढत्वं च शास्त्राद्यनादिप्रसिद्धत्वमित्याहुः ॥ १२ ॥

सामान्यच्छलं लक्षयति ।

**सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्**[1] ॥ १३ ॥

वादितात्पर्यविषयीभूतस्य तदभिहितवाक्यार्थस्य सम्भवतः प्रसिद्धस्यातिसामान्ययोगादध्याहृतपदसमभिव्याहारादिकल्पनयाऽन्यार्थयोगेनासम्भूतार्थकल्पना अप्रसिद्धार्थतात्पर्यकल्पनया दूषणाभिधानं सामान्यच्छलमित्यर्थः । यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्यत्र यतो ब्राह्मणोऽतो विद्याचरणसम्पन्न इति यत् पदपूरणेन ब्राह्मणत्वहेतुकविद्याचरणसम्पन्नत्वबोधतात्पर्यकल्पनेन कुतो ब्राह्मणत्वेन विद्याचरणसम्पन्नत्वं व्रात्ये व्यभिचारादित्याद्यभिधानम् ॥ १३ ॥

उपचारच्छलं लक्षयति ।

**धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्**[2] ॥ १४ ॥

(१) शब्दशक्त्युपजीवनादनन्तरं सामान्यच्छललक्षणाय सूत्रं । सम्भवत इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) धर्मविकल्पनिर्देश इति सूत्रमिति वार्त्तिकम् ।

छलमित्यर्थः । वक्तृतात्पर्याविषयार्थस्य तात्पर्यकल्पनेन दूषणाभिधानमिति फलितम् । कल्पनं च विशेष्ये । विशेषणे संसर्गे वा । यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यादौ नवसंख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । सर्वं प्रमेयं धर्मत्वादित्यत्र पुण्यरूपार्थकल्पनया भागासिद्ध्यभिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानमिति ॥ १० ॥

विभजते ।

**तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च[1] ॥ ११ ॥**

तत्र वाक्छलं लक्षयति ।

**अविशेषाभिहिते ऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्[2] ॥ १२ ॥**

अविशेषेणार्थविशेषनिर्णायकाभिधानशून्यस्याभिधानस्य स्वोच्चारितनानार्थशक्तपदस्य विषये ऽर्थे वक्तुरभिप्रायाद् वक्तुरभिप्राये ऽर्थान्तरकल्पना वक्तुरनभिप्रेतार्थे शक्त्या तात्पर्यप्रकटनेन दूषणाभिधानं वाक्छलमित्यर्थः । अभिपूर्वधाधातुयोगाच्छक्तिलाभः । तथा च शक्त्या एकार्थतात्पर्यप्रयुक्तशब्दस्य शक्त्यार्थान्तरतात्पर्यकल्पनया दूषणाभिधानमिति निर्गलितम् । यथा गौर्विषाणीत्युक्ते कुतो गजस्य शृङ्गमित्यादि । अन्ये तु स्वारसि-

(१) न सामान्यलक्षणे छलं शक्यमुदाहर्तुं विभागे तूदाहरणानि विभागश्च । तत् त्रिविधमित्यादिभाष्यग्रन्थः । विभागश्चेति । विभज्यते ऽनेनेति विभागः सूत्रमुच्यत इति तात्पर्यटीका । एतेन तत्त्रिविधमित्यादेः सूत्रत्वं ज्ञायते । तद्विभागाय सूत्रम् । तत् त्रिविधमित्यादिन्यायतत्त्वालोकीयवाचस्पतिमिश्रलेखदर्शनाच्च । आदर्शपुस्तके तत् त्रिविधमिति नास्ति ।

(२) अविशेषाभिहिते ऽर्थं इति सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

कलक्षणया प्रयोगस्य निग्रहस्थानविशेषत्वाच्छक्त्या निरूढलक्षणया वा एकार्थतात्पर्यकशब्दस्य शक्त्यान्यार्थतात्पर्यकल्पनया दूषणाभिधानं छलमिति तत्राद्ये गौर्विशालविषाण इत्युक्ते कुतो गजस्य शृङ्गमिति । द्वितीये श्वेतो धावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो न धावतीति कथनम् । श्वेतशब्दस्य लाघवात् श्वेतगुणे शक्तिस्तद्विशिष्टे च निरूढलक्षणा । निरूढत्वं च शास्त्राद्यनादिप्रसिद्धत्वमित्याहुः ॥ १२ ॥

सामान्यच्छलं लक्षयति ।

**सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्**(१) ॥ १३ ॥

वादितात्पर्यविषयीभूतस्य तदभिहितवाक्यार्थस्य सम्भवतः प्रसिद्धस्यातिसामान्ययोगादध्याहृतपदसमभिव्याहारादिकल्पनयाऽन्यार्थयोगेनासम्भूतार्थकल्पना अप्रसिद्धार्थतात्पर्यकल्पनया दूषणाभिधानं सामान्यच्छलमित्यर्थः । यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्यत्र यतो ब्राह्मणोऽतो विद्याचरणसम्पन्न इति यत् पदपूरणेन ब्राह्मणत्वहेतुकविद्याचरणसम्पन्नत्वबोधतात्पर्यकल्पनेन कुतो ब्राह्मणत्वेन विद्याचरणसम्पन्नत्वं व्रात्ये व्यभिचारादित्याद्यभिधानम् ॥ १३ ॥

उपचारच्छलं लक्षयति ।

**धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्**(२) ॥ १४ ॥

(१) शब्दशक्त्युपजीवनादनन्तरं सामान्यच्छललक्षणाय सूत्रं । सम्भवत इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) धर्मविकल्पनिर्देश इति सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

धर्मो वाद्युक्तशब्दधर्मोऽर्थबोधानुकूलः शक्तिनिरूढलक्षणान्यतररूपः। तयोरर्थनिष्ठत्वेऽपि निरूपकतासम्बन्धेन शब्दधर्मत्वम्। अथवा धर्मः पदपदार्थयोः सम्बन्धः तादृशान्यतररूपोऽर्थनिष्ठधर्मः तस्य विकल्पो विविधः कल्पो द्विविधरूपो यत्र। निर्देशे वाद्युक्तशब्दे सति। अर्थसद्भावेन तादृशैकतरवृत्त्या सदर्थतात्पर्यप्रयुक्तवाक्ये ऽपरवृत्त्यार्थान्तरतात्पर्यकल्पनया प्रतिषेधो दूषणाभिधानमुपचारच्छलमित्यर्थः। मञ्चाः क्रोशन्तीत्यत्र मञ्चस्थे लक्षणया प्रयुक्ते मञ्चपदस्य शक्यार्थकल्पनया कथं मञ्चानामप्राणिनां क्रोशनमित्यभिधानम्। एवमहं नित्य इति शक्त्यात्मतात्पर्येण प्रयुक्ते लक्षणया शरीरतात्पर्येण अमुकस्मादुत्पन्नस्त्वं कथं नित्य इत्यभिधानम्। अन्ये तु अर्थसद्भावेन शक्यार्थसम्बन्धरूपलक्षणया वक्तुरनभिप्रेतार्थतात्पर्येण प्रतिषेधो दूषणमित्यर्थः। उपचारेण लक्षणया छलमिति व्युत्पत्तेः। इत्थं च शक्त्या निरूढलक्षणया वा एकार्थप्रयुक्तस्य निरूढलक्षणयान्यार्थकल्पनेन दूषणाभिधानमिति पर्यवसितम्। शक्त्या उदाहृतस्योदाहरणमहं नित्य इत्याद्युक्तमिति। निरूढलक्षणयोदाहृतं यथा दीर्घायुर्घृतमिति दीर्घायुर्जनकतात्पर्येण प्रयुक्ते कुतो दीर्घायुषः पुरुषस्य घृतत्वमिति। बहुव्रीहावुत्तरपदस्य लाक्षणिकतया तथातात्पर्येण दूषणाभिधानमित्याहुः। वाद्यभिप्रेतार्थादूषणतया असदुत्तरत्वं छलस्य। न च श्लिष्टलाक्षणिकपदप्रयोगे वादिनो दोष इति वाच्यम्। तत्तदर्थप्रसिद्धवाक्यस्य तत्तदर्थतात्पर्येण प्रयोगस्य कथकसम्प्रदायसिद्धत्वात्। अन्यथा पर्वतो वह्निमानित्यादिप्रसिद्धप्रयोगमपि न कुर्यात् तत्रापि नञ्प्रश्लेषेणावह्निमानित्यस्यापि सम्भवात्। एवं पर्वतो वह्निमानिति पर्वतत्वसामानाधिकरण्येन वह्निमुद्दिश्य

CC-0. In Public Domain. Digitized by eGangotri

प्रयोगो न स्यात् पर्वतत्वावच्छेदेन वह्नेर्बाधेन दूषणसम्भवादेवंरीत्या सर्वत्र प्रायशो दोषसम्भवात् प्रयोग एव न स्यादिति ॥ १४ ॥

ननु आद्यन्तयोरेकार्थतात्पर्यकशब्दस्यार्थान्तरतात्पर्यकल्पनत्वेनाविशेषात् कथं पृथगुपन्यासः किं तूपचारच्छलं वाक्छलान्तर्गतं स्यादिति पूर्वपक्षयति ।

**वाक्छलमेवोपचारच्छलं तदविशेषात्**(१) ॥ १५ ॥

सिद्धान्तयति ।

**न तदर्थान्तरभावात्**(२) ॥ १६ ॥

उपचारच्छलपदबोध्यं न वाक्छलपदप्रतिपाद्यं तदर्थान्तरभावाद् वाक्छलार्थभिन्नार्थकत्वात् । यथाश्रुतेनान्यार्थकल्पनरूपधर्मेणाभेदसम्भवे ऽपि शक्त्यार्थान्तरकल्पनरूपधर्मस्य लक्षणयार्थान्तरकल्पनरूपधर्मस्य च मिथो भेदेन विभागसम्भव इति भावः ॥ १६ ॥

विशेषणपरित्यागेन विशेष्यमादायैक्येन विभागाकरणे सामान्यधर्ममादायैक्येन विभाग एव न स्यादित्याह ।

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः**(३) ॥ १७ ॥

किञ्चित्साधर्म्यात् किञ्चिद्धर्ममादाय । ल्यब्लोपे पञ्चमी । अविशेषे ऐक्येन विभागासम्भवे । एकच्छलप्र-

(१) वाक्छलमेवोपचारच्छलमिति सूत्रमिति वार्त्तिकम् ।

(२) सिद्धान्तसूत्रम् । न त-त् । इति तात्पर्यटीका । सिद्धान्तसूत्रम् । न तदर्थान्तरभावादिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(३) अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः । कोऽस्य सूत्रस्यार्थ इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

सङ्गः छलत्वेनैक्याद्विभागासम्भव इति भवदुक्तच्छलद्वित्वमपि न स्यादिति । एवं प्रमाणादिविभागोऽपि न स्यादिति भावः ॥ १७ ॥

उपसंहरति ।

समाप्तं छलप्रकरणम् ॥

छलत्वरूपसामान्यघटितविशेषरूपेणैव तद्विभाग इति धर्मैक्येन छलमित्येकवचनमित्येवमन्यत्रापीति ॥

जातिं लक्षयति ।

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः[1] ॥ १८ ॥**

साधर्म्यवैधर्म्याभ्यामिति सावधारणम् । तेन व्याप्तिनिरपेक्षत्वलाभः साधर्म्यं साध्यसहचरितधर्मः वैधर्म्यं साध्याभावसमानाधिकरणाभावप्रतियोगिधर्मस्ताभ्यां तदन्यतरधर्मेण व्याप्तिमपुरस्कृत्य प्रदर्शितेन यदवस्थानं वादिनः साध्यसाधनं तत् प्रति तथैव व्याप्तिनिरपेक्षयत्किञ्चित्पदार्थसाधर्म्यादिनाभिप्रदर्शनेन दूषणाभिधानं जातिरित्यर्थः । तेन दूषणे सर्वत्र साधर्म्यवैधर्म्ययोरन्यतराभावे ऽपि न क्षतिरवस्थान एव तदन्वयात् । यद्वा साधर्म्यवैधर्म्याभ्यां यत्किञ्चित्पदार्थसाधर्म्यवैधर्म्याभ्यामेव यत् प्रत्यवस्थानं दूषणाभिधानं सा जातिरित्यर्थः । एवकारेण व्याप्तिनिरपेक्षत्वं सूचितम् । यद्यपि साधर्म्यवैधर्म्यान्यतरप्रदर्शनं सर्वत्र जातौ नास्ति तथापि व्याप्तिनिरपेक्षतया दूषणाभिधाने तात्पर्यं तेन च दूषणासमर्थत्वं स्वव्याघातकत्वं वा दर्शितम् । तथा च छलादिभिन्नं दूषणासमर्थमुत्तरं स्वव्याघातकमुत्तरं वा जातिरित्यर्थः । साध-

(१) सूत्रार्थस्तु यथाश्रुतीत्येतत्सूत्रव्याख्याने वार्त्तिकम् । प्रथमं जातिलक्षणाय सूत्रम् । साधर्म्येत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

र्थसमाद्यन्यतमत्वे तात्पर्यमित्यपि कश्चित् । तन्न । तथा सति विभागाकाङ्क्षानुत्थितेः ॥ १८ ॥

प्रमाणादिपञ्चदशपदार्थेषु लक्षितेषु तत्परीक्षाश्रवणोत्कण्ठितेन संसारदुःखजिहीर्षुणा जातिविभागमस्मृत्वैव निग्रहस्थानमात्रमवशिष्टमिति तज्जिज्ञासायामाह ।

**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्**[1] ॥ १९ ॥

निग्रहस्य खलीकारस्य स्थानं ज्ञापकम् । विप्रतिपत्तिः विरुद्धा प्रतिपत्तिर्यतः । यत इति ज्ञापके पञ्चमी । एवमप्रतिपत्तिः प्रतिपत्तेरभावो यत इति विग्रहः । तेन विरुद्धज्ञानप्रकृताज्ञानान्यतरज्ञापको धर्म इत्यर्थः । यद्यपि विरुद्धत्वं दुर्वचं सुवचत्वे ऽपि तत्र प्रकृताज्ञानमस्ति तथाप्युद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गमित्यत्र तात्पर्यम् । प्रतिज्ञाहान्याद्यन्यतमत्वं लक्षणमित्यपि कश्चित् ॥ १९ ॥

प्रधानतया प्रमाणादिपदार्थपरीक्षाश्रवणोत्कण्ठितान् शिष्यान् प्रति जातिनिग्रहस्थानयोर्विभागजिज्ञासायामाह ।

**तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम्**[2] ॥ २० ॥

तयोर्विकल्पाद् विशेषणभेदेन जातिनिग्रहस्थानयोर्विविधभेदसत्त्वाद् बहुत्वं बहुविधत्वमिति । एतेन तयोर्विभागकथने कालविलम्बः सूचितः । ततश्च बलवत्या

---

(१) निग्रहस्थानेनैव कथावसानादर्थतः पश्चात् तदभिधानमित्युद्देशक्रमसङ्गत्या तल्लक्षणाय सूत्रम् । विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) किं पुनर्दृष्टान्तवज्जातिनिग्रहस्थानयोरभेदोऽथ सिद्धान्तवद्भेद इत्यत आह । तद्विकल्पादित्यादि भाष्यग्रन्थः । सूत्रान्तरमवतारयितुं भाष्यकार आह किं पुनरिति तात्पर्यटीका। इदानीं जातिनिग्रहस्थानविशेषलक्षणमुचितं तदप्रणयनसमर्थनाय सूत्रम् । तद्विकल्पादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

प्रमाणादिपरीक्षाजिज्ञासया तद्विभागजिज्ञासाप्रतिरोधेन नेदानीं मुनिना तद्विभागः कृत इति ॥ २० ॥

समाप्तं पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम् ॥

प्रथमाध्याये द्वितीयमाह्निकम् ॥

इति न्यायसूत्रविवरणे प्रथमाध्यायसूत्रविवरणम् ॥



CC-0. In Public Domain. Digitized by eGangotri

# न्यायसूत्रविवरणे

## द्वितीयोऽध्यायः ।

अथ परि सर्वतोभावेन अप्रामाण्यज्ञानाद्यनास्कन्दिता ईक्षा निर्णयो यतो युक्तेः सा परीक्षा । तस्यां च प्रमाणादीनां क्रियमाणायां संशयमादौ परीक्षयति । संशयं विना विवादाप्रसक्तौ प्रमाणाद्यनुत्थानात् परीक्षणे ऽपि संशयस्याङ्गत्वाच्च । तत्र संशयहेतुविप्रतिपत्त्यर्थं पूर्वपक्षं सूत्रयति ।

**समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः**[1] ॥ १ ॥

कारणनिरासेनैव संशयनिरास इति सूत्रकृतामाशयः । संशयसिद्धावेव तत्परीक्षायां संशयो हेतुर्वाच्यः सैव नास्तीति संशयपरीक्षायां संशयस्याहेतुत्वान्नात्र स प्रदर्शित इति । केचित्तु सन्देह्मीतिप्रत्यक्षसिद्धत्वात् संशयो न सन्दिग्धः परं तु तत्र समानधर्मदर्शनादिजन्यत्वे संशय इति तादृशजन्यत्वं परीक्षयितुं तादृशसंशयसम्पादनाय विपरीतकोटिरत्र प्रदर्शिता । एवं प्रमाणादिपरीक्षायामपि संशयो नाभिहितः किं तु तद्धेतुविपरीतकोटिप्रदर्शनमात्रं कृतम् । यद्वा वादस्थले संशयस्यानावश्यकत्वात् पूर्वपक्षनिरासायैव परीक्षारम्भ इति संशयो नाभिहित इति प्राहुः । सूत्रार्थस्तु समानधर्माध्यवसायादनेकधर्माध्यवसायाच्च न संशयो मिथो व्यभिचारादन्यतरधर्माध्यवसायत्वेनापि न संशयहेतुत्वं विप्रतिपत्त्यादिजन्यसंशये व्यभिचारात् । समानधर्मदर्शनादिसत्त्वे ऽपि संशयानुत्पादात् समानत्वस्य तद्भि-

(१) समानानेकधर्माध्यवसायादित्येवमादि सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

न्नत्वे सति तद्गतधर्मरूपस्य प्रमेयत्वादिमादायाव्यावर्तकत्वात्। अनेकत्वस्य च न एको धर्मो यस्येतिव्युत्पत्त्या तदवृत्तिधर्मवत्त्वस्यापि तद्व्यक्तित्वादिकमादाय तथात्वात्। न च समानधर्मः साधारणधर्मोऽनेकधर्मोऽसाधारणधर्मस्तदन्यतरनिश्चयात् संशयो भवति। अथवा साधारणधर्मवत्त्वनिश्चयोत्तरसंशयत्वावच्छिन्नं प्रति तादृशनिश्चयस्य हेतुत्वमेवमसाधारणनिश्चयादेरपि तदव्यवहितोत्तरसंशयहेतुत्वमिति न व्यभिचारादिरिति वाच्यम्। प्रमाणाभावात्॥ १॥

विप्रतिपत्त्यादितोऽपि न संशयो मिथो व्यभिचारात् संशयविशेषहेतुतया व्यभिचारवारणे ऽपि प्रमाणाभावेन हेतुत्वासम्भवादित्याह।

## विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च[१] ॥ २ ॥

न संशय इत्यनुषज्यते। अव्यवस्थापदेन उपलब्ध्यनुपलब्ध्योरव्यवस्था बोध्यते। अध्यवसायपदं न निश्चयपरमव्यवस्थायाः प्रामाण्यसंशयादेः स्वरूपत एव हेतुत्वस्योक्तत्वात् किं तु स्वरूपपरः। अथवा अध्यवसायः कोट्युपस्थितिः तथा च विप्रतिपत्त्यादिजन्यकोट्युपस्थितेर्न संशय इत्यर्थः। वस्तुतोऽध्यवसायपदं ज्ञानपरं तथा चाव्यवस्थात्मकज्ञानादित्यर्थः। विप्रतिपत्तिपदं च तज्ज्ञानपरं पदज्ञानस्यैव शाब्दहेतुत्वात् ज्ञायमानपदस्य हेतुत्वे यथाश्रुतमेवेति॥ २॥

विप्रतिपत्तेः संशयहेतुत्वे बाधकमप्याह।

## विप्रतिपत्तौ च सम्प्रतिपत्तेः[२] ॥ ३ ॥

---

(१) सूत्रम्। विप्रतिपत्त्यव्यवस्थाध्यवसायाच्चेति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

(२) विप्रतिपत्तौ च सम्प्रतिपत्तेर्न विप्रतिपत्तिरस्तीति सूत्रार्थ इति वार्त्तिकम्। पुनः सूत्रे। विप्रतिपत्तौ च सम्प्रतिपत्तेः। अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया इति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

विप्रतिपत्तिदशायां सम्प्रतिपत्तेर्वादिनोरेकनिश्चयान्न संशय इत्यर्थः । अथवा विप्रतिपत्तौ सम्प्रतिपत्तेर्निश्चयजनकत्वान्न संशयहेतुत्वं शाब्दसंशयानभ्युपगमादिति भावः ॥ ३ ॥

अव्यवस्थायाः संशयहेतुत्वे बाधकमप्याह ।

**अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः**[1] **॥४॥**

अव्यवस्थात्मनि अप्रामाणिकस्वरूपे व्यवस्थितत्वात् । अव्यवस्थायाः प्रामाण्यभ्रमत्वसंशययोर्न संशयहेतुत्वमित्यर्थः । तथा समानधर्मदर्शनादेर्हेतुत्वाभावेन प्रामाण्यसंशयादेरप्यसिद्ध्या कुतस्तस्य विषयसंशयहेतुत्वमिति भावः ॥ ४ ॥

समानधर्मदर्शनादीनां पञ्चानां हेतुत्वे बाधकमाह ।

**तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः**[2] **॥ ५ ॥**

तथा तथा सति समानधर्मदर्शनादीनां संशयहेतुत्वे सति । अत्यन्तसंशयः संशयानुच्छेदः स्यात् । तद्धर्माणां तेषां धर्माणां समानधर्मदर्शनादीनामन्यतमस्य सातत्योपपत्तेः सर्वदा सम्भवादित्यर्थः । केचित्तु उपलब्ध्यनुपलब्ध्यव्यवस्थायाः संशयहेतुत्वं तदा स्याद् यदि स्वस्मिन्नव्यवस्थितत्वं स्यान्न चैवम् । तथा च स्वस्मिन् व्यवस्थितायास्तस्याः कथमन्यत्राव्यवस्थात्वमित्यव्यवस्थात्मनीति सूत्रार्थः । नन्वव्यवस्था प्रामाण्यसंशयस्तस्य च न संशय-

(१) अव्यवस्थात्मनि व्यवस्थितत्वाद्वाव्यवस्थाया नाव्यवस्था वेद्यत इति सूत्रार्थ इति वार्त्तिकम् ।

(२) समानधर्मादीनां सातत्यान्नित्यः संशय इति सूत्रार्थ इति वार्त्तिकम् । पुनः सूत्रम् । अत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेरितिन्यायतत्त्वालोकलेखदर्शनादवगम्यते तथाशब्दरहितः सूत्रपाठस्तद्ग्रन्थकर्तृवाचस्पतिमिश्रसम्मत इति ।

CC-0. In Public Domain. Digitized by eGangotri

स्वरूपत्वं संशयस्य विषयविशेषघटितत्वात् तस्य चान्यसंशयहेतुत्वं न विरुद्धमतो दूषणान्तरमाह । तथात्यन्तसंशयेति । तथा तथा सति ऽव्यवस्थाया हेतुत्वे सति । तथाशब्दोऽयं न सूत्रान्तर्गतोऽपि तु भाष्यस्थ इत्यन्ये । अत्यन्तसंशयः संशयानुच्छेदः स्यात् तद्धर्मस्य तज्ज्ञानकस्य ज्ञानत्वादिसाधारणधर्मदर्शनस्य सातत्योपपत्तेरित्याहुः ॥ ५ ॥

इत्थं च कारणाभावान्न संशय इति पूर्वपक्षे समाधानमाह ।

**यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा[(१)] ॥ ६ ॥**

यथोक्ताध्यवसायात् साधारणधर्मदर्शनाद्यन्यतमानन्तरं संशये ऽनुभवसिद्धे एवकारेण तादृशान्यतमानुत्तरक्षणे संशयाभावे च सति नासंशयो न कारणाभावात् संशयानुत्पादोऽन्वयव्यतिरेकाभ्यां तादृशान्यतमस्य कारणत्वावधारणात् । तत्र चान्यतमत्वस्य बहुतरभेदघटितत्वेन गुरुतया तत्तद्भेदानां विशेष्यविशेषणभाववैपरीत्येनानेककार्यकारणभावप्रसङ्गेन च तादृशान्यतमत्वेन न संशयकारणता किं तु साधारणधर्मदर्शनत्वादिप्रत्येकरूपेणैवाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकघटकतया न व्यभिचार इति भावः । विप्रतिपत्तौ च मध्यस्थस्यैव संशयोदयात् तस्य च नैकतरकोटिनिश्चय इति न प्रागुक्तदोष इति बोध्यम् । नन्वेवमत्यन्तसंशयः स्यादित्यत आह । तद्विशेषापेक्षादिति । तेषां ये विशेषाः सहकारिणो दुरत्वादिदो-

(१) न सूत्रार्थापरिज्ञानादिति सूत्रार्थं इत्येतत्सूत्रव्याख्याने वार्त्तिकम् । सिद्धान्तसूत्रम् । यथोक्ताध्यवसायादेवेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

षविशेषादर्शनादयस्तदपेक्षात् तत्सहितादित्यर्थः । तथा सहकारिविलम्बादेव नात्यन्तसंशय इति भावः ॥ ६ ॥

प्रयोजनादिपरीक्षायां संशयापेक्षामाह ।

**यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः(१) ॥ ७ ॥**

एवमेवं च । प्रयोजनादिषु मध्ये यत्र संशयस्तत्र उत्तरोत्तरप्रसङ्ग उत्तरं प्रत्युत्तरं तत्प्रसङ्गः । उक्तिप्रत्युक्तिरूपपरीक्षा कर्तव्येत्यर्थः । यद्वा एवं पूर्वपक्षोत्तरोपन्यासरीत्या उत्तरोत्तरेषु प्रसङ्गः । परीक्षा कर्तव्येति शेषः । तत् किं प्रयोजनादिकं सर्वं परीक्षणीयमित्यत आह । यत्रेति । एतस्य संशयपरीक्षानङ्गत्वे ऽपि प्रसङ्गतः संशयपरीक्षाधीनतया संशयपरीक्षाप्रकरणे कथनम् ॥ ७ ॥

समाप्तं संशयपरीक्षाप्रकरणम् ॥

संशयपरीक्षा साधारणधर्मदर्शनादिजन्यत्वेन संशयव्यवस्थापनम् ॥

अवसरसङ्गत्या प्रमाणप्रामाण्यं परीक्षयितुं तदङ्गसंशयार्थं पूर्वपक्षयति ।

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः(२) ॥ ८ ॥**

त्रैकाल्यासिद्धेः प्रमायाः पूर्वं समकालमुत्तरकालं वा असिद्धेः प्रमाणत्वेन निर्णयस्य वक्तुमशक्यत्वात् प्रत्यक्षादीनां न प्रामाण्यमित्यर्थः ॥ ८ ॥

त्रैकाल्यासिद्धिं क्रमेण विवृणोति ।

---

(१) यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः । कोऽस्य सूत्रस्यार्थ इति वार्त्तिकम् ।

(२) तत्र पूर्वपक्षसूत्रम् । प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।



CC-0. In Public Domain. Digitized by eGangotri

**पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षसिद्धिः**[1] ॥ ९ ॥

प्रमाणसामान्यपरीक्षाया उपक्रान्तत्वात् प्रमाणसिद्धावित्यत्र सामान्यतः प्रमाणशब्दोपन्यासाच्चेन्द्रियार्थसन्निकर्षशब्देन तदादिप्रमाणसामान्यस्य प्रत्यक्षसिद्धिरित्यत्र प्रत्यक्षपदेन प्रमासामान्यस्य प्राप्तिः। पूर्वं प्रमायाः पूर्वं प्रमाणत्वं प्रमाकरणत्वम्। तथा च प्रमाकरणत्वस्य प्रमाघटितमूर्त्तिकत्वेन प्रमाग्रहं विना न तज्ज्ञानं तद्ग्रहश्च प्रमां विना नेति पूर्वमेव प्रमा सिद्धेति कथं प्रमाणाधीना प्रमोत्पत्तिरिति। इदं च प्रमाणत्वेन निर्णयदशायामेव प्रमोत्पादकत्वमितिभ्रमेण। एवमुत्तरत्रापि ॥ ९ ॥

**पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः**[2] ॥ १० ॥

पश्चात् प्रमोत्पत्त्यनन्तरं प्रमाणनिश्चये प्रमाणेभ्यो न प्रमेयसिद्धिः। प्रमेयस्य प्रमाविषयस्य सिद्धिः प्रमेत्यर्थः। प्रमायाः पूर्वमेव सिद्धत्वादिति भावः। यद्यपि प्रमेत्यनुक्त्वा प्रमेयसिद्धिरिति यदुक्तं तच्छिरोवेष्टनेन नासिकास्पर्शमनुधावतीतिन्यायेनायुक्तं तथापि प्रमायाः प्रमाणानधीनत्वे प्रमैवासिद्धेति प्रमेयत्वेनाभिमतस्य विश्वस्यालीकत्वमापद्येतेति भावः ॥ १० ॥

**युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम्**[3] ॥ ११ ॥

(१) प्रत्यक्षोत्पत्तिरित्यन्यत्र सूत्रपाठः। पूर्वं हि प्रमाणसिद्धाविति सूत्रमिति वार्त्तिकम्।

(२) पश्चात् सिद्धाविति सूत्रमिति वार्त्तिकम्।

(३) युगपत्सिद्धाविति सूत्रमिति वार्त्तिकम्।

CC-0. In Public Domain. Digitized by eGangotri

युगपत्सिद्धौ प्रमासमकालं प्रमाणनिर्णये प्रत्यर्थनियतत्वात् प्रतिकारणनियमेन प्रत्यक्षानुमित्यादिविजातीयप्रमाद्वयसामग्रीनियमेन बुद्धीनां प्रत्यक्षानुमित्यादिविजातीयज्ञानानां क्रमवृत्तित्वाभावो युगपदुत्पादप्रसङ्गः । तथाहि प्रत्यक्षप्रमाणं चक्षुरादि तस्य हि ज्ञानमनुमितिरूपं तेषामतीन्द्रियत्वात् तज्जन्यज्ञानं हि प्रत्यक्षमिति तयोर्युगपदुत्पादप्रसङ्गः । तथा शब्दस्य हि ज्ञानं श्रावणप्रत्यक्षरूपं तज्जन्यं हि ज्ञानं शाब्दमिति तयोर्युगपदुत्पादप्रसङ्गः । एवमनुमानस्य धूमादेर्ज्ञानं प्रत्यक्षरूपं तस्यानुमितेश्च युगपदुत्पादप्रसङ्गः । एवमुपमानस्य सादृश्यस्य ज्ञानं प्रत्यक्षादिरूपं तस्योपमितेश्च युगपदुत्पादप्रसङ्गः । न च प्रमाणप्रमेययोरेकं ज्ञानं जातिसङ्करप्रसङ्गात् । यद्वा प्रत्यर्थनियतत्वात् कारणनियमितत्वाद् बुद्धीनां यत् क्रमवृत्तित्वं युगपदनुत्पादस्तन्न स्यादिति । निरुक्तयौगपद्यप्रसङ्गेन न प्रमाणप्रमेययोः समकालसिद्धिसम्भव इति । अथवा प्रमोत्पत्तिसमकालं प्रमाणत्वेन निर्णये विशेषणज्ञानविधया प्रमाज्ञानापेक्षायां प्रमापि पूर्वं सिद्धेति प्रत्यर्थनियतत्वात् प्रमाणाधीनत्वाद् बुद्धीनां प्रमाणां यत् क्रमवृत्तित्वं प्रमाणानन्तरोत्पत्तिकत्वं तन्न स्यादिति । त्रिसूत्र्या प्रमाणानधीनत्वमेव प्रमाणां प्रसञ्जितम् । केचित्तु त्रैकाल्यं कालत्रयवृत्तित्वं प्रमाणानां तस्मिन् सत्यसिद्धा प्रमाणाधीनप्रमोत्पत्त्यसम्भवेन प्रत्यक्षादीनां न प्रामाण्यमिति पूर्वपक्षसूत्रार्थः । त्रैकाल्यासिद्धिं क्रमेण त्रिसूत्र्या दर्शयति । पूर्वं हीत्यादि । प्रमाणसिद्धौ प्रमाणसत्त्वे प्रमाविशिष्टस्य प्रमाकरणस्येन्द्रियादेः सत्त्व इति यावत् । प्रमाविशिष्टस्यैव प्रमाकरणत्वमित्यभिमानः । तथोत्तरत्रापि । पश्चात् सिद्धाविति । प्रमोत्पत्त्यनन्तरमेव प्रमाणसत्त्व इत्यर्थः ।

CC-0. In Public Domain. Digitized by eGangotri

युगपत्सिद्धाविति । युगपदेव सत्त्वे प्रत्यर्थनियतत्वात् प्रमाणनियम्यतया यत् क्रमवृत्तित्वं तद् बुद्धीनां न स्यात् प्रमाणाधीनत्वं प्रमाया न स्यात् प्रमाणस्य पूर्वमसत्त्वा-दिति भावः । यत्तु युगपत्सिद्धौ युगपत्सत्त्व इत्यर्थकत्वे पूर्वकालीनप्रमाणस्य प्रमाकालेऽपि सम्भवाद् युगपदुत्प-त्तावित्यर्थो वाच्य इति । तत्र मनःश्रवणयोरजन्यत्वाच्च-क्षुरादेश्च पूर्वसिद्धत्वेनावधारणादनुमानाद्यभिप्रायेण सूत्र-मिदम् । इत्थं च बुद्धीनामनुमानानुमित्यादीनां प्रत्यर्थनि-यतत्वादर्थविशेषविषयत्वनियमाद् यत् क्रमवृत्तित्वं तन्न स्यात् । अनुमानं लिङ्गविषयकं प्रत्यक्षरूपमनुमितिश्च सा-ध्यविषयिका परोक्षरूपा अनयोर्न यौगपद्यम् । एवं पद-ज्ञानं शब्दविषयकं श्रावणप्रत्यक्षरूपं शाब्दश्च पदार्थवि-षयकस्तद्विजातीय इत्यनयोरपि न यौगपद्यं सम्भवति कार्यकारणभावबलात् क्रमिकत्वेनैव सिद्धेरिति तच्चिन्त्य-मित्याहुः ॥ ११ ॥

प्रत्यक्षादिकं प्रमाणं न वेति विप्रतिपत्तौ निषेध-साधको हेतुः प्रमापूर्वं प्रमाणत्वेनानिर्णीतत्वं प्रमापूर्वं प्रमावैशिष्ट्याभावो वेति पर्यवसितं तादृशहेतोरप्रयो-जकत्वं प्रदर्शयन् सिद्धान्तयति ।

**त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः**(१) ॥ १२ ॥

त्रैकाल्यासिद्धेर्हेतोः प्रतिषेधसिद्धिर्न भवतीत्यर्थः । प्रतिषेधः प्रत्यक्षादीनामप्रामाण्यम् । तथा हि त्रैकाल्यासि-द्धिर्न स्वरूपसती प्रतिषेधज्ञापिका तथा सति प्रतिषेध-

(१) अथासम्भवो ज्ञाप्यत इति प्रमाणलक्षणप्राप्तस्तर्हि प्रतिषेधः एवं त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिरिति । अयमपि प्रतिषेधस्त्रिष्वपि कालेषु नोपपद्य इत्ययं सूत्रार्थ इत्येतत्सूत्रव्याख्याने वार्त्तिकम् । सिद्धान्तसूत्रम् । त्रैकाल्यासिद्धेरित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

ज्ञानस्य सार्वदिकत्वापत्तेः किं तु तज्ज्ञानमेव निषेधसाधकं वक्तव्यं तज्ज्ञानस्य भवदुक्तयुक्त्या त्रैकाल्यासिद्ध्या निषेधसाधकत्वं न स्यादित्यप्रयोजकत्वं तस्या भवतापि वक्तव्यमिति भावः ॥ १२ ॥

(१) त्रैकाल्यासिद्धेः प्रतिषेधसाधकत्वमनुमानविधयैव वक्तव्यमित्यायातमनुमानप्रामाण्यं तत्प्रामाण्यानुरोधेन। त्रैकाल्यासिद्धेरप्रतिषेधकत्वे प्रत्यक्षादीनामपि न प्रामाण्यप्रतिषेध इत्याह ।

**तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः(२) ॥१३॥**

ननु त्रैकाल्यासिद्धेः प्रतिषेधानुमापकत्वं मया नोच्यते किं तु त्रैकाल्यासिद्धिसम्भावनयैव प्रतिषेधसम्भवेन प्रतिषेध्यप्रतिषेधयोर्न वास्तविकत्वं सर्वत्र व्यवहारोऽपि सम्भावनादेव विश्वस्य शून्यत्वे ऽपि भानाङ्गीकारात् प्रमाणप्रमेयभावोऽपि त्रैकाल्यासिद्ध्या वास्तविको न भवितुमर्हतीति सोऽपि सम्भावित एवेत्यत आह ।

**त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धेः(३) ॥ १४ ॥**

अत्र चकारान्तः टीकाकारसम्मतः पाठः। तत्त्वालोके

(१) अत्र सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिरित्येकमधिकं सूत्रं न्यायसूचीनिबन्धे। न्यायतत्त्वालोके विश्वनाथकृतवृत्तौ च व्याख्यानं दृश्यते न तु सूत्रत्वेनोल्लेखः। एतद्ग्रन्थकृता तु न व्याख्यातम् ।

(२) तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेध इति सूत्रमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः। आदर्शपुस्तके तु न सर्वप्रतिषेध इति पाठः।

(३) त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवदिति सूत्रमिति वार्त्तिकम् । तत्सिद्धिरित्यादर्शपुस्तके पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

तु चकारान्तं न सूत्रसम्मतमिति[१]। अयमर्थः। त्रैकाल्यस्य न प्रतिषेधः। प्रमाणं हीन्द्रियादिकं करणतावच्छेदकरूपेणेन्द्रियत्वादिना प्रमापूर्ववर्त्त्येव तथैवान्वयव्यतिरेकात्। न हि प्रमाविशिष्टत्वेन करणता येन तां विना तत्करणस्य सत्त्वं न स्यात्। करणता च सव्यापारकारणत्वम्। कारणता चानन्यथासिद्धत्वे सति नियतपूर्ववर्तितावच्छेदकधर्मवत्त्वम्। व्यवहारेऽपि तदेव प्रयोजकं न तु प्रमावैशिष्ट्यमपि पाकविग्रहदशायामपि पाचकोऽयं गच्छतीतिप्रयोगात्। ननु चक्षुरादेः पूर्वं सत्त्वे किं मानमत आह। शब्देति। तत्सिद्धिः शब्देन कार्येण यथा मुरजादेः सिद्धिस्तथा चाक्षुषादिकार्येण चक्षुरादेः प्रमाणस्य सिद्धिः प्रमाणतयैवेति। केचित्तु चो हेतौ तत्सिद्धिः ततः प्रमाणेभ्यः प्रमेयसिद्धिः। अत्र चक्षुरादेरतीन्द्रियतयानुमानतस्तत्सिद्धावेवान्वयव्यतिरेकग्रहेण प्रमाणताग्रहः करणीयः। चक्षुराद्यनुमानं च पश्यामीतिप्रतीतिसिद्धचाक्षुषादिकं किञ्चित्करणकं ज्ञानत्वादित्यादि। एवं शब्दादेरपि प्रामाण्यमनुमेयमेवेत्यनुमानविशेषदृष्टान्तेन तद् द्रढयति। शब्दादातोद्यसिद्धिवदिति। शब्दाच्छब्दश्रवणेन आतोद्यस्य मुरजादेः सिद्धिरिव निर्णय इवेत्यर्थः। शब्दश्रवणं हि लिङ्गविधयैव मुरजादिप्रकाशकं तथाहि मुरजादिकं विना शब्दविशेषाश्रवणाच्छब्दविशेषे मुरजादिकं हेतुरिति ग्राह्यम्। तदधीनानुकूलतर्केण शब्दविशेषे मुरजादिव्याप्यत्वं गृहीतम्। शब्दविशेषश्रवणेन च तत्स्मृत्या तादृशस्य पक्षधर्मताग्रहान्मुरजादिज्ञानं तदज्ञाने तदानीं तदानयनादिव्यवहारो न स्या-

(१) अत्र च तात्पर्यटीकापुस्तके त्रैका-द्धेः इति पाठधारणं दृश्यते। अनियमोपदर्शनमुखेन माध्यमिकं प्रति हेत्वसिद्धतोद्भावनपरं सूत्रम्। शब्दादातोद्यसिद्धिवत् तत्सिद्धेरिति न्यायतत्त्वालोके दृश्यते।

CC-0. In Public Domain. Digitized by eGangotri

दिति शब्दज्ञानस्य नियतपूर्ववर्तित्वादेव प्रमाणत्वमङ्गीकार्यमन्यथा शब्दविशेषे मुरजादेरपि हेतुता न स्यात् । तथा च शब्दादेर्यथा कादाचित्कत्वाद्यनुरोधेन सहेतुकत्वसिद्धौ मुरजादेरन्वयव्यतिरेकेण मुरजत्वादिनैव हेतुत्वं तत्र पूर्वं शब्दवैशिष्ट्यापेक्षा नास्ति तथा मुरजादिव्याप्यतया पक्षधर्मतया च शब्दविशेषग्रहस्य ताद्रूप्येणान्वयव्यतिरेकात् कादाचित्कत्वाद्यनुरुद्धसिद्धहेतुताकमुरजादिज्ञानविशेषं प्रति हेतुत्वमिति सिद्धं प्रमाणमिति भाव इति प्राहुः ॥ १४ ॥

ननु प्रमा न स्वीक्रियते कुतस्तत्करणं प्रमाणमित्यत आह ।

## प्रमेयता च तुलाप्रामाण्यवत्[1] ॥ १५ ॥

तुलया प्रामाण्यं स्वार्थपरष्यङ्प्रत्ययान्तः भावल्युटा प्रमेत्यर्थः । तथा च सुवर्णादीनां गुरुत्वेयत्तादिपरिच्छेदरूपा प्रमा यथा तुलया भवति तां विना क्रयविक्रयादिव्यवहारो न स्यात् तथेतरेषां प्रमेयता प्रमेत्यर्थः । सम्भावनायाः सकम्पप्रवृत्तावेव हेतुतया निष्कम्पसंवादिप्रवृत्त्यर्थं यथार्थनिर्णयरूपा प्रमा स्वीकार्या । विश्वस्य मिथ्यात्वे तज्ज्ञानस्य भ्रमरूपतया ततो व्यवहारानिष्पत्तेः रज्जुसर्पादितो व्यवहारानिष्पत्तिवदिति । केचित्तु प्रमाणता प्रमेयता च प्रमावैशिष्ट्यादिति यत् प्रागाशङ्कितं तत्राह । प्रमेयता चेति । यथा कदाचिद् गुरुत्वेयत्तादिप-

(१) प्रमेयता चेति पाठो विश्वनाथवृत्तिसम्मतः । तात्पर्यटीकायां तु अत्रेदमुत्तरसूत्रम् । प्रमेया च तुलाप्रामाण्यवदितीति सूत्रप्रतीकधारणं दृश्यते । न्यायतत्त्वालोके तु प्रमेया चेत्येव पाठः । अस्य चार्थस्य ज्ञापनार्थं सूत्रम् । प्रमेयेत्यादि वार्त्तिकम् । तत्र च पुस्तकभेदेन द्विधैव पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

रिच्छेदकत्वात् तुलायाः प्रामाण्यव्यवहारस्तथेन्द्रियघटादेरपि प्रमाणप्रमेयव्यवहार इत्याहुः ॥ १५ ॥

अनवस्थया प्रमाणासिद्धिमाशङ्कते ।

**प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः**[(१)] ॥ १६ ॥

प्रमेयस्य घटादेः प्रमाणतः सिद्धौ प्रमाणसिद्ध्यपेक्षेति तत्सिद्धौ प्रमाणान्तरस्वीकारस्तत्सिद्धौ च प्रमाणान्तरमित्यनवस्थेत्यर्थः ॥ १६ ॥

नन्वनवस्थाभयात् प्रमाणं विनैव प्रमाणसिद्धिरित्यत आह ।

**तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् तत्सिद्धिः**[(२)] ॥ १७ ॥

तस्य प्रमाणान्तरस्य विनिवृत्तेः प्रमाणसिद्धावनपेक्षणात् प्रमाणसिद्धिवत् प्रमाणस्य यथा स्वतः सिद्धिस्तथा तस्य प्रमेयस्य स्वतः सिद्धिः स्यात् किं प्रमाणेन । तथा च रज्जुसर्पादिवन्मिथ्या निरधिष्ठानतया शून्यमेव वा जगत् स्यादिति । वाकारोऽनवस्थापेक्षया विकल्पपरः ॥ १७ ॥

---

(१) न्यायतत्त्वालोके तु प्रमाणतः सिद्धेः प्रमाणान्तरसिद्धिप्रसङ्ग इति सूत्रपाठो दृश्यते । न्यायतत्त्वालोके व्याख्यातत्वेन न्यायसूचीनिबन्धे चास्य दर्शनाच्च सूत्रत्वमवसीयते । विश्वनाथवृत्तौ पूर्वपक्षसूत्रत्वेनोल्लेखाच्च ।

(२) अस्य सूत्रत्वे प्रमाणं नोपलभ्यत इति केचित् । निःसाधनैव प्रमाणानां सिद्धिरित्याशङ्क्य सूत्रं तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिरितिन्यायतत्त्वालोकीयवाचस्पतिमिश्रलेखदर्शनात् सूत्रत्वमेवेति वयं ब्रूमः । अन्यत्रापि पुस्तके तत्सिद्धिरित्यत्र प्रमेयसिद्धिरिति पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

सिद्धान्तयति ।

न प्रदीपप्रकाशवत् तत्सिद्धेः[१] ॥ १८ ॥

यथा दीपाद्घटादिप्रकाशो घटादिज्ञापकालोकस्तथा प्रमाणेभ्यो घटादिप्रमेत्यर्थः । तथा च दीपेनालोकद्वारा घटादिज्ञापने तदानीं न दीपादिज्ञानापेक्षा तथा प्रमाणेन चक्षुरादिना प्रमाजनने न तदानीं चक्षुरादिज्ञानापेक्षेति नानवस्थादिः । एतेन दीपादेर्घटादिप्रकाशकत्वग्रहे दीपादिज्ञानापेक्षासत्त्वे ऽपि तस्य स्वप्रकाशतया दीपान्तरापेक्षाविरहात् प्रमाणानां स्वतः प्रमाणताविरहेण दृष्टान्तवैषम्ये ऽपि न क्षतिः । न च प्रमाणप्रमेयभावज्ञानं विना न तद्व्यवहार इति तज्ज्ञानार्थं प्रमाणान्तरापेक्षायामनवस्थेति वाच्यम् । तत्रापि प्रमाणान्तरापेक्षाविरहात् किं त्वनुमानादिकमेवात्रापेक्ष्यते तच्च क्लृप्तप्रमाणान्तर्गतमेव । न च प्रमाणताज्ञापकानुमानस्य प्रमाणताज्ञानार्थमनुमानान्तरमपि कल्प्यमितिरीत्यानवस्थेति वाच्यम् । संवादिप्रवृत्तिजनकत्वादिलिङ्गेन घटादिज्ञानस्य प्रमात्वमनुमायान्वयव्यतिरेकादिलिङ्गेन तत्करणत्वरूपप्रमाणत्वमनुमीयते तत्र चानुमाने प्रमाणत्वसंशय एवानुमानान्तरापेक्षेत्यविरलधाराविरहाद् व्यवहितधारायाश्च बीजाङ्कुरवददोषत्वादिति । प्रदीपस्य प्रदीपान्तरं विना प्रकाशकत्ववत् प्रमाणानामपि प्रमाणान्तरमन्तरेणैव प्रमेयप्रकाशकत्वमिति यथाश्रुतसूत्रार्थं दूषितवान् भाष्यकारो यथा । क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनैकान्त[२] इति ।

(१) सिद्धान्तसूत्रम् । प्रदीपप्रकाशवत् तत्सिद्धेरिति न्यायतत्त्वालोके वाचस्पतिमिश्राः । तत्र च नकाररहितः सूत्रपाठः । आदर्शपुस्तके न दीपप्रकाशवत् तत्सिद्धेरिति पाठः ।

(२) एतन्मते विश्वनाथमते चास्य भाष्यत्वमेव । न्यायसूचीनिबन्धे चास्य

CC-0. In Public Domain. Digitized by eGangotri

तदर्थश्च क्वचित् प्रदीपादौ प्रमाणान्तरस्य निवृत्तिदर्शनात् क्वचिद्रूपादिप्रकाशकघटादौ प्रमाणान्तरानिवृत्तिदर्शनात् प्रमाणान्तरापेक्षादर्शनात् त्वदीयः प्रकाशकत्वरूपो हेतुरनैकान्तो गृहीतव्यभिचार इत्यर्थः । तथा च प्रदीपदृष्टान्तात् प्रमाणान्तरापेक्षानिवृत्तिः साध्यते घटदृष्टान्तेन प्रमाणान्तरापेक्षैव किं न साध्यते । दृष्टान्तसमजात्युत्तरमेतदिति ॥ १८ ॥

जिज्ञासान्तरसम्पत्तये प्रमाणसामान्यपरीक्षाजिज्ञासां निवर्तयितुमुपसंहरति ।

समाप्तं प्रमाणसामान्यपरीक्षाप्रकरणम् ॥

प्रथमोद्दिष्टतया बहुवादिसम्मतत्वाच्च प्राक् प्रत्यक्षं प्रमाणतया परीक्षयितुं पूर्वपक्षयति ।

**प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात्[1] ॥ १९ ॥**

प्रत्यक्षलक्षणस्य इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वलक्षणस्यानुपपत्तिः । असमग्रवचनात् कारणसमुदायात्मकसामग्रीजन्यत्वाघटितत्वात् । आत्ममनोयोगरूपेन्द्रियसन्निकर्षजन्यतया ज्ञानमात्रे ऽतिव्याप्तेरिति यावत् । अर्थपदस्य विषयपरतया घटाद्यनुमितिवारणे ऽपि आत्मविषयकानुमित्यादावतिव्याप्तेरशक्यपरिहारात् । नन्वेतावता निरुक्तलक्षणस्य तद्रूपेण विभागस्य चानुपपत्तिर्न तु प्रत्यक्षप्रमाकरणत्वानुपपत्तिस्तथापि प्रत्यक्षत्वस्य इन्द्रियजन्य-

---

सूत्रत्वमिति । न्यायतत्त्वालोके चास्य व्याख्यानं दृश्यते परं तु सूत्रत्वेनोल्लेखो न दृश्यते । तात्पर्यटीकायां च क्वचि–न्तः इत्याकारिका सूत्रप्रतीकधारणारीतिर्दृश्यते ।

(१) पूर्वपक्षस्तु यथाश्रुतोत्पादकाभिमतस्य सामग्रीत्वेन लक्षणत्वं कारणमात्राद्वा आद्ये सूत्रम् । प्रत्यक्षलक्षणानुपपत्तिरित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । पूर्वपक्षसूत्रम् । प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनादिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

त्वन्यूनवृत्तितया तदवच्छेदकत्वासम्भवेन तदवच्छेदकतया प्रत्यक्षत्वरूपप्रमावैजात्याप्रसिद्ध्या तदवच्छिन्नकरणत्वाप्रसिद्धिरिति पूर्वपक्षे तात्पर्यम् । अथवा इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमितिलक्षणानुपपत्तिः । असमग्रवचनात् सकलप्रत्यक्षासङ्ग्रहात् । सुखादिमानसप्रत्यक्षे योगजप्रत्यक्षे चाव्याप्तेरित्यर्थः । मनसोऽनिन्द्रियत्वाद् योगिप्रत्यक्षस्य मनःसंयोगादिरूपसन्निकर्षाजन्यत्वाच्च । एवं च प्रत्यक्षत्वस्यातिप्रसक्ततया नेन्द्रियजन्यतावच्छेदकत्वसम्भव इति न प्रत्यक्षत्वावच्छिन्नकरणत्वमिन्द्रियस्येति भावः ॥ १९ ॥

नन्वात्ममनोयोगस्य कारणत्वमेव नास्ति कुतस्तज्जन्यत्वमादायातिव्याप्तिरित्यत आह ।

**नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः**(१) ॥ २० ॥

शरीरावच्छिन्नात्मनो मनसा सन्निकर्षाभावे न प्रत्यक्षोत्पत्तिः न ज्ञानोत्पत्तिः । तथा च ज्ञानोत्पत्त्यभावप्रयोजकाभावप्रतियोगित्वेनात्ममनःसन्निकर्षस्य कारणत्वमनुमितमिति भावः । यद्वा ननु बहिरिन्द्रियव्यापारमन्तरेण मनसा प्रत्यक्षमेव न जन्यते कुतोऽव्याप्तिरत आह ।

---

(१) तदिदं सूत्रमुक्तभाष्यम् । नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिरितीति वार्त्तिकम् । तदिदं नात्ममनसोः सन्निकर्षेत्यादिसूत्रपाठस्य पुरस्तात् कृतभाष्यम् । तदेतद्वार्त्तिककारो भाष्यमनुभाष्य पूर्वपक्षसूत्रं पठति । नात्म-त्तिः । इति तात्पर्यटीका । अत इति शेषः सुगमः सूत्रार्थ इत्येतत्सूत्रव्याख्याने न्यायतत्त्वालोके वाचस्पतिमिश्राः । नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिरिति पूर्वपक्षसूत्रं तदुपपादकतयैव भाष्यकृता व्याख्यातत्वात् सिद्धान्तसूत्रत्वे चेत्यादि न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

नात्मेति । आत्ममनःसन्निकर्षाभावे बहिरिन्द्रियव्यापारविरहदशायामात्ममनःसन्निकर्षाभाव एव न प्रत्यक्षोत्पत्तिः । तथा च सुखादिप्रत्यक्षं साक्षात्करोमीत्यनुभवसिद्धप्रत्यक्षभावं प्रत्यन्वयव्यतिरेकाभ्यां मनःसन्निकर्षस्य हेतुत्वं सिद्धमिति भावः ॥ २० ॥

ननु नियतान्वयसत्त्वं यदि कारणतासाधकं तदा दिगादेरपि कार्यविशेषहेतुता स्यादित्याशङ्कते ।

**दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः(१) ॥ २१ ॥**

अथैतेषामन्यथासिद्धत्वमिति चेन्मनःसन्निकर्षादेरपि तथात्वमिति भावः ॥ २१ ॥

मनःसन्निकर्षादेरन्यथासिद्धत्वं निराकरोति ।

**ज्ञानलिङ्गत्वादात्मनो नानवबोधः(२) ॥ २२ ॥**

ज्ञानलिङ्गत्वात् ज्ञानसमवायित्वात् प्रत्यक्षसमवायित्वाद्वा नात्मनोऽनवबोधः । अनवबोधकत्वं बोधसामान्ये प्रत्यक्षविशेषे वा अन्यथासिद्धत्वं नात्मन इत्यर्थः । यद्वा आत्मनः सकाशादनवबोधो नेत्यर्थः । भावकार्यत्वेन ज्ञानस्य समवायिकारणे कल्पनीये परिशेषादात्मैव तथेति भावः । इत्थं चासमवायिकारणतयात्ममनोयोगादेरपि कारणतासिद्धिरपि बोध्या । दिगादीनां च साधकविरहेणाक्लृप्ततयान्यथासिद्धिरित्याशयः ॥ २२ ॥

---

(१) अस्य सूत्रत्वे प्रमाणं नोपलभ्यत इति केचिदाधुनिकाः । पूर्वपक्षसूत्रम् । दिग्देशेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) सिद्धान्तसूत्रम् । ज्ञानलिङ्गत्वादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । उदयनाचार्या अप्यस्य सूत्रत्वं मन्यन्ते । परसूत्रटिप्पणी द्रष्टव्या । अन्यत्र च ज्ञानलिङ्गत्वाद्वात्मनो नानवरोध इति पाठो दृश्यते । वार्त्तिके च व्याहतत्वादहेतुरितिसूत्रव्याख्यावसरे एतत्सूत्रं धृतं तत्र नानवबोध इति पाठो दृश्यते ।

CC-0. In Public Domain. Digitized by eGangotri

नन्वात्मशरीरसंयोगादेरेवासमवायिकारणत्वमस्तु एवं भावकार्यत्वमेकत्वादौ व्यभिचारितया नासमवायिकारणतासाधकं तथा मनसोऽतीन्द्रियतया तत्सन्निकर्षस्यान्वयव्यतिरेकाभ्यां कार्यान्वयव्यतिरेकौ दुर्ग्रहौ कुतस्तस्य कारणत्वमित्यत आह ।

तदयौगपद्यलिङ्गत्वान्मनसः[(१)] ॥ २३ ॥

नानवबोध इत्यनुषज्यते । सन्निकर्षद्वारेत्यादि । तदयौगपद्यं लिङ्गं ज्ञापकं यस्य तत्त्वात् । तथा चैकदा चाक्षुषरासनाद्युत्पादवारणाय मनः स्वीकार्यं यत्सम्बन्धविरहे चक्षुरादिकं न चाक्षुषादिकं जनयति तस्य चाणुतया नैकदा नानेन्द्रियसम्बन्धः । शरीरसम्बन्धस्य सर्वदैवेन्द्रिये सत्त्वान्न तेन तन्नियमः परमाणूनां क्लृप्तानामनन्ततया विनिगमनाविरहेण ततोऽपि न तन्नियम इति सिद्धौ च मनसि असमवायिकारणसंयोगाश्रयतया तस्यैवोपस्थिततया सिद्धिरुचिता अतिरिक्तकल्पने गौरवात् । शरीरात्मसंयोगस्यासमवायिहेतुत्वसम्भवे ऽपि प्रमाणसिद्धस्य मनसोऽपि तथात्वमङ्गीकार्यं विनिगमनाविरहात् । असतिबाधके भावकार्यत्वस्यासमवायिकारण-

(१) वार्त्तिके तदयौगपद्यलिङ्गत्वाच्च न मनस इति सूत्रपाठो दृश्यते । अस्य सूत्रत्वे प्रमाणं नोपलभ्यत इत्याधुनिकैः कैश्चिदुक्तम् । तदपरिशीलितन्यायवार्त्तिकतात्पर्यपरिशुद्ध्यादिभाषितम् । यतो न्यायवार्त्तिकतात्पर्यपरिशुद्धौ ननु नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिरिति पूर्वपक्षसूत्रं तदुपपादकतयैव भाष्यकृता व्याख्यातत्वात् सिद्धान्तसूत्रत्वे च ज्ञानलिङ्गत्वादात्मनो नानवरोधः तदयौगपद्यलिङ्गत्वाच्च मनस इति सूत्रद्वयमनर्थकमापद्येत पूर्वेणैव गतार्थत्वाद् वार्त्तिककारस्तु अर्थतो वाभिधानमिति सिद्धान्तमुपक्रम्य तदर्थप्रकाशकतया सूत्रमवतारयतिस्मेति लेखो दृश्यते । सिद्धान्तसूत्रम् । तदयौगपद्येत्यादिन्यायतत्त्वालोकीयवाचस्पतिमिश्रलेखदर्शनाच्च । एवं च नकाररहितः सूत्रपाठोऽप्युदयनसम्मत इति बोध्यम् ।

CC-0. In Public Domain. Digitized by eGangotri

साधकत्वादेकत्वादौ तु तद्बाधादिति भावः। इदमत्रावधेयम्। तत्पुरुषीयचाक्षुषं तत्पुरुषीयचक्षुर्विषयसंयोगादिभिन्नकिञ्चित्पदार्थविरहप्रयुक्तविरहप्रतियोगि तत्पुरुषीयचक्षुर्विषयसंयोगादिसत्त्वेऽपि तत्पुरुषीयरासनाद्युत्पत्तिक्षणानुत्पत्तिकत्वादित्यनुमानेन किञ्चित्पदार्थसिद्धौ विषयरसनासंयोगादिसत्त्वकालीनचाक्षुषक्षणानुत्पत्तिकत्वेन रासनेऽपि हेतुतया तथाविधपदार्थान्तरकल्पने गौरवं चाक्षुषरासनादिहेतुविभिन्नकालीनसम्बन्धप्रतियोगितयैकपदार्थस्वीकारे लाघवम्। तादृशपदार्थस्य गुणादित्वे एकस्य गुणादेर्विभिन्नकालावच्छेदेन नानेन्द्रियसम्बन्धासम्भवाद् द्रव्यत्वमेव स्वीकार्यं तथापि विभुत्वे सर्वदैव नानेन्द्रियसम्बन्धप्रसक्तया न यौगपद्यवारणम्। सावयवत्वे चावयवकल्पने गौरवमित्यणुत्वमेव स्वीकार्यम्। तत्सम्बन्धस्य च विषयस्यात्मनश्चैक्यान्न तन्निष्ठतया हेतुत्वेन यौगपद्यवारणमितीन्द्रियनिष्ठस्यैव हेतुत्वं युक्तमित्यादितर्कसहकारेणेन्द्रियसंयोगग्यणुतया मनः सिध्यतीति ॥ २३ ॥

सिद्धान्तयति।

**प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य पृथग्वचनम्**[१] **॥ २४ ॥**

इदं सूत्रं भाष्यकारस्य न मुनेरिति केचित्। अर्थस्तु इन्द्रियार्थसन्निकर्षस्य पृथक् स्वातन्त्र्येण प्रत्यक्षनिमित्त-

(१) नेदं कारणावधारणार्थमित्युक्तं न यावदसाधारणं सर्वं तदुक्तव्यमपि तु न साधारणं वक्तव्यमित्ययं सूत्रार्थ इति वार्त्तिकम्। तत्र च स्वशब्देन वचनमिति सूत्रपाठः। इदं सूत्रं न्यायतत्त्वालोके न धृतम्। विश्वनाथपञ्चाननैश्च सिद्धान्तसूत्रत्वेन व्याख्यातम्। परिहरति प्रत्यक्षेत्यादि। इत्यादिकं तात्पर्यटीकायां धृत्वा परमः समाधिरिति तत्रैवोक्तम्। तात्पर्यपरिशुद्धौ च परमः समाधिः सोत्र इति शेष इति व्याख्यातम्। २६ सूत्रटिप्पण्यप्यत्र द्रष्टव्या।

CC-0. In Public Domain. Digitized by eGangotri

त्वात् प्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वात् वचनं तथा लक्षणम् । अथवा पृथग्वचनं केवलसन्निकर्षजन्यत्वघटितं लक्षणम् । तथा चेन्द्रियत्वावच्छिन्नजनकताघटितलक्षणकरणान्नातिव्याप्तिरिति विवृतं प्राक् । यद्वा इन्द्रियार्थसन्निकर्षस्य सन्निकर्षद्वारा इन्द्रियत्वावच्छिन्नस्य प्रत्यक्षनिमित्तत्वात् प्रत्यक्षहेतुत्वात् पृथग्वचनं सुखादिसाक्षात्कारात्मकप्रत्यक्षविशेषे बहिरिन्द्रियविनाकृते हेतुभूतेन्द्रियतया मनसः स्वीकार इति न लक्षणाव्याप्तिरित्याशयः । सन्निकर्षस्य च लौकिकालौकिकभेदेन योगजप्रत्यक्षादेरपि सङ्ग्रह इति बोध्यम् । मनःषष्ठानीन्द्रियाणीति श्रीभगवद्वाक्यमपि प्रमाणमवसेयम् ॥ २४ ॥

समाधानान्तरमाह ।

**सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्**(१) **॥ २५ ॥**

सुप्तानां व्यासक्तमनसां चेन्द्रियार्थसन्निकर्षनिमित्तकत्वात् । ज्ञानस्येति शेषः । धनगर्जितादिना श्रोत्रसन्निकर्षाद् वह्न्यादिना त्वक्सन्निकर्षाच्च प्रागेव ज्ञानोत्पत्तेस्तादृशसन्निकर्षाणां प्राधान्यादित्यर्थः । पृथग्वचनमित्यनुसञ्जनीयम् । इन्द्रियार्थसन्निकर्षजन्यत्वेन प्रत्यक्षकथनम् । अयं भावः । इन्द्रियार्थसन्निकर्षजन्यज्ञानत्वं न प्रत्यक्षलक्षणमात्ममनोयोगजन्यतया ज्ञानमात्रे तत्सत्त्वात् । न चेन्द्रियसन्निकर्षत्वावच्छिन्नजन्यता विवक्षणीयेति वाच्यम् । सन्निकर्षस्य संयोगसंयुक्तसमवायादिभेदेनाननुगमात् । नापीन्द्रियत्वेन जनकत्वं विवक्षणीयमिन्द्रियत्वस्याप्ये-

(१) इन्द्रियार्थसन्निकर्षस्य प्राधान्यपरमिदं सूत्रमिति वार्त्तिकम् । परसूत्रटिप्पण्यप्यत्र द्रष्टव्या ।

CC-0. In Public Domain. Digitized by eGangotri

कस्याभावात् कथञ्चित् सम्भवेऽपि तेन रूपेण हेतुत्वे मानाभावात्। इत्थं च ज्ञानाकरणकज्ञानत्वं प्रत्यक्षत्वादिकमेव वा लक्षणम्। इन्द्रियाणां सन्निकर्षाणां च विशेषतः प्रत्यक्षहेतुताज्ञापनायोक्तमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति। न चात्ममनोयोगादिकमपि प्रत्यक्षहेतुस्तत् कथं विशेषतो नोक्तमिति वाच्यम्। तेषां साधारणत्वात्। प्रत्यक्षासाधारणकारणमिन्द्रियं तत्सन्निकर्षश्चेति तद्धेतुतयोक्तम्। इन्द्रियमनोयोगादिकं न सकलप्रत्यक्षकारणमिति तन्नोक्तम् ॥ २५ ॥

लक्षणाभिप्रायेण पुनराह।

**तैश्चापदेशो ज्ञानविशेषाणाम्(१) ॥ २६ ॥**

तैरिन्द्रियसन्निकर्षैर्ज्ञानविशेषाणां चाक्षुषादीनां व्यपदेशो ज्ञापनं तेन चाक्षुषाद्यन्यतमत्वं लक्षणं चाक्षुषवृत्त्यनुमित्यवृत्तिजातिमत्त्वादीनि लक्षणानीति वा। अथवा तैर्ज्ञानविशेषाणामनुमित्यादीनां व्यपदेशो व्यावर्तनं तथा चानुमित्यादिविजातीयप्रत्यक्षसामान्यहेतुतायामिन्द्रियत्वमवच्छेदकं वक्तव्यमन्यथा प्रत्यक्षसामान्याभावप्रयोजकतया चक्षुराद्यभावानां वक्तव्यतया गौरवापत्तेः। न च सन्निकर्षात्मकसम्बन्धानामननुगमात् कथं तादृशसम्बन्धावच्छिन्नेन्द्रियत्वावच्छिन्नाभावैक्यं प्रत्यक्षविषयताप्रयोजकसम्बन्धत्वेन तेषामुपलक्षणात्। एवं च यथोक्तलक्षणमेव सम्यगिति दिक् ॥ २६ ॥

---

(१) व्याहतत्वादहेतुरितिपरसूत्रव्याख्यावसरे वार्त्तिककृता व्याहतत्वाद्वित्यनेन त्रिसूत्रीं प्रत्याचष्टे प्रत्यक्षनिमित्तत्वादिन्द्रियार्थयोः सन्निकर्षस्य, सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्, तैश्चापदेशो ज्ञानविशेषाणामितीयं किल त्रिसूत्रीत्युक्तम्।

CC-0. In Public Domain. Digitized by eGangotri

अथेन्द्रियार्थसन्निकर्षो न प्रत्यक्षहेतुरन्वयव्यभिचारात् तथाहि भिन्नविषयकानुमितिसामग्रीसत्त्वे सत्यपीन्द्रियार्थसन्निकर्षे प्रत्यक्षानुत्पत्तेः । एवं चाक्षुषादिकं प्रत्यपि न चक्षुःसन्निकर्षस्य हेतुत्वं व्यभिचारात् तथाहि गीतादिशुश्रूषायां चक्षुःसन्निकर्षाच्चाक्षुषाजननात् । तथा च तदानीं यद्विरहात् प्रत्यक्षाद्यनुत्पादस्तस्यैव हेतुत्वं युक्तं कृतं सन्निकर्षहेतुत्वेनेत्याह ।

**व्याहतत्वादहेतुः[1] ॥ २७ ॥**

इन्द्रियार्थसन्निकर्षो न हेतुः व्याहतत्वात् तत्सत्त्वेऽपि प्रत्यक्षानुत्पादादित्यर्थः ॥ २७ ॥

समाधत्ते ।

**नार्थविशेषप्राबल्यात्[2] ॥ २८ ॥**

इन्द्रियसन्निकर्षो नाहेतुः प्रत्यक्षहेतुरेव । अर्थविशेषप्राबल्यात् सामग्रीविशेषप्रतिरुद्धकार्यकत्वात् सामग्रीविशेषविरहादिरूपकारणसहितस्य तस्य कार्योपधायकत्वनियमादिति यावत् । तथा च सामग्रीक्षणस्यैव कार्योत्पत्तिप्राक्क्षणत्वनियमात् केवलसन्निकर्षेऽन्वयव्यभिचारो न दूषणमिति भावः । यद्वा इन्द्रियार्थसन्निकर्षो न हेतुः व्याहतत्वादाकाशादौ तत्सत्त्वेऽपि तत्प्रत्यक्षाजननात् । समाधानमाह । नार्थविशेषप्राबल्यात् । अर्थविशे-

(१) वार्त्तिके तु व्याहतत्वादित्यनेन त्रिसूत्रीं प्रत्याचष्ट इति लिखितम् । तात्पर्यटीकायां नार्थविशेषप्राबल्यादितिसूत्रस्थभाष्यव्याख्यानन्तरं व्याहतत्वादिति पूर्वपक्षसूत्रम् । अस्य तात्पर्यमाह वार्त्तिककारः । अनेनेतीति लिखितम् ।

(२) परिहारसूत्रम् । नार्थ-त् । इति तात्पर्यटीकायाम् । एतद्व्याख्यानावसरे अत्र नार्थविशेषप्राबल्यादिति सूत्रेणेति न्यायतत्त्वालोकीयवाचस्पतिमिश्रलेखोऽपि दृश्यते ।



CC-0. In Public Domain. Digitized by eGangotri

षेष्वेव प्राबल्यात् प्रत्यक्षजनकत्वान्न सर्वत्र सन्निकर्षस्य प्रत्यक्षाजनकत्वमिति भावः ॥ २८ ॥

नन्विन्द्रियसन्निकर्षाधीनं ज्ञानं न प्रत्यक्षरूपविजातीयप्रमा किं तु तदनुमितिरेवेति कथं प्रमाणचतुष्टयविभाग इत्याशङ्कते ।

**प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः**(१) ॥ २९ ॥

प्रत्यक्षं प्रत्यक्षत्वेनाभिमतमिन्द्रियसन्निकर्षाधीनवृक्षादिज्ञानमिति यावत् । अनुमानमनुमितिः एकदेशस्य पुरोवर्त्त्यवयवभागस्य ग्रहणादिन्द्रियसन्निकर्षादुपलब्धेरवयविनो वृक्षस्योपलब्धेः । तादात्म्येन हेतुता बोध्या । तथा चेन्द्रियसन्निकर्षस्यार्थनिष्ठतया हेतुता वाच्या अन्यथाऽतिप्रसङ्गादित्यवयवसन्निकर्षादवयविनो वृक्षादेः प्रत्यक्षमिति वक्तुं न शक्यमेवं शब्दस्याश्रवणान्न शाब्दबोधः सादृश्यज्ञानादेरभावाच्च नोपमितिः शक्त्यविषयकत्वाच्चेति परिशेषात् तादृशज्ञानमनुमितिरित्यर्थः । न चानुमितौ व्याप्त्यादिज्ञानस्य हेतुत्वात् तद्विरहदशायां कथं वृक्षादेरनुमितिविषयतेति वाच्यम् । अवयवसन्निकर्षानन्तरमयं वृक्षो वृक्षावयवसमवेतत्वादित्याद्यनुमानसम्भवादिति भावः ॥ २९ ॥

वृक्षज्ञानस्य प्रत्यक्षत्वासम्भवे ऽपि तदेकदेशस्य भवतापि प्रत्यक्षेण ग्रहान्न प्रत्यक्षसामान्यविलोप इति न विभागव्याघात इति सुकरतया समाधत्ते ।

(१) पूर्वपक्षसूत्रम् । प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेरिति न्यायतत्त्वालोके वाचस्पतिमिश्राः । पूर्वपक्षसूत्रम् । प्रत्यक्षमनुमानमित्यादि न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

**न प्रत्यक्षेण यावत्तावदुपलम्भात्[1] ॥ ३० ॥**

न इन्द्रियसन्निकर्षाधीनज्ञानमात्रस्य न प्रत्यक्षत्वनिरासः । प्रत्यक्षेणेन्द्रियेण यावत्तावदुपलम्भाद् यस्य कस्यचिद् भागस्योपलम्भात् । अनुमित्यादिविजातीयप्रत्यक्षस्य भवतापि स्वीकारादन्यथानुभवविरोध इति भावः । इदमुपलक्षणम् । शब्दगन्धादिप्रत्यक्षस्यानिरासान्न प्रत्यक्षमात्रनिरास इति बोध्यम् ॥ ३० ॥

वृक्षादेरपि ज्ञानं प्रत्यक्षतः सम्भवतीतिसिद्धान्तमाह ।

**न चैकदेशोपलब्धिरवयविसद्भावात्[2] ॥ ३१ ॥**

न च न वेत्यर्थः । एकदेशस्यावयवमात्रस्येन्द्रियेणोपलब्धिः अवयविनोऽपि तदानीं तथोपलब्धेः । अवयविसद्भावादवयविन्यपीन्द्रियसन्निकर्षसत्त्वादवयवसंयोगस्यावयविसंयोगहेतुत्वात् । न ह्यर्थे समुदायावयवावच्छेदेनेन्द्रियसंयोगस्य प्रत्यक्षहेतुत्वमुच्यते येन तदसम्भवेन प्रत्यक्षं वृक्षादेर्न स्यादिति भावः ॥ ३१ ॥

समाप्तं प्रत्यक्षपरीक्षाप्रकरणम् ॥

---

(१) न प्र-त् । इतिसूत्रप्रतीकं धृत्वा व्याख्याय भाष्यं व्याख्याय तदेतत् सूत्रं वार्त्तिककारो व्याचष्ट इति तात्पर्यटीकाकृद्भिरुक्तम् । न प्रत्यक्षेण यावत्तावदप्युपलम्भात् । अर्वाग्भागस्याप्यन्ततस्त्वया प्रत्यक्षत्वेनेष्टत्वात् तथा च बाधो दोष इति सूत्रार्थ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः । न प्रत्यक्षेण यावत्तावदप्युपलम्भादिति सूत्रस्यार्थं विवेचयतीति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । तावदप्युपलम्भादिति पाठोऽन्यत्र सर्वत्र दृश्यते ।

(२) अवयविप्रकरणारम्भे अथावयविसद्भावादितिसूत्रेणेत्यादिर्न्यायतत्त्वालोकीयवाचस्पतिमिश्रलेखो दृश्यते । न्यायसूचीनिबन्धे चास्योल्लेखो न दृश्यते । तात्पर्यटीकायां तु न चैकदेशोपलब्धिरिति । तदेतद्भाष्यमनुभाष्य वार्त्तिककारो व्याचष्ट इति लेखो दृश्यते । एवं च न चैकदेशोपलब्धिरिति भाष्यमवयविसद्भावादित्येतावन्मात्रं सूत्रमिति सम्भाव्यते । अत एव क्वचिदवयविसद्भावादित्येव पाठो दृश्यते ।

CC-0. In Public Domain. Digitized by eGangotri

अवयविसद्भावादिति यदुक्तं तदवयविसत्त्व एव सम्भवतीत्युपोद्घातसङ्गत्यावयविनं परीक्षयितुमाह ।

**साध्यत्वादवयविनि सन्देहः[1] ॥ ३२ ॥**

अत्र चावयविनि सन्देहः साध्यत्वादनुमितिविधेयत्वादित्यर्थो न सङ्गच्छते वह्न्यादौ व्यभिचारादिति किं तु अवयविनि साध्यत्वात् सन्देहात् । सन्देहोऽवयविसन्निकर्षरूपप्रागुक्तहेताविति शेषः । तत्रावयविसन्देहो द्रव्यत्वमणुत्वव्याप्यं न वेत्यादिरूपः । सन्निकर्षसन्देहश्च वृक्षपदवाच्य इन्द्रियसन्निकृष्टो न वेत्यादिरूपः । परमते परमाणुसमुदायस्यैव वृक्षपदवाच्यत्वात् तत्र चेन्द्रियसन्निकर्षस्यैकदाऽसम्भवेन प्रत्यक्षासम्भव इति भावः । एवमेकोऽवयवी न सम्भवति सकम्पत्वाकम्पत्वरक्तत्वारक्तत्वावृतत्वानावृतत्वादिलक्षणविरुद्धधर्माध्यासात् । तथाहि शाखावच्छेदेन कम्पो मूलावच्छेदेन तदभाव एकस्मिन् वृक्षे एकदा न सम्भवति भावाभावयोर्विरोधात् । एवं महारजनरक्तैकदेशस्यांशुकस्य देशान्तरावच्छेदेनारक्तत्वोपलम्भात् तदुभयमेकस्य न सम्भवति । तथाऽऽवृतपृष्ठादेरनावृतत्वोपलम्भात् तदुभयमेकस्य न सम्भवति । किं तु परमाणुसमुदाय एव वृक्षादिपदवाच्यस्तदेकदेशानामेव सकम्पत्वादिकं नानुपपन्नं वृक्षः सकम्प इत्यादिव्यवहारश्च वृक्षैकदेशविषय एवेति परमतम् । स्वमते ऽवच्छेदकभेदेन भावाभावयोरेकत्र समावेशान्नावयविबाध इति । यद्वा साध्यत्वात् प्रात्यक्ष्यासिद्धत्वादवयविनि सन्देहः । अनुमानादिकं च सन्दिग्धाप्रामाण्यकमिति भावः ॥ ३२॥

(१) पूर्वपक्षसूत्रम् । साध्यत्वादवयविनि सन्देह इति न्यायतत्त्वालोके वाचस्पतिमिश्राः । साध्यत्वादिति यथाश्रुतं सूत्रं गृहीत्वा वार्त्तिककारो विकल्प्याक्षिपति किं पुनरत्रेतीति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

सिद्धान्तयति ।

**सर्वाग्रहणमवयव्यसिद्धेः**[१] ॥ ३३ ॥

अवयविनोऽसिद्धौ सर्वेषां परमाणूनां तदन्तर्गतगुणकर्मादीनां चाग्रहणं भवेदित्यर्थः । प्रत्यक्षे महत्त्वस्य हेतुत्वादन्यथा प्रत्येकं परमाणूनां तद्गतधर्माणां च प्रत्यक्षापत्तेः । तथा च भवदभिमतस्यानुमित्यादिविजातीयैकदेशप्रत्यक्षस्य तद्गतरूपादीनां कम्पादिक्रियाणां च प्रत्यक्षस्य चानुपपत्त्या तथा व्यवहारो न स्यात् । तथा भागैकसन्निकर्षानन्तरोत्पन्नज्ञाने वृक्षं साक्षात्करोमीत्यनुव्यवसायो न स्यात् समुदायस्यासन्निकृष्टत्वादेकदेशस्य च वृक्षत्वाभावादिति भावः ॥ ३३ ॥

समाधानान्तरमाह ।

**धारणाकर्षणोपपत्तेश्च**[२] ॥ ३४ ॥

परमाणुपुञ्जातिरिक्तोऽवयवी स्वीकार्यस्तथा सति धारणाकर्षणयोरुपपत्तेः अन्यथैकदेशधारणेन समुदायधारणमेकदेशाकर्षणेन समुदायाकर्षणं च न स्यादिति । न च नौकाकर्षणेन नौकास्थाकर्षणवत् कुण्डधारणेन कुण्डस्थदधिधारणवच्चैकादेशाकर्षादिना तद्विजातीयसंयोगाश्रयापरभागाकर्षणादिसम्भव इति वाच्यम् । नौकानौकास्थाद्योराधाराधेयभावापन्नतया आधाराकर्षणादिना आधेयाकर्षणादिसम्भवे ऽप्याधाराधेयभावानापन्नानां परमाणूनां

(१) संशयापाकरणार्थं सूत्रम् । सर्वाग्रहणमवयव्यसिद्धेरितीति तदिदं सूत्रमवयव्यनभ्युपगमे विरोधप्रदर्शनपरमिति च वार्त्तिकम् । सिद्धान्तसूत्रम् । सर्वाग्रहणमित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) प्रत्यनुमानप्रदर्शनाय सूत्रम् । धारणाकर्षणोपपत्तेश्चेति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

पुञ्जघटकानामेकाकर्षणे ऽपराकर्षणस्यासम्भवात् तथादृष्टान्ताभावादिति । यदि च कथञ्चिद्विजातीयसंयुक्तद्रव्याणामेकाकर्षणे ऽपरस्याकर्षणं सम्भाव्यते तथापि पूर्वोक्तसमाधानमेव सम्यगिति ॥ ३४ ॥

तत्रैव परोक्तमाशङ्क्य निराचष्टे ।

**सेनावनादिवदिति चेन्नातीन्द्रियत्वादणूनाम्**(१) **॥ ३५ ॥**

सेनावनादिवत् परमाणुपुञ्जोऽपि घटादिपदवाच्यः प्रत्यक्षः । तथाहि दूरस्थसेनावनादिघटकप्रत्येकस्य मनुष्यवृक्षादेरप्रत्यक्षत्वे ऽपि तत्समुदायात्मकसेनावनादेः प्रत्यक्षत्ववत् प्रत्येकं परमाणूनामप्रत्यक्षत्वे ऽपि तत्समुदायरूपघटस्य प्रत्यक्षत्वसम्भव इति चेन्नाणूनामतीन्द्रियत्वात् महत्त्वाभावेन प्रत्यक्षस्वरूपायोग्यत्वात् । मनुष्यवृक्षादेश्च प्रत्येकं महत्त्वेन प्रत्यक्षत्वात् तथा प्रत्यक्षस्य दूरत्वादिदोषेण प्रतिबन्धादनुत्पत्तिः समुदायत्वेन प्रत्यक्षे च तद्दोषस्य प्रतिबन्धकत्वाकल्पनात् तथा प्रत्यक्षं जायते ॥ ३५ ॥

समाप्तमवयविपरीक्षाप्रकरणम् ॥

अवसरसङ्गत्या क्रमप्राप्तमनुमानं परीक्षयितुं पूर्वपक्षयति ।

**रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम्**(२) **॥ ३६ ॥**

(१) इदं तावत् सूत्रं साधनपक्षे दृष्टान्तमात्रार्थत्वादसम्बद्धमित्येतत्सूत्रव्याख्यानावसरे वार्त्तिकम् । आशङ्कात इतरसूत्रम् । सेना–नाम् । इति तात्पर्यटीका । सेनावनादिवद्ग्रहणमिति चेदिति पाठोऽन्यत्र दृश्यते । सेनावनवद्ग्रहणमित्यपि क्वचित् ।

(२) उदाहरणव्यभिचारद्वारकं सूत्रम् । रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणमितीति वार्त्तिकम् । पूर्वपक्षसूत्रम् । रोधोपघातेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

अनुमानमनुमानत्वेन भवदभिमतं नदीवृद्ध्यादिज्ञानम् । एतेनाशङ्कितुश्चार्वाकस्यानुमितेरसिद्धा तत्करणत्वेन पक्षत्वासम्भव इति निरस्तम् । तत्राभिमतान्तं स्वरूपकीर्तनं नदीवृद्ध्यादिज्ञानत्वेनैव पक्षत्वात् । यद्वा परैरसत्ख्यात्यङ्गीकारादसत्येव पदानां शक्तिस्वीकाराच्चानुमानपदेनासतोऽनुमितिकरणत्वावच्छिन्नस्य पक्षतया लाभः । न प्रमाणमिति साध्यम् । प्रमाकरणतावच्छेदकरूपशून्यत्वादिति हेतुरूह्यः । ननु व्याप्तिनिश्चयत्वमेव प्रमाकरणतावच्छेदकरूपं तत्रास्तीति चार्वाकोक्तहेतुरसिद्ध इत्यत आह । रोधेत्यादि । रोधजनदीवृद्ध्युपघातजपिपीलिकाण्डसञ्चारमयूररुतसदृशरुतेषु व्यभिचारदर्शनादिति तदर्थः । अयं भावः । वृष्टिविरहेऽपि रोधनिमित्तकनदीवृद्धिदर्शनाद्व्यभिचारग्रहेण नदीवृद्ध्यादौ वृष्टिव्याप्तिनिश्चयासम्भवात् । इदं कार्यलिङ्गकमनुमानम् । तथोपघातेनाश्रयनाशेन यः पिपीलिकाण्डसञ्चारस्तेन वृष्टिव्यभिचारदर्शनात् पिपीलिकाण्डसञ्चारत्वावच्छिन्नस्य वृष्टिव्याप्यत्वेनानिश्चयान्न तेन वृष्ट्यनुमानम् । इदमनुमानं कारणलिङ्गकम् । पिपीलिकाण्डसञ्चारस्य वृष्टिहेतुत्वात् । यद्वा पिपीलिकाण्डसञ्चारस्यात्यन्तोष्मानुमापकत्वं ततश्च महाभूतक्षोभानुमानं तस्य वृष्टिहेतुत्वात् तेन वृष्ट्यनुमानम् । एवं च पिपीलिकाण्डसञ्चारस्य व्यभिचारेणात्यन्तोष्मानानुमापकत्वे तेन महाभूतक्षोभस्यापि नानुमानं ततश्च महाभूतक्षोभस्य चाज्ञाततया न तेन हेतुना वृष्ट्यनुमानमिति न कारणलिङ्गकं वृष्ट्यनुमानमिति । तथा मनुष्यादिकर्तृकमयूररुतसदृशेन व्यभिचारग्रहान्मयूररुते वृष्टिव्याप्तिनिश्चयासम्भवान्न तेन वृष्ट्यनुमानम् । यद्यपि मनुष्यादिरुते मयूररुतत्वं नास्तीति मयूररुते न व्यभिचारस्तथापि सादृश्यलक्षणदो-

CC-0. In Public Domain. Digitized by eGangotri

षवशात् तत्र मयूररुतत्वभ्रमसम्भवेन व्यभिचारग्रहान्न व्याप्तिनिश्चयसम्भव इति। इदं कार्यकारणभिन्नलिङ्गकमनुमानमितिरीत्या पूर्ववदित्यादिना प्रागुक्तं त्रिविधमनुमानमेवमप्रमाणमिति। एवमन्यत्राप्ययोग्योपाधिसंशयाद्यधीनव्यभिचारसंशयेन व्याप्तिनिश्चयासम्भवादनुमानमात्रोच्छेद इत्यपि बोध्यम्। अथवा पूर्वकालीनसाध्यानुमानमुत्तरकालीनसाध्यानुमानं वर्तमानसाध्यानुमानमिति त्रिविधमेवानुमानं पूर्ववदित्यादिप्रागुक्तलक्षणसूत्रनिर्दिष्टं व्यभिचारान्न प्रमाणमित्यर्थः ॥ ३६ ॥

सिद्धान्तयति।

**नैकदेशरोधत्राससादृश्येभ्योऽर्थान्तरभावात्**[(१)] ॥ ३७ ॥

अनुमानाप्रामाण्यं न युक्तमेकदेशरोधजनदीवृद्धित्रासजपिपीलिकाण्डसञ्चारमयूररुतसदृशरुतेभ्यो लिङ्गस्यार्थान्तरभावादर्थान्तरत्वाद् भिन्नत्वादिति यावत्। तथा च रोधजभिन्ननदीवृद्धित्रासजाद्यतिरिक्तपिपीलिकाण्डसञ्चारमयूररुतानां लिङ्गानां व्यभिचाराभावेन तैर्वृष्ट्यनुमानसम्भवः। भ्रमस्तु न सर्वेषां सार्वदिको व्यभिचारसंशयस्यापि न सर्वदा सम्भवोऽनुकूलतर्कादितस्तन्निवृत्तिसम्भवादिति भावः ॥ ३७ ॥

समाप्तमनुमानपरीक्षाप्रकरणम् ॥

अथ वर्तमानकालो वृष्टिमान् मयूररुतवत्त्वादित्यनु-

(१) नैकदेशत्रासेति सूत्रपाठोऽन्यत्र। यान्यप्येतान्युदाहरणानि व्यभिचारीणीत्युच्यन्ते तेष्वपि व्यभिचारो नास्तीत्यसिद्धतोद्भावनद्वारकं सूत्रम्। नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावादिति वार्त्तिकम्। सिद्धान्तसूत्रम्। नैकदेशत्रासेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

माने पक्षाप्रसिद्धिः । एवमनुमितेः प्रमात्वं वर्तमानसाध्यविषयकत्वं वर्तमानत्वं च वर्तमानकालवृत्तित्वं तत्र वर्तमानकालाभावे ऽनुमितेर्न प्रमात्वमिति तत्करणस्यानुमानस्य न प्रामाण्यमित्याशङ्कते ।

**वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः[1] ॥ ३८ ॥**

वर्तमानाभावः वर्तमानकालाभावः वर्तमानकालस्यासत्त्वं अतीतानागतकालभिन्ने कालत्वाभाव इति यावत् । एतेन प्रतियोगिसिद्ध्यसिद्धिभ्यां न निषेधासिद्धिरिति । तत्र कालत्वे मानाभावादिति हेतुरूह्यः । ननु घटादेः कथं कालसम्बन्धित्वरूपसत्त्वेन व्यवहार इत्यत आह । पतत इति । वस्तुनो घटादेरित्यर्थः । पतितपतितव्यकालाभ्यामतीतानागतकालाभ्यामेव सत्त्वोपपत्तेः । घटो जातो घटो भविष्यतीत्यादिप्रतीतेरिति भावः । वर्तत इत्यादिप्रयोगस्तु वृत्तितामात्रं बोधयति । यद्वा पततो वस्तुनो वर्तमानाभावो वर्तमानत्वाभावोऽतीतानागतकालभिन्नवृत्तित्वाभावः । कालवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक इत्यादिः । अथवा पततः पततीत्यादिप्रयोगविषयीभूतस्य घटादेर्वर्तमानाभावः प्रयोगाधिकरणकालवृत्तित्वाभावः पततीत्यादिप्रयोगेण तथाकालवृत्तित्वानवगाहनात् । ननु तदा सत्त्वमेव कुत इत्यत आह । पतितेत्यादि । पूर्ववदिदानीं घट इत्यादिप्रत्ययस्याप्यतीतानागतकालवृत्तित्वविषयकत्वोपपत्तेः । इदानीं

(१) एवमुपपादितः कालः । तस्योपपन्नस्य वर्तमानकालप्रतिषेधार्थं सूत्रम् । वर्तमानाभाव इत्यादि वार्त्तिकम् । पूर्वपक्षसूत्रम् । वर्तमानाभाव इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

घटो जात इदानीं घटो भविष्यतीत्यादिप्रत्ययवदिति तदर्थः ॥ ३८ ॥

अत्र समाधत्ते ।

**तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्[1] ॥ ३९ ॥**

वर्तमानकालाभावे तयोरतीतानागतकालयोरप्यभावः स्यात् तदपेक्षत्वात् तद्ग्रहसापेक्षग्रहकत्वात् । वर्तमानध्वंसप्रतियोगित्वस्यातीतत्वरूपत्वाद् वर्तमानप्रागभावप्रतियोगित्वस्य चानागतत्वरूपत्वादिति भावः । यद्वा वर्तमानकालवृत्तित्वाभावे तयोरप्यतीतानागतकालवृत्तित्वयोरप्येकस्मिन्न सम्भवः तदपेक्षत्वान्मध्यकालवृत्तित्वं विना पूर्वापरकालवृत्तित्वानुपगमादिति भावः ॥ ३९ ॥

ननु भविष्यन्निष्ठध्वंसप्रतियोगित्वमतीतत्वमतीतनिष्ठप्रागभावप्रतियोगित्वं भविष्यत्त्वमतो न तत्र वर्तमानकालापेक्षा । यद्वा मध्यकालवृत्तित्वं विनापि पूर्वापरकालवृत्तित्वस्वीकारे का क्षतिरित्यत आह ।

**नातीतानागतयोरितरेतरापेक्षा सिद्धिः[2] ॥ ४० ॥**

नेतरेतरापेक्षया सिद्धिरन्योन्याश्रयाद् वर्तमानस्यातीतत्वभविष्यत्त्वप्रसङ्गाच्चेति भावः । यद्वा न वस्तुनो वर्तमानकालावृत्तित्वं तथा सत्यतीतानागतकालवृत्ति-

(१) वर्तमानः कालो नास्तीति ब्रुवन्नभ्युपगतौ कालौ बाधते । एतदनुज्ञापनार्थं सूत्रम् । तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वादिति वार्त्तिकम् । सिद्धान्तसूत्रम् । तयोरप्यभाव इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) एतत्प्रतिषेधार्थं सूत्रम् । नातीतानागतयोरितरेतरापेक्षा सिद्धिरितीति वार्त्तिकम् । एतन्निराकरणाय सूत्रम् । नाती–द्धिः । परस्परापेक्षासिद्धेर्हि वर्तमानाभावः सैव तु नास्तीति सूत्रार्थ इति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

त्वयोरपीतरेतरापेक्षेण तत्प्रमाणेनासिद्धिः स्यात् । गृहे ऽयं घटो नासात् न स्थास्यति इदानीं वर्तत इतिप्रत्ययेन वर्तमानकालवृत्तित्वानवगाहने घट आसीद् घटो भविष्यतीत्यादिप्रत्ययेनाप्यतीतानागतकालवृत्तित्वं नावगाह्यतामिति भावः ॥ ४० ॥

समाधानान्तरमाह ।

**वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः[1] ॥ ४१ ॥**

वर्तमानाभावे वर्तमानकालस्यासत्त्वे तदानीं वस्तुनोऽसत्त्वप्रसङ्गेन सर्वेषां वस्तूनामग्रहणं ज्ञानं न स्यात् । प्रत्यक्षानुपपत्तेः । तत्काले सत एव वस्तुनः प्रत्यक्षाङ्गीकारात् प्रत्यक्षासम्भवे इतरज्ञानमपि न सम्भवति तदधीनत्वादिति भावः ॥ ४१ ॥

नन्वतीतत्वं यदि वर्तमानध्वंसप्रतियोगित्वं तदाऽयं घटः श्याम आसीदित्यादिप्रयोगानुपपत्तिः एतद्घटेऽतीतत्वबाधात् । एवमयं घटो रक्तो भविष्यतीतिप्रयोगानुपपत्तिर्वर्तमानप्रागभावप्रतियोगित्वस्य भविष्यत्त्वस्य वर्तमानघटे बाधादित्यत आह ।

**कृतताकर्तव्यतोपपत्तेरुभयथा ग्रहणम्[2] ॥ ४२ ॥**

कृतता अतीतत्वं कर्तव्यता भविष्यत्त्वं तयोर्वर्तमानघटे ऽप्युपपत्तेरुभयथा ग्रहणमासीद्भविष्यतीत्यादिप्रयोगविषयत्वेन वर्तमानघटस्यापि ग्रहणम् । तथा चायं घटः

(१) वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः सूत्रार्थाविरोध इति वार्त्तिकम् ।

(२) यच्चेदं पच्यमानं छिद्यमानं च तत् क्रियमाणं तस्मिन् क्रियमाणे कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् । इति भाष्यग्रन्थपङ्क्तिः । छिद्यमानं पच्यमानं चेत्यादिवार्त्तिकपङ्क्तिः । तद्धेतुकं द्वैविध्यमितिप्रतिपादनपरं सूत्रमवतारयति तस्मिन् क्रियमाण इति तात्पर्यटीका । कृतताकर्तव्यतोपपत्तेस्तूभयथेति पाठोऽन्यत्र दृश्यते ।

CC-0. In Public Domain. Digitized by eGangotri

श्याम आसीदित्यादावतीतत्वस्य श्यामत्वघटितपरम्परासम्बन्धेन घटादावन्वयः। अयं घटो रक्तो भविष्यतीत्यादौ च रक्तत्वादिघटितपरम्परासम्बन्धेन भविष्यत्त्वान्वय इति भावः। केचित्तु अनुमानस्य त्रिकालविषयत्वमभिहितं तन्न युक्तं वर्तमानाभावेन तदधीनज्ञानयोरतीतानागतयोरप्यभावेन कालत्रयात्मकविषयाभावादित्याशयेन वर्तमानपरीक्षामारभमाणो वर्तमानमाक्षिपति। वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः। वर्तमानाभावोऽतीतानागतभिन्ने कालत्वाभावः। व्युत्पादयति। पतत इति। पततः फलादेर्वृन्तावधिकः कश्चन देशः पतिताध्वा भूम्यवधिकः कश्चन देशः पतितव्याध्वा न तु वर्तमानस्य प्रसङ्गोऽपीति भावः। समाधत्ते। तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्। वर्तमानाभावे तयोरतीतानागतयोरप्यभावः स्यात् तयोस्तदपेक्षत्वाद् वर्तमानध्वंसप्रतियोगित्वमतीतत्वं वर्तमानप्रागभावप्रतियोगित्वमनागतत्वमिति भावः। यद्वा वर्तमानाभावेऽतीतानागतयोरप्यभाव इत्याह। तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्। इत्थं च कालत्रयाभाव इति पर्यवसितम्। ननु तयोः परस्परापेक्षयैव सिद्धेर्न वर्तमानापेक्षेत्यत आह। नातीतानागतयोरितरेतरापेक्षा सिद्धिः। अन्योन्याश्रयादिति भावः। तयोरप्यभावे का क्षतिरिति युक्त्यन्तरमाह। वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः। यद्वाकल्पे कालत्रयाभावे पूर्वपक्षिते पर्यवसिते वर्तमानसिद्धावपरयोरपि सिद्धिः सुघटेति वर्तमानं साधयति। तयोरप्यभाव इति सूत्रम्। तदर्थश्च वर्तमानाभावे प्रत्यक्षं नोपपद्यते प्रत्यक्षस्य वर्तमानविषयत्वात्। अत एवाहुः। सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिनेति। प्रत्यक्षा-

CC-0. In Public Domain. Digitized by eGangotri

भावे सर्वमेव ग्रहणं ज्ञानं न स्यात् प्रत्यक्षमूलकत्वादितरज्ञानानामिति भावः । ननु यदि वर्तमानध्वंसप्रतियोगित्वमतीतत्वं वर्तमानप्रागभावप्रतियोगित्वं भविष्यत्त्वं तदा वर्तमान एव घटे कथं श्याम आसीद्रक्तो भविष्यतीति धीरत आह । कृतताकर्तव्यतोपपत्तेरुभयथा ग्रहणम् । वर्तमानस्यापि घटादेः श्यामरक्तरूपादीनां कृतताकर्तव्यतयोरतीतत्वभविष्यत्त्वयोरुपपत्तेर्घटादेरप्यतीतानागतत्वेन व्यवहारः परम्परासम्बन्धादिति भाव इति प्राहुः ॥ ४२ ॥

समाप्तं वर्तमानपरीक्षाप्रकरणम् ॥

अवसरसङ्गत्या क्रमप्राप्तमुपमानं परीक्षयितुमाह ।

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः**[1] ॥ ४३ ॥

उपमानमुपमितित्वेनाभिमतं ज्ञानम् । तस्य प्रसिद्धसाधर्म्याद् या सिद्धिरुत्पत्तिः सा न सम्भवति यतोऽत्यन्तप्रायैकदेशसाधर्म्यान्न सिद्धिः । तथा च प्रसिद्धसाधर्म्यप्रयुक्तोत्पत्तिकत्वसामान्याभावः साध्यः । प्रसिद्धपदं ज्ञातपरम् । अत्यन्तज्ञातसाधर्म्यादिप्रयुक्तोत्पत्तिकत्वाभावकूटस्य हेतुत्वं विशेषाभावकूटस्य सामान्याभावसाधकत्वं सर्वसिद्धमिति । तत्रात्यन्तसाधर्म्यं तद्गतयावद्धर्मवत्त्वं तद्भिन्नत्वमपि तत्र न देयमप्रसिद्ध्यापत्तेः । तस्य नोपमानत्वं गोसाधर्म्येण गोरुपमित्यभावाद् गवये गोगतयावद्धर्माभावेन गवयपदवाच्यत्वोपमित्यनुपपत्तेश्च । प्रायसाधर्म्यं तद्भिन्नत्वे सति तद्गतबहुतरधर्मवत्त्वं तस्य च नोपमानत्वं गोसाधर्म्येण महिषे महिषपदवाच्यत्वानुपमितेः । अत एव तद्भिन्नत्वे सति तद्गतयत्किञ्चिद्धर्मवत्त्वरूपस्यैकदेशसाधर्म्यस्य

(१) पूर्वपक्षसूत्रम् । अत्यन्तप्रायैकदेशेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

नोपमानत्वं सर्षपसाधर्म्येण मेरोरुपमित्यभावाच्च । एवं वैधर्म्यस्यापि नोपमानत्वमित्यपि बोध्यम् ॥ ४३ ॥

प्रसिद्धपदं न ज्ञातमात्रपरमित्यभिप्रायेण समाधत्ते ।

**प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः**(१) ॥ ४४ ॥

प्रसिद्धं प्रकर्षेण महिषादिधर्मव्यावृत्तरूपेण सिद्धं ज्ञातं यत् साधर्म्यं तस्मादुपमितिस्वीकारात् तत्र यथोक्तदोषानुपपत्तिः यथोक्तव्यभिचाराभाव इति । तादृशं च साधर्म्यं प्रकरणवशादवगम्यमिति ॥ ४४ ॥

नोपमानं मानान्तरमित्याशङ्कते ।

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः**(२) ॥ ४५ ॥

प्रत्यक्षेण प्रत्यक्षविषयीभूतेन गोसाधर्म्येण हेतुना अप्रत्यक्षस्य गवयपदवाच्यत्वस्य सिद्धेरनुमितिस्वीकारात् । नोपमानं मानान्तरमिति शेषः ॥ ४५ ॥

समाधत्ते ।

**नाप्रत्यक्षेण गवये प्रामाण्यार्थमुपमानस्य पश्यामः**(३) ॥ ४६ ॥

नोपमानमनुमानान्तर्गतं यतोऽप्रत्यक्षेण गवयपदवाच्यत्वेन रूपेण । गवये गवयस्य यत् प्रमाणं प्रमां तद्रूपमर्थं फलमुपमानस्य ज्ञातसाधर्म्यस्य पश्याम इत्यर्थः ।

(१) सिद्धान्तसूत्रम् । प्रसिद्धसाधर्म्यादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) पूर्वपक्षी आह । प्रत्यक्षेणाप्रत्यक्षसिद्धेः । इति धृत्वा व्याख्यावसरे नोपमानं पृथगिति सूत्रार्थं इत्याहुर्न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(३) समाधिसूत्रम् । नाप्रत्यक्षे गवय इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । नाप्रत्यक्षे गवय इति त्वन्यत्र पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

तथा च साधर्म्यज्ञानाधीना या मितिस्तस्या उपमिनोमि नानुमिनोमीत्याद्यनुव्यवसायसिद्धाया विजातीयप्रमायाः करणत्वेनोपमानस्य मानान्तरत्वं सिद्धमिति भावः । अप्रत्यक्षेणेत्युक्त्या प्रत्यक्षासम्भवो दर्शितः ॥ ४६ ॥

अनुव्यवसाये विवदमानं प्रत्याह ।

**तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः**[१] ॥ ४७ ॥

अनुमानादुपमानस्य नाविशेषस्तथेत्युपसंहाराद् यथा गौस्तथा गवय इतिव्याप्तिज्ञाननिरपेक्षसाधर्म्यज्ञानादुपमानसिद्धेरुपमित्युत्पत्तेरित्यर्थः । तथा च व्याप्तिज्ञानपूर्वकत्वाभावेन तादृशप्रमाया नानुमितित्वमिति परिशेषादुपमितिः प्रमान्तरमिति भावः ॥ ४७ ॥

समाप्तमुपमानप्रामाण्यपरीक्षाप्रकरणम् ॥

अवसरसङ्गत्या क्रमप्राप्तं शब्दं प्रमाणत्वेन परीक्षयितुमाह ।

**शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्**[२] ॥ ४८ ॥

शब्दो ज्ञातशब्दः शब्दज्ञानं वा । अनुमानमनुमितिकरणम् । तदर्थस्यानुपलब्धेरनुमेयत्वात् प्रत्यक्षाविषयत्वे सति ज्ञेयत्वेन हेतुनानुमेयत्वादित्यर्थः । एवं च प्रत्यक्षोपमित्यकरणत्वे सति ज्ञानकरणत्वमेवानुमानत्वसाधकहेतुरिति तात्पर्यम् । शब्दः शब्दाधीनं ज्ञानमनुमानमनुमितिः अर्थस्य तदर्थस्यानुपलब्धेरप्रत्यक्षत्वाद्धेतोरनुमेयत्वात् । तथा

(१) अनुमानवैधर्म्यप्रदर्शनाय सूत्रम् । तथेत्युपसंहारादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) इतश्चानुमानं शब्दोऽर्थस्यानुपलब्धेः । प्रत्यक्षेणानुपलभ्यमानार्थविषयत्वादिति सूत्रार्थ इति वार्त्तिकम् । पूर्वपक्षसूत्रम् । शब्दोऽनुमानमित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

चाप्रत्यक्षविषयकत्वं प्रत्यक्षान्यत्वं वानुमितित्वसाधकं लिङ्गमिति भावः ॥ ४८ ॥

नन्विदमप्रयोजकमित्यत आह ।

**उपलब्धेरद्विप्रवृत्तिकत्वात्**[1] ॥ ४९ ॥

उपलब्धेः शब्दाधीनज्ञानस्य । अद्विप्रवृत्तिकत्वादनुमितिकरणलिङ्गज्ञानातिरिक्ताकरणकत्वात् । तथा चातिरिक्तकार्यकारणभावसत्त्व एव तज्जन्यतावच्छेदकतया शाब्दत्वजातिसिद्धिः स्यात् स एव नास्ति प्रत्युत व्याप्त्यवच्छिन्नशब्दज्ञानजन्यतयानुमितित्वं तत्रास्तीति भावः ॥ ४९ ॥

ननु शब्दस्यार्थव्याप्यत्व एवानुमापकत्वं तदेव नास्तीत्यत आह ।

**सम्बन्धाच्चेति**[2] ॥ ५० ॥

सम्बन्धाद् व्याप्तिसम्बन्धात् । इत्थं चार्थव्याप्यतया गृहीतशब्दादेव बोधो जायते न त्वन्यथा स च बोधोऽनुमितिरेव तत्सामग्रीनियम्यत्वादिति भावः ॥५०॥

समाधत्ते ।

**आप्तोपदेशसामर्थ्याच्छब्दादर्थे सम्प्रत्ययः**[3] ॥ ५१ ॥

(१) हेत्वन्तरम् । उपलब्धेरद्विप्रवृत्तित्वादिति धृत्वा व्याख्याशेषे इति सूत्रार्थ इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः । अन्यत्राद्विप्रवृत्तित्वादिति पाठः ।

(२) अत्रेतिरहितः सूत्रपाठोऽन्यत्र । सम्बन्धाच्च । सम्बद्धार्थप्रतिपादकत्वाच्चेति सूत्रार्थ इति वार्त्तिकम् । न्यायतत्त्वालोके ऽपि एतत्सूत्रव्याख्यावसाने इति सूत्रार्थ इति लिखितं वाचस्पतिमिश्रैः ।

(३) प्रत्यायनाङ्गान्वयव्यतिरेकज्ञानं तु अन्यादृशं शब्दे ऽन्यादृशं त्वनुमाने तद्धि पक्षधर्मतापेक्षमनुमाने शब्दे तु तदनपेक्षमित्यत्र सूत्रं भवति । आप्तो-यः । इति तात्पर्यटीका । सिद्धान्तसूत्रम् । आप्तोपदेशेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । आप्तोपदेशसामर्थ्याच्छब्दादर्थे सम्प्रत्यय इति सूत्रस्यायमर्थ इति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । आप्तोपदेशसामर्थ्याच्छब्दार्थसम्प्रत्यय इति क्वचित् शब्दादर्थसम्प्रत्यय इति च क्वचित् पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

आप्तस्य भ्रमादिशून्यपुरुषस्य परमेश्वरादेर्य उपदेशोऽस्माच्छब्दादयमर्थो बोद्धव्य इत्यादिसङ्केतः शक्तिपरिभाषारूपस्तेन सामर्थ्यं बोधौपयिकत्वं यस्य तादृशादेव शब्दादर्थ एकपदार्थे ऽपरपदार्थस्य सम्प्रत्ययोऽनुमित्यादिविजातीयबोध इत्यर्थः। एवकारेण व्याप्तिज्ञानापेक्षा निरस्ता । एवं च वृत्त्या पदज्ञानजन्यपदार्थोपस्थित्या आकाङ्क्षादिज्ञानसहकृतया जायमानो बोधः शाब्दबोध इत्यर्थः। तादृशपदज्ञानजन्यतावच्छेदकतयैव तत्र शाब्दत्वसिद्धिः। व्याप्तिज्ञानाजन्यत्वेनानुमितित्वनिरासः । यद्वा आप्तं प्राप्तं यदुपदेशसामर्थ्यं शाब्दबोधौपयिकाकाङ्क्षादि ततस्तत्सहकृतादित्यर्थः । यद्वा आप्तोपदेशो भ्रमादिशून्यस्य शब्दस्तत्सामर्थ्यमाकाङ्क्षासत्त्वं तत इत्यर्थः ॥ ५१ ॥

ननु व्याप्यत्वज्ञानं विना शब्दादर्थबोधो न जायत एवेत्यत आह ।

**पूरणप्रदाहपाटनानुपपत्तेश्च सम्बन्धाभावः(१) ॥ ५२ ॥**

शब्दे ऽर्थस्य सम्बन्धाभावो व्याप्यत्वाभावः । हेतुमाह । पूरणेत्यादि । तदर्थश्च अन्नाग्निवासिशब्दवत्यपि मुखे पूरणप्रदाहपाटनाभावानुमितान्नाग्निवासिविरहादिति। तथा च व्यभिचारान्न व्याप्तिरिति भावः ॥ ५२ ॥

ननु शब्दार्थयोरसम्बन्धे कथं तस्माच्छाब्दबोधोऽन्यथाऽतिप्रसङ्ग इत्याशङ्कते।

**शब्दार्थव्यवस्थानादप्रतिषेधः(२) ॥ ५३ ॥**

(१) एतत्सूत्रव्याख्यावसरे इति सूत्रार्थ इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः ।

(२) आक्षेपसूत्रम् । शब्दार्थव्यवस्थानादप्रतिषेध इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।



CC-0. In Public Domain. Digitized by eGangotri

शब्दार्थयोर्व्यवस्थानाच्छब्दविशेषार्थविशेषयोर्बोध्य-बोधकभावादप्रतिषेधः शब्दविशेषार्थविशेषयोर्न सम्बन्ध-प्रतिषेधः । तथा च येन सम्बन्धेन यादृशशब्दवत्त्व-ज्ञानेन यादृशार्थप्रतीतिर्जायते न त्वन्यथा तादृशसम्बन्धे-नैव शब्दार्थयोर्व्याप्यव्यापकभावो वर्तते तेन न व्यभि-चार इति भावः । ननु शब्दार्थयोः सम्बन्धो वृत्तिरूपः न च तेनापि सम्बन्धेन शब्दस्यार्थव्याप्यत्वं गोशब्दादिमति वाक्यादौ प्राणिविशेषगवादेरभावात् । न च गोपदसम-भिव्याहृतानुस्वारपदादिना कर्मत्वादौ गवीयत्वादिकम-नुमेयमिति वाच्यम् । वाक्यीयकर्मत्वादौ व्यभिचारादिति चेत् । न । पदश्रवणानन्तरं पदार्थस्मरणे एते पदार्थाः पर-स्परं संसर्गवन्त आकाङ्क्षायोग्यतासत्तिमत्पदस्मारित-त्वाद् दण्डेन गामभ्याजेतिपदस्मारितपदार्थवदित्यनुमाने एतानि पदानि स्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आका-ङ्क्षादिमत्पदकदम्बत्वादित्यनुमाने वा तात्पर्यादिति ॥ ५३ ॥

समाधत्ते ।

**न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य**[(१)] **॥ ५४ ॥**

शब्दार्थसम्प्रत्ययस्य शब्दाधीनार्थबोधस्य नानुमिति-त्वं सामयिकत्वात् समयः शक्तिस्तद्ग्रहाधीनत्वात् । न चाप्तोपदेशेतिसूत्रेण पौनरुक्त्यं पूर्वोक्तदोषावारणं चेति वाच्यम् । उक्तस्य पुनरुक्तेर्नियमबोधकत्वात् । तथा चायं भावः । शक्तिग्रहस्तात्पर्यग्रहाद्युपलक्षकः तत्सत्त्वे च पदा-र्थसंसर्गबोधो जायते न त्वन्यथा न हि तत्र कदाचिद्व्या-प्त्यादिग्रहविलम्बेन पदार्थसंसर्गबोधविलम्बो दृष्ट इति

(१) क्वचिच्चकाररहितः सूत्रपाठः । समाधिसूत्रम् । न सामयिकत्वादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

व्याप्तिज्ञानविनाकृतशक्तिज्ञानादितो विजातीयो बोधः स्वीकार्य इति । यद्वा सामयिकत्वात् कालविशेषोत्पन्नत्वाद् व्याप्तिज्ञानशून्यशब्दज्ञानादिकालाव्यवहितोत्तरोत्पन्नत्वेनानुभूतत्वादिति यावत् । तथा च व्याप्तिज्ञानाजन्यत्वेनानुमितित्वाभावस्तत्रेति भावः । यत्तु सामयिकत्वाच्छक्तिग्रहाधीनत्वात् तथा चार्थे शक्तिरूपसम्बन्ध एव शब्दस्य स च वृत्त्यनियामक इति न तेन सम्बन्धेन शब्दस्य व्याप्तिमत्त्वमिति । शब्दशक्यत्वस्यैव व्याप्यत्वं जातिविशेषे चानियमादित्यनेन निरास्यमिति । तच्चिन्त्यम् ॥ ५४ ॥

ननु व्याप्तिज्ञानापेक्षशक्त्यादिज्ञानादुत्पन्नस्य कथं नानुमितित्वमित्यत आह ।

## जातिविशेषे चानियमात्[१] ॥ ५५ ॥

जातिविशेषे ऽनुमितित्वरूपे ऽनियमान्नियामकाभावादिति । यद्वा जातिविशेषे धर्मविशेषे निरुक्ताकाङ्क्षादिमत्पदस्मारितत्वरूपे आकाङ्क्षादिमत्पदकदम्बत्वरूपे च अनियमाच्च निरुक्तसाध्यव्याप्यत्वाभावाच्च । इत्थं चाद्ये पयसा सिञ्चतीत्यादावन्वयप्रयोजकरूपयोग्यताकपदस्मारिते स्थिरजले सेककरणत्वबाधाद्व्यभिचारः । न च तत्पदार्थे तत्पदार्थ एव योग्यता तादृशयोग्यताशालित्वेन विशेषणेन न व्यभिचार इति वाच्यम् । तादृशयोग्यतायाः शाब्दबोधपूर्वमनिश्चयेन तद्घटितहेतोः पक्षधर्मत्वानिश्चयात् । योग्यतासंशयस्यापि शाब्दबोधहेतुतया नास्मन्मते दोषः भवन्मते हेतुतावच्छेदकयोग्यतासंशये हेतोरपि पक्षे संशय इति ततो नानुमितिसम्भवः कथञ्चित् तन्निर्णये सिद्धसाध-

(१) न्यायसूचीनिबन्धे दर्शनात् न्यायतत्त्वालोके व्याख्यातत्वात् जाति-त् इति तात्पर्यटीकायां सूत्रप्रतीकधारणरीतिदर्शनाच्चास्य सूत्रत्वमवसीयते ।

CC-0. In Public Domain. Digitized by eGangotri

नाच्च। संसर्गयोग्यत्वस्य साध्यत्वे च न पदार्थसंसर्गसिद्धिः। द्वितीये हेतौ आकाङ्क्षारूपं हेतुविशेषणं तस्याः स्वरूपसत्या एव शाब्दबोधहेतुत्वं न तु तज्ज्ञानस्येति तस्या हेतुघटकत्वे तज्ज्ञानमात्रापेक्षणेन तदसत्त्वे ऽपि बोधापत्तेः तत्सत्त्वे तज्ज्ञानाभावे ऽपि शाब्दबोधस्यानुभविकत्वाच्च। आकाङ्क्षा च समभिव्याहृतपदस्मारितपदार्थजिज्ञासा घटमित्युक्ते आनय पश्येति आनयेत्युक्ते घटं पटं वेतिजिज्ञासोदयात्। इत्थं च योग्यतासहितासत्तिरेव हेतुर्वाच्या तस्यां च सत्यामयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपदपुरुषपदयोर्व्यभिचारादनियम इति। यदाहुराचार्याः।

अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना॥ इति[१]।

परिच्छेदे एकपदार्थे ऽपरपदार्थसंसर्गस्य साध्यत्वे। सम्भवे संसर्गस्वरूपयोग्यत्वस्य साध्यत्वे। न निर्णयो न संसर्गसिद्धिः। अबन्धना व्याप्तिशून्या। केचित्तु जातिविशेषे चानियमादिति। शब्दस्यार्थेन सह यः सम्बन्धस्तस्य जातिविशेषे ऽनियमाच्छब्दस्यानियतार्थकत्वदर्शनात्। आर्या हि यवशब्दाद्दीर्घशूकविशेषं प्रतियन्ति म्लेच्छास्तु कङ्गुमिति नियमे तु सर्वः सर्वं प्रतीयात्। आपाततश्चेदम्। नानाशक्ताविव यत्र यस्य शक्तिग्रहस्तस्य तदर्थोपस्थितेरित्याहुः। अन्ये तु जातिविशेषे आकाङ्क्षादिजन्यतावच्छेदकतया अनुव्यवसायबलेन च सिद्धे शाब्दत्वरूपजातिविशेषे। अनियमात् तादृशजात्यधिकरणे बोधे ऽनुमितित्वानियमादनुमितित्वाभावादिति यावत्। साधकविरहादनुव्यवसायरूपबाधकसत्त्वाच्चेति भावः। अनुव्य-

(१) न्यायकुसुमाञ्जलौ तृतीयस्तवके १३ कारिका।

CC-0. In Public Domain. Digitized by eGangotri

वसायश्च शब्दश्रवणानन्तरजातबोधे ऽयमर्थः श्रुतो नानुमित इममर्थं शृणोमि शाब्दयामि नानुमिनोमीत्यादिरूप इति प्राहुः ॥ ५५ ॥

समाप्तं शब्दप्रामाण्यपरीक्षाप्रकरणम् ॥

शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तं तत्र दृष्टार्थकस्य संवादिप्रवृत्त्यादिजनकबोधजनकतया प्रामाण्यावधारणं स्फुटमिति अदृष्टार्थकस्य वेदस्य प्रामाण्यं परीक्षयितुं पूर्वपक्षयति ।

**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः**[1] **॥ ५६ ॥**

तस्यादृष्टार्थकस्य वेदस्याप्रामाण्यमनृतत्वादिदोषात् । तत्रानृतत्वं बाधितार्थकत्वम् । तच्च क्वचित् पुत्त्रेष्टिकारीर्यादौ कृते ऽपि तत्फलस्य पुत्त्रवृष्ट्यादेरनुत्पाददर्शनात् तत्फलरूपेष्टसाधनत्वस्य बाधनिर्णयान्निर्णीतम् । व्याघातः पूर्वापरविरोधः । यथा उदिते जुहोति अनुदिते जुहोति समयाध्युषिते जुहोतीतिश्रुत्या उदितहोमादौ बलवदनिष्टाननुबन्धीष्टसाधनत्वं बोध्यते अनयोक्त्या श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति श्यावशबलावस्याहुतिमभ्यवहरतः यः समयाध्युषिते जुहोतीत्यादिश्रुत्या उदितादिहोमकर्तुः प्रायश्चित्तहोमबोधिकया उदितहोमादावनिष्टसाधनत्वमाक्षिप्यत इति श्रुत्योः परस्परविरोधादबोधकतयाऽप्रामाण्यमिति भावः। पौनरुक्त्यमुक्तार्थस्य बोधे जाते पुनस्तदर्थबोधे

(१) तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य इति सूत्रमिति वार्त्तिकम् । पूर्वपक्षसूत्रम् । तदप्रामाण्यमित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

निराकाङ्क्षत्वम् । तेन दोषेण उक्तस्य पुनरुक्तेर्वेदभागस्याप्रामाण्यमित्यर्थः । यथा त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाहेत्यत्रोत्तमत्वस्य प्रथमत्वपर्यवसानात् त्रिःकथनेन पौनरुक्त्यम् । एतेषामप्रामाण्ये तद्दृष्टान्तेन वेदत्वेन हेतुना वेदसामान्ये ऽप्रामाण्यं साधनीयमिति भावः ॥ ५६ ॥

अनृतत्वं वारयति ।

**न कर्मकर्तृसाधनवैगुण्यात्**(१) **॥ ५७ ॥**

न पुत्त्रेष्ट्यादिविधायकवेदस्यानृतत्वम् । हेतुमाह । कर्मकर्तृसाधनवैगुण्यात् फलाभावोपपत्तेः । यद्वा यथोक्तकर्मकर्तृसाधने वैगुण्यं विशिष्टफलजनकत्वं यस्य कर्मणः पुत्त्रेष्ट्यादेस्तस्मात् । बोधकतासम्बन्धेन तादृशकर्मवत्त्वं हेतुरिति फलितम् । तथा च यत्र पुत्त्रेष्ट्यादौ न फलोत्पत्तिस्तत्र कर्माद्येकतरस्य समस्तस्य वा वैकल्यमस्तीति तत्रान्वयव्यभिचारे ऽपि वेदबोधितपुत्त्रेष्ट्यादेः फलजनकताया नानुपपत्तिरिति । अथवा इदं कर्म न वेदबोधितं कर्मादिवैगुण्यादिति । तत्र कर्मवैगुण्यमयथाविधिकृतत्वम् । कर्तृवैगुण्यमशुचित्वादि । साधनवैगुण्यं हविरादेरप्रोक्षितत्वादि । न च यथोक्तकर्मादिस्थले ऽपि फलानुत्पत्तिर्दृश्यत इति वाच्यम् । तथापि कर्मादिवैगुण्यमस्ति किं तु तदज्ञानं दोषादेवेतिनिर्णयात् । तत्र व्यभिचारसंशये ऽपि तस्य कारणताग्रहाविरोधित्वात् । अनेकत्र पुत्त्रेष्ट्यादितः पुत्त्रादिफलदर्शनात् तादृशकार्यकारणभावग्रहोत्तरं फलादर्शनेन कर्मादिवैगुण्यमनुमीयत इति भावः ॥ ५७ ॥

(१) न्यायसूचीनिबन्धे दर्शनेन न्यायतत्त्वालोके व्याख्यातत्वेन विश्वनाथवृत्तौ सिद्धान्तसूत्रत्वेनोल्लेखदर्शनेन चास्य सूत्रत्वमवगीयते । तात्पर्यटीकायां च एवं पूर्वपक्षमुक्त्वा सिद्धान्तमुपक्रममाणः प्रथमं तावदनृतत्वं दूषयति । न क-त् । इति लिखितम् । दूषयतीति सूत्रकार इति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

व्याघातं परिहरति ।

**अभ्युपेत्य कालभेदे दोषवचनात्**[1] ॥ ५८ ॥

न व्याघात इति शेषः । अभ्युपेत्य प्राक्तनश्रुत्या बोधमभ्युपेत्य कालभेदे विहितकालमतिक्रम्य कृते दोषवचनात् । यथा अग्न्याधानकाले उदितहोमादिकमभ्युपगतं तत्रानुदितहोमादिकरणे दोषकथनान्न विरोध इति । कालभेद इत्युपलक्षणम् । अधिकारान्तरभेदमादायापि विरुद्धार्थकथनात् । दोषपदस्य विरुद्धार्थपरत्वात् । यथा अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीतिश्रुत्योर्विरोधः षोडशिग्रहणतदग्रहणयोर्विकल्पपरतया निरस्यते । एवं जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वाऽनृणो यः पुत्त्री यज्वा ब्रह्मचारी वासितेतिश्रुत्या ब्रह्मचर्यादेव प्रव्रजेद् यदहरेव विरज्येत तदहरेव प्रव्रजेत् अथ पुनरव्रती वा व्रती वा किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे किं प्रजया करिष्यामो याज्ञवल्क्यः प्रवव्राज ये प्रजामीषिरे ते श्मशानानि भेजिरे ये प्रजां नेषिरे ते ऽमृतत्वं हि भेजिर इत्यादिश्रुतेर्विरोधः । प्राक्श्रुतेरविरक्तपरतया समाधीयते । एवमन्योऽपि विरोधः परिहरणीयः ॥ ५८ ॥

पौनरुक्त्यं परिहरति ।

**अनुवादोपपत्तेश्च**[2] ॥ ५९ ॥

चः पुनरर्थे । अनुवादोपपत्तेः पुनर्न पुनरुक्तम् । निष्प्र-

(१) तात्पर्यटीकाकृता तदेवं वेदाप्रामाण्यहेतूनुद्धृत्य प्रामाण्यसम्भवहेतुः सूत्रकारेण वक्तव्य इति लिखितम् तेन ज्ञायते न कर्मकर्तृसाधनवैगुण्यादित्यादीनि वाक्यानि सूत्रकृदुक्तानीति । व्याख्यातानि चैतानि न्यायतत्त्वालोके । न्यायसूचीनिबन्धे चैतानि सूत्राणि दृश्यन्ते ।

(२) पूर्वसूत्रटिप्पणी द्रष्टव्या ।

CC-0. In Public Domain. Digitized by eGangotri

योजनत्वे हि पौनरुक्त्यं दोष उक्तस्थले त्वनुवादस्योपपत्तेः प्रयोजनस्य सम्भवात्। एकादशसामधेनीनां प्रथमोत्तमयो-स्त्रिरभिधाने पञ्चदशत्वं सम्भवति। तथा च पञ्चदशत्वं श्रूयते। इदमहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण बाधे योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति। वस्तुतस्तु पूर्वपक्षसूत्रे तद-प्रामाण्यमित्यनेन वेदाप्रामाण्यमुक्तं तत्र हेतुत्रयमुक्तं तत्र क्रमेण सूत्रत्रयेण हेतुत्रयं निराकृतम्। तत्र प्रथमसूत्र एव नेत्युक्तं तस्य वेदाप्रामाण्यं नेत्यर्थः। तत्रैव हेतुत्रयम्। कर्म-कर्तृसाधनवैगुण्यादित्येकम्। कर्मादिवैगुण्येन फलानुत्पा-दसम्भवेनानृतत्वाभावादिति तदर्थः। अभ्युपेत्य कालभेदे दोषवचनादित्यपरम्। अभ्युपेत्य अभ्युपगतार्थस्य कालभेदे कालभेदादिकमादाय दोषवचनात् तद्विरुद्धार्थकथनाद् व्याघाताभावादिति शेष इति तदर्थः। हेत्वन्तरं च। अनु-वादोपपत्तेश्चेति। अनुवादस्य पुनरुक्तविशेषस्य उपपत्ते-रर्थविशेषाकाङ्क्षया सम्भवादिति तदर्थः। अत्रोक्तानुक्त-समुच्चायकश्चकारः। अनुक्तसमुच्चायकता यथा। ऐन्द्रया गार्हपत्यमुपतिष्ठत इतिश्रुतावैन्द्रीपदमृग्विशेषे रूढम्। सा च ऋगिन्द्रप्रकाशिका तया च गार्हपत्योपस्थापने विरोध-स्तत्र मन्त्रस्थेन्द्रपदस्य गार्हपत्ये लक्षणास्वीकारेण विरोधप-रिहारात्। न च गार्हपत्यपद एव लक्षणा शक्येनैन्द्रीपदेने-न्द्रप्रकाशकमन्त्रपरेण तथैव कल्पनादिति वाच्यम्। योगा-दर्थतो रूढ्या बलवत्त्वेन ऐन्द्रीपदेन मन्त्रविशेषत्वेनोप-स्थितौ तस्य शक्त्या गार्हपत्यपदोपस्थापिते योग्यतया प्रथमत एवान्वयादनन्तरं चोपस्थिते मन्त्रपद एव लक्षणे-तिस्वीकारादेवमन्यदप्यूह्यम्॥ ५९॥

CC-0. In Public Domain. Digitized by eGangotri

अनुवादस्य साकाङ्क्षत्वं लोकसिद्धमित्याह ।

**वाक्यविभागस्य चार्थग्रहणात्**[१] ॥ ६० ॥

चो हेतौ । तथा च वाक्यविभागस्य विध्यनुवादकादिभेदेन वाक्यविभागस्यार्थग्रहणादर्थविशेषभेदेन स्वीकारात् । शिष्टैरिति शेषः । शिष्टा हि विधायकानुवादादिभेदेन वाक्यमर्थभेदेन विभजन्त इत्यनुवादस्याप्यर्थविशेषो वर्तते तदाकाङ्क्षयैव तदुक्तिसम्भवादिति भावः ॥ ६० ॥

ननु वेदे कथं वाक्यविभाग इत्यत आह ।

**विध्यर्थवादानुवादवचनविनियोगात्**[२] ॥ ६१ ॥

विधिवचनत्वादिना विनियोगाद् विभजनादित्यर्थः । ननु निषेधरूपमपि न कलञ्जं भक्षयेदित्यादि वाक्यं वेदेऽस्तीति कथं त्रिधा विभाग इति चेत् सत्यं तदादाय चतुर्धैव विभागः प्रसिद्धः । इदानीं पुनरुक्तस्यानुवादतया प्रामाण्यार्थं प्रवृत्तिप्रयोजकवाक्यविभागकरणात् । विधिरपि चतुर्विध उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति । तत्रोत्पत्तिविधिः कर्मादेः प्राथमिकप्राप्तिर्यतः सः । प्राथमिकप्राप्तेरुत्पत्तिरूपत्वात् । यथा अग्निहोत्रं जुहोति सोमेन यजेतेत्यादि । विनियोगविधिश्च विनियोगेन परार्थतयाऽन्यविधिः । यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादि । अत्र ऐन्द्र्याख्यमन्त्रस्य गार्हपत्योपस्थापने विनियोगात् । न च स्वर्गकामो यजेतेत्यादिविधेरपि विनियोगविधित्वापत्तिस्तत्र क्रियायाः पुरुषार्थसाधनत्वरूपपरार्थतया विधानादिति वाच्यम् ।

(१) न्यायसूचीनिबन्धे दर्शनाद्न्यायतत्त्वालोके व्याख्यातत्वाच्च सूत्रमिति प्रतीयते।

(२) येषां शब्दानां वाक्यविभागोद्दिष्टप्रदर्शनाय? सूत्रम् । विध्यर्थवादानुवादेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

इष्टत्वात्। क्रियायाः कृतिसाध्यतया विधानमादायोत्पत्तिविधित्वाविरोधात्। न चोत्पत्तिविधित्वेन विभागो व्यर्थस्तस्य विनियोगविध्यन्तर्भावादिति वाच्यम्। अहरहः सन्ध्यामुपासीतेत्यादौ प्रथमतः फलानुपस्थित्या कृतिसाध्यतयैव बोधनात् तादृशबोधस्यैव प्राथमिकतया तमादायोत्पत्तिविधित्वमनन्तरं च किमर्थोऽयं विधिरित्यपेक्षया अर्थवादिकफलोपस्थित्या तत्साधनतया बोधनाद् विनियोगविधित्वं सामान्यलक्षणगमनं चेत्यर्थभेदात् तयोर्विभागकरणादिति। न च कृतिसाध्यताबोधकत्वमेव सामान्यलक्षणं कर्तव्यमिति वाच्यम्। पाकं करोतीत्यादिलौकिकवाक्ये ऽतिव्याप्तेरिति। विनियोगविधिरपि त्रिविधः। अपूर्वविधिनियमविधिपरिसङ्ख्याविधिभेदात्। तदुक्तम्।

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥ इति।

अत्यन्तमप्राप्तौ सत्यां यत् प्रवृत्तिप्रयोजकं वाक्यं स विधिरपूर्वविधिरित्यर्थः। अत्यन्तपदं सत्यामितिक्रियायां विशेषणमप्राप्तावेव वेति। यथा व्रीहीन् प्रोक्षतीत्यादि। व्रीहिसाधकपुरोडाशद्रव्यकयागजन्यापूर्वाद्यर्थिनां व्रीहिप्रोक्षणादौ प्रवर्तकत्वादेतद्विधिं विना तत्र प्रवृत्त्यभावादप्रोक्षितैर्व्रीहिभिरपि पुरोडाशसम्भवात्। पाक्षिके सति विधिं विना प्रवृत्तेः पक्षिकत्वे सति रागादिसत्त्वे स्वत एव प्रवृत्तिस्तदसत्त्वे न प्रवृत्तिरित्यनियमे सति यो नियमेन प्रवर्तकः स नियम इति। यथा ऋतौ स्वदारानुपेयादित्यादि। तत्र चान्यत्र चेति। यत्रोद्देश्ये यस्य विधानं तदन्यस्मिन्नपि तत्सम्बन्धस्य तस्मिन् वा तदन्यसम्बन्धस्य रागाद्यधीनप्रवृत्तितः प्रसक्तौ तद्विरोधी

CC-0. In Public Domain. Digitized by eGangotri

अनियतप्रवर्तकः परिसंख्येत्यर्थः । यथा पञ्च पञ्चनखान् भुञ्जीतेत्यादि । याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्यादि च ॥ ६१ ॥

तत्र विधिलक्षणमाह ।

विधिर्विधायकः[1] ॥ ६२ ॥

विदधाति प्रवर्तयति यद्वाक्यं तद्विधिरितिव्युत्पत्त्या प्रवृत्तिजनकेष्टसाधनताबोधक इत्यर्थः पर्यवसितः । न चेष्टसाधनताबोधकतदादिपदघटितलौकिकवाक्ये ऽतिव्याप्तिरिति वाच्यम् । आश्रयतासम्बन्धेनेष्टसाधनताप्रकारकबोधजनकोपस्थितिजनकप्रत्ययघटितवाक्यत्वस्य विवक्षणात् । न कलञ्जं भक्षयेदित्यादिनिषेधातिव्याप्तिवारणायाश्रयतासम्बन्धेनेति । तत्र बलवदनिष्टाननुबन्धीष्टसाधनत्वाभावस्य धात्वर्थे ऽन्वयात् प्रतियोगितासम्बन्धेनैवाभावे इष्टसाधनताबोधनात् । न चाहरहः सन्ध्यामुपासीतेत्यादौ फलाश्रवणात् कुत इष्टसाधनताबोध इति वाच्यम् । तत्राप्यार्थवादिकफलोपस्थित्या तत्साधनताबोधकत्वात् । स्फुटमुदाहरणं तु स्वाराज्यकामो वाजपेयेन यजेतेत्यादि । विश्वजिता यजेतेत्यादौ साक्षात् फलाश्रवणे ऽपि काम्यप्रकरणपाठात् सामान्यतः स्वर्गसाधनतायाः स्वीकारात् ॥ ६२ ॥

अर्थस्य विध्यर्थे साक्षात् परम्परया वाऽनन्वितार्थस्य वादः कथनमर्थवादः । न च क्वचिद्विधिनाऽर्थवादस्यैकवाक्यतया विध्यर्थान्वयित्वमपि तादृशार्थवादस्येति वाच्यम् । यत्र फलश्रुतिर्नास्ति तत्रापि सामान्यत एव विधिप्रत्ययेन

(१) विधिर्विधायकः । कृतिजनकचिकीर्षाजनकज्ञानजनकशब्द इति सूत्रार्थ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

इष्टसाधनता बोध्यते ऽनन्तरं च किमिष्टमित्याकाङ्क्षया अर्थवादप्रयोगात् तदिष्टेनैवार्थवादिकफलस्यान्वयात् । अथवा आर्थवादिकफलोपस्थितौ तत्कामपदादिकमध्याहार्य विधिवाक्येन बोधोपगमात् । एतल्लक्षणस्य स्फुटतया तदनुक्त्वैव विभजते ।

**स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः**[१] ॥ ६३ ॥

स्तुतिर्विध्यर्थप्रशंसावचनम् । यथा रात्रीर्जुहोतीत्यादिविध्यनन्तरं प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यादि । तथा क्वचिद् विधिकल्पकमपि भवति । यथा तरति शोकं तरति ब्रह्महत्यां योऽश्वमेधेन यजेतेत्यादि । निन्दावाक्यं द्विविधं विहितप्रवर्तकं निषिद्धनिवर्तकं चेति । तत्राद्यं यथा न चेदवेदीन्महती विनष्टिरित्यादि । अत्रात्मनो ज्ञानाभावे ऽतिशयविनाशश्रवणादात्मा द्रष्टव्य इत्यादिविधिविहितप्रवर्तकत्वम् । द्वितीयं यथा पापकारी पापो भवतीत्यादि । अथ य इह कपूयाचरणा अभ्यासो यत्ते कपूयां योनिमापद्येरन्नित्यादि च । कपूयाचरणाः कुत्सिताचरणाः । पुरुषविशेषनिष्ठमिथोविरुद्धकथनं परकृतिः । यथा हुत्वा वपामेवाग्रे ऽभिघारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रे ऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यमित्यभिदधतीति । प्रसिद्धाचरिततया कीर्तनं पुराकल्पः । यथा यज्ञेन यज्ञमयजन्त देवा इत्यादि । अयं च चतुर्धा विभागो विधिसहितवाक्या-

(१) स्तुतिर्निन्देत्यादिसूत्रं विधिविहितस्येत्यादिसूत्रं च न्यायसूचीनिबन्धे दृश्यते व्याख्याते चैते न्यायतत्त्वालोके परं तु सूत्रत्वेन नावधारिते । स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः । एषामुदाहरणानि भाष्ये इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

नाम् । तेन गुणवादभूतार्थवादयोरपि ग्रहणम् । तत्र गुणवादो गुणार्थवादः । यथा यजमानः प्रस्तर इत्यादि । तत्र यजमानस्यास्तरणकुशरूपप्रस्तरपदार्थान्वये बाधात् प्रस्तरपदस्य तत्सदृशे लक्षणा तत्प्रयोजनं च यथा प्रस्तरस्य यज्ञाङ्गत्वं तथा यजमानस्यापीति । एतदुक्तातिरिक्तो भूतार्थवादः । यथा सर्वं खल्विदं ब्रह्मेत्यादि ॥ ६३ ॥

अनुवादलक्षणमाह ।

**विधिविहितस्यानुवचनमनुवादः[१] ॥ ६४ ॥**

विधेर्विहितस्य चानुवचनं पुनर्वचनमनुवाद इत्यनुवादद्वैविध्यमुक्तम् । तत्राद्यं प्रागुदाहृतम् । द्वितीयं यथा दध्ना जुहोतीत्यादि । अत्र विहितमग्निहोत्रमनूद्य दधिकरणकत्वं विहितमिति ॥ ६४ ॥

अमेण शङ्कते ।

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः[२] ॥ ६५ ॥**

शब्दाभ्यासस्यैकार्थकशब्दस्यैकजातीयस्य वा योऽभ्यासः पुनःप्रयोगस्तेनोपपत्तेः समत्वादित्यर्थः । तथा चानुवादोऽपि निराकाङ्क्ष इति भावः ॥ ६५ ॥

भ्रमं निराकृत्य समाधत्ते ।

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः[३] ॥ ६६ ॥**

---

(१) पूर्वसूत्रटिप्पणी द्रष्टव्या । तात्पर्यटीकायां विधि-वादः इति सूत्रप्रतीकधारणरीतिर्दृश्यते ।

(२) नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः । कोऽस्य सूत्रस्यार्थ इति वार्त्तिकम् । एतत्सूत्रव्याख्यानान्ते इति सूत्रार्थ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(३) न्यायसूचीनिबन्धे दर्शनेन न्यायतत्त्वालोके व्याख्यातत्वेन तात्पर्यटीकायां शीघ्र-षः इति सूत्रप्रतीकधारणरीतिदर्शनेन चास्य सूत्रत्वमवसीयते ।

CC-0. In Public Domain. Digitized by eGangotri

अनुवादो निराकाङ्क्षपुनरुक्ताद्विशेषो भिन्न इत्यर्थः । शीघ्रतरगमनोपदेशवदभ्यासात् । तुल्यता च सप्रयोजनत्वादिना । तथाहि यथा लोके गम्यतामित्युक्त्वा गम्यतांगम्यतामिति शीघ्रगमनबोधार्थमनुवदति तथाऽधिकार्थलाभाय गुणविशेषविधानाय वात्रानुवाद इति भावः ॥ ६६ ॥

बाधकं निरस्य साधकमाह ।

**मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्**[1] ॥ ६७ ॥

तस्य वेदस्य प्रामाण्यमाप्तस्य भ्रमप्रमादशून्यस्य तत्कर्तुः प्रामाण्याद् यथार्थोपदेशकत्वाद् यथार्थज्ञानवत्त्वात् । प्रमाणपदस्य कर्तृव्युत्पत्त्या प्रमाश्रयपरत्वात् । तथा च वेदः प्रमाणमाप्तोक्तत्वादिति वेदत्वावच्छेदेन प्रामाण्यसाधने तत्सामानाधिकरण्येन दृष्टान्तमाह । मन्त्रायुर्वेदवच्चेति । मन्त्रो विषादिनाशक आयुर्वेदो रोगनिदानादिज्ञापकवेदभागविशेषः । चकारात् ज्योतिर्वेदादिः । तत्र प्रामाण्यग्रहः संवादेनेति । न च वेदस्याप्तोक्तत्वमेव नास्तीति वाच्यम् । वेदः पौरुषेयो वाक्यत्वादित्याद्यनुमानात् । वेदकर्तुरनाप्तत्वे महाजनपरिग्रहानुपपत्तेः । एतेन वेदार्थानामतीन्द्रियत्वात् तत्कर्तृत्वं जीवानां न सम्भवतीति वेदकर्तृत्वेन परमेश्वरसिद्धिर्वेदप्रामाण्ये सिध्येत । परमेश्वरोपासनादिकमपि निःश्रेयसहेतुरित्यादिकं सूचितम् । मन्त्रा-

(१) अनन्तरसूत्रावतरणपरं भाष्यं किं पुनः प्रतिषेधेतीति वेदप्रामाण्यं तु सूत्रोक्तम् मन्त्रा-त् । सूत्रं व्याचष्टे यथा मन्त्रायुर्वेदवाक्यानीतीति च तात्पर्यटीका । उदयनाचार्या अपि कुसुमाञ्जलौ चतुर्थस्तवके प्रद्योतमाप्तप्रामाण्यादितिसूत्रविरोध इत्युक्तवान् । वरदराजोऽप्यस्य सूत्रत्वमाह । वार्त्तिकादौ मन्त्रायुर्वेदप्रामाण्यवदिति पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

देरर्थवादाद्यन्तर्गतत्वान्न विभागव्याघातः। यद्वा मन्त्रब्राह्मणभेदेन वेदो द्विविधः। तत्र ब्राह्मणस्यैव विभागः प्राङ्निरुक्त इति । केचित्तु आप्तप्रामाण्यादित्यस्य महाजनपरिग्रहादित्यर्थमाहुः । अन्ये तु मन्त्रादिकर्तृजन्यत्वेन वेदस्य प्रामाण्यमनुमेयमिति समुदिततात्पर्यार्थ इत्याहुः ॥ ६७ ॥

इति समाप्तं शब्दविशेषवेदपरीक्षाप्रकरणम् ॥

इति न्यायसूत्रे द्वितीयाध्यायस्याद्यमाह्निकम् ॥

इति न्यायसूत्रविवरणे द्वितीयाध्यायीयसाङ्गप्रमाणपरीक्षणाद्याह्निकविवरणम् ॥



CC-0. In Public Domain. Digitized by eGangotri

ननु प्रमाणानां चतुर्धा विभागः कुतस्तन्न सङ्गच्छते ऐतिह्यादीनामपि प्रमाणान्तरत्वादित्याशङ्कते ।

**न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्**[१] ॥ १ ॥

प्रमाणानां न चतुष्ट्वं प्रमाणत्वं न प्रत्यक्षादिचतुष्टयमात्रवृत्ति न प्रत्यक्षाद्यन्यतमत्वव्याप्यमिति यावत् । हेतुमाह । ऐतिह्येत्यादि । ऐतिह्यमिह वृक्षे यक्षः प्रतिवसतीति लोकप्रसिद्धिः । तत्र मूलवक्त्रनिर्देशेनाप्तोक्तत्वानिश्चयेन तादृशनिश्चयस्य शाब्दबोधहेतुतया नास्य शब्दप्रमाणेऽन्तर्भावः । अर्थापत्तिरनुपपत्तिज्ञानम् । यथा जीवी देवदत्तो गृहे नास्तीतिज्ञानानन्तरं जीवित्वविशिष्टदेवदत्तस्य गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमितिज्ञानाद् बहिःसत्त्वसिद्धिः । अत्र च व्याप्त्यभावान्नानुमानान्तर्भावः । सम्भवो भूयःसहचरितत्वज्ञानम् । यथा सम्भवति ब्राह्मणे विद्या यथा वा खार्यां द्रोणाढकप्रस्थावगमः । अत्रापि व्याप्त्यनपेक्षितत्वेन नानुमानान्तर्भावः । अभावस्तु विरोध्यभावज्ञानं तच्च विरोध्यन्तरकल्पकम् । यथा नकुलाभावज्ञानं नकुलविरोधिसर्पग्राहकम् । यद्वा ज्ञातेन कारणाभावादिना कार्याभावादिज्ञानात् कारणाभावोऽपि मानान्तरम् । वस्तुतः प्रतियोग्यनुपलब्धिरेव ज्ञाताभावं ग्राहयतीति प्रतियोगिग्रहाभाव एवाभावग्राहकमानान्तरमिति ॥ १ ॥

(१) पूर्वपक्षसूत्रम् । न चतुष्ट्वमित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । सूत्रं तु संशयार्थम् । न चतुष्ट्वं निश्चेतुं शक्यं कस्मात् । ऐतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् परैरभ्युपगतादस्माकं संशयादिति सूत्रार्थ इति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

सिद्धान्तयति ।

**शब्द ऐतिह्यानर्थान्तरभावादनुमाने ऽर्थापत्तिसम्भवाभावानामर्थान्तरभावाच्चाप्रतिषेधः[१] ॥ २ ॥**

अप्रतिषेधः प्रमाणस्य न चतुष्ट्वव्याघातः । शब्दे ऐतिह्यस्यानर्थान्तरभावादर्थान्तरत्वाभावादन्तर्भावादिति यावत् । ऐतिह्ये वक्तुराप्तत्वेन सामान्यत आप्तोक्तत्वनिश्चयसम्भवादाप्तोक्तत्वनिश्चयस्य शाब्दाहेतुत्वाच्च । तत्र शाब्दबोधस्य यथार्थयोग्यताज्ञानाधीनत्वे प्रमात्वमिति । तत्करणं शब्द एवेति नैतिह्यं प्रमाणान्तरम् । अर्थापत्त्यादीनां चानुमानान्तर्गतत्वमाह । अनुमान इति । अनुमाने व्याप्तिज्ञाने सति अर्थापत्त्यादीनामर्थान्तरभावादर्थान्तरत्वात् प्रमाणत्वादिति यावत् । अन्तरपदस्य स्वरूपकीर्तनरूपत्वात् । तथा चानुमानान्तर्गतत्वमेवेति भावः । तथाहि बहिःसत्त्वं विना जीवित्वविशिष्टगृहासत्त्वमनुपपन्नमिति ज्ञानं हि बहिःसत्त्वाभावव्यापकीभूताभावप्रतियोगिजीवित्वविशिष्टगृहासत्त्वमिति व्यतिरेकव्याप्तिग्रहरूपं न तु बहिःसत्त्वाभावसमानाधिकरणाभावप्रतियोगित्वमात्रं तद्विषय इति । ब्राह्मणत्वादिकं विद्याविद्याव्याप्यतया गृहीतमेव तद्ग्राहकम् । अभावोऽपि तथा व्याप्यतया गृहीत एव निरुक्तस्थले ग्राहकः । न च प्रतियोग्यनुपलब्धिरज्ञातैवाभावग्राहिका कुतो व्याप्यत्वज्ञानापेक्षेति

(१) यद्यप्येतानि प्रमाणानि किं तर्हि अन्तर्भवन्तीति वक्तव्यम् । अन्तर्भावप्रदर्शनार्थं सूत्रम् । शब्द ऐतिह्येत्यादि वार्त्तिकम् । सिद्धान्तसूत्रम् । शब्द ऐतिह्येत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । सम्भवाभावानर्थान्तरभावादित्यन्यत्र पाठः ।



CC-0. In Public Domain. Digitized by eGangotri

वाच्यम् । इन्द्रियादिनाऽभावग्रह एवाज्ञाताया योग्यप्रतियोग्यनुपलब्धेः कारणत्वात् ज्ञातायास्तु तस्या अनुमानविधयैवाभावग्राहकत्वादिति ॥ २ ॥

तटस्थः शङ्कते ।

**अर्थापत्तिरप्रमाणमनैकान्तिकत्वात्**[1] ॥ ३ ॥

अर्थापत्तिरनुपपद्यमानज्ञानमप्रमाणमनुमानविधया स्वातन्त्र्येण वा न प्रमाणमनैकान्तिकत्वात् । क्वचिदुपपादकव्यभिचारिविषयकत्वादित्यर्थः । एवं च कुतोऽयं भवतां विचार इति भावः । व्यभिचारश्च मेघदर्शनेन यत्र वृष्टिज्ञानं तत्र वृष्टिं विनापि मेघसम्भवात् । यद्वा अर्थापत्तिर्न प्रमाणं न प्रमेत्यर्थः । अनैकान्तिकत्वाद् व्यभिचारिलिङ्गज्ञानजन्यत्वात् । प्रामाणे प्रमायां चार्थापत्तिशब्दप्रयोगात् । अर्थापत्तिप्रमात्वे व्याप्तिप्रमाजन्यत्वस्यैव प्रयोजकत्वेन वाच्यत्वादिति भावः ॥ ३ ॥

समाधत्ते ।

**अनर्थापत्तावर्थापत्त्यभिमानात्**[2] ॥ ४ ॥

अर्थापत्तेर्नानैकान्तिकत्वमिति शेष इति भाष्यम्[3] । अनर्थापत्तौ वृष्टिं विनाप्युपपद्यमाने मेघादौ । अर्थापत्त्यभिमानादर्थापत्तित्वाभिमानात् । वृष्टिं विनानुपपन्नत्वभ्र-

(१) अस्य सूत्रत्वे प्रमाणं नोपलभ्यत इति केचित् । तटस्थीयमाक्षेपसूत्रम् । अर्थापत्तिरप्रमाणमित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) यामपि भवानर्थापत्तिं मन्यते सापि नानैकान्तिकी । अनर्थापत्तावर्थापत्त्यभिमानादिति वार्त्तिकग्रन्थपङ्क्तिः । स्वमतेन दूषयित्वा सौत्रं दूषणमाह । यामपि भवानितीति तात्पर्यटीका । परिहारसूत्रम् । अनर्थापत्तावित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(३) भाष्ये तु नानैकान्तिकत्वमर्थापत्तेरित्यादिपूरणं दृश्यते ।

CC-0. In Public Domain. Digitized by eGangotri

मेणार्थापत्तिप्रमाणतया क्वचिदुपन्यासात् । अर्थापत्तेर्मेघं विनानुपपद्यमानस्य वृष्ट्यादेर्न मेघाद्यनैकान्तिकत्वम् । तथा च तत्रैवार्थापत्तिप्रमाणत्वं सम्भवति । अर्थापत्तिजनकस्य कस्यचिदप्रामाण्येन सर्वत्राप्रामाण्ये ऽनुमानस्याप्यप्रामाण्यं स्यादनुमितेरपि क्वचिद् व्यभिचारिलिङ्गकत्वादिति भावः । यद्वा अनर्थापत्तौ प्रमात्मकार्थापत्तिभिन्ने मेघज्ञानाधीनवृष्ट्यादिज्ञाने ऽर्थापत्त्यभिमानादर्थापत्तिप्रमात्वभ्रमेण तत्त्वेन तस्य केनचिदुपन्यासान्न सर्वस्या अर्थापत्तेरप्रामाण्यमिति शेषः । अथवा अनर्थापत्तौ अनर्थाद् व्यभिचारिलिङ्गाद् या आपत्तिरनर्थापत्तिस्तस्यां व्यभिचारिलिङ्गजन्यार्थापत्ताविति यावत् । अर्थापत्त्यभिमानाद् भ्रमत्वात् । तथा च न सर्वत्रार्थापत्तौ भ्रमत्वमिति भावः । इदमुपलक्षणम् । क्वचिद् व्यभिचारिलिङ्गजन्यस्यापि वास्तविकार्थविषयकार्थापत्तिरूपग्रहस्य प्रमात्वेन व्यभिचारिलिङ्गजन्यत्वस्याप्रमात्वाप्रयोजकत्वादिति ॥ ४ ॥

नन्वनुमानमपि न प्रमाणं क्वचिदनैकान्तिकत्वादित्यत आह ।

**प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात्**[1] ॥ ५ ॥

प्रतिषेधस्य त्वन्मतसिद्धस्य प्रामाण्यप्रतिषेधकस्यानैकान्तिकत्वादेवाप्रामाण्यं च स्यात् तस्यापि क्वचिदनैकान्तिकत्वात् । तथाहि चक्षुरादौ घटादिप्रमापके घटाद्यनैकान्तिकत्वम् ॥ ५ ॥

क्वचिदनैकान्तिकत्वस्यादोषत्वे ऽर्थापत्तेरपि प्रामाण्यमित्याह ।

(१) न्यायसूचीनिबन्धे दर्शनेन न्यायतत्त्वालोके व्याख्यातत्वेन तात्पर्यटीकायां प्रति-त् इति सूत्रप्रतीकधारणरीतिदर्शनेन चास्य सूत्रत्वमिति सम्भाव्यते ।

CC-0. In Public Domain. Digitized by eGangotri

## तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम्[१] ॥ ६ ॥

यद्वा यद्यनुमानस्य क्वचिदनैकान्तिकत्वादप्रामाण्यं तदा तेनैव हेतुना प्रामाण्यप्रतिषेधस्याप्यप्रामाण्यं तस्याप्यनुमानविधयैव प्रतिषेधसाधकत्वात्। क्वचिदनैकान्तिकत्वेऽप्यनुमानप्रामाण्येनानैकान्तिकत्वस्याप्रामाण्यासाधकत्वेऽर्थापत्तेरपि प्रामाण्यं क्वचिदबाधितार्थसाधकत्वस्य तौल्यादित्याह। तत्प्रामाण्ये वेति। केचित्तु अर्थापत्तिरप्रमाणं नानुमानात्मकप्रमाणमनैकान्तिकत्वाद् व्याप्तिविरहात्। तथाहि गृहे देवदत्ताभावस्यार्थापत्तिविधया देवदत्तनिष्ठबहिःसत्त्वकल्पकत्वं तत्र व्याप्तेर्विरहात्। एवं तत्र पक्षधर्मताज्ञानमपि नास्तीति। समाधत्ते। अनर्थापत्तावर्थापत्त्यभिमानात्। अर्थापत्तिभिन्ने देवदत्ताभावादावर्थापत्त्यभिमानाद् देवदत्तनिष्ठबहिःसत्त्वसाधकत्वाभिमानात्। भवतैतदुक्तमिति शेषः। अर्थापत्तिस्तु तत्र जीवित्वे सति गृहासत्त्वं तत्र व्याप्तिरस्ति तज्ज्ञानापेक्षाऽप्यस्तीति भावः। क्वचिद् व्यभिचारस्यानुमानान्तर्भावनिरासकत्वे भवदुक्तस्य प्रतिषेधस्यापि अनुमानानन्तर्भावप्रसङ्ग इत्याह। प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वादिति। प्रतिषेधस्यानुमानत्वेऽर्थापत्तेरपि तत्त्वमविवादमित्याह। तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यमिति सूत्रचतुष्टयार्थ इत्याहुः। न च जीवी देवदत्तः क्वचिदस्ति गृहे नास्तीत्यनयोर्विरोधग्रहः क्वचिदस्तीत्यस्य गृहान्यविषयकत्वं कल्पयतीति व्याप्तिग्रहनिरपेक्षस्य विरोधग्रहस्या-

(१) एतत्सूत्रव्याख्यानावसरे तदिदं सूत्रं व्याघातदेशनार्थं तदुक्तं भवता स्वविषयादन्यत्र वर्तमानमनैकान्तिकं भवति अर्थापत्तिश्चानैकान्तिकीति व्याहतमित्युक्तं वार्त्तिककृद्भिः।

CC-0. In Public Domain. Digitized by eGangotri

र्थापत्तिप्रमाणान्तरत्वमिति वाच्यम् । किञ्चिद्देशवृत्तित्वगृहावृत्तित्वयोर्विरोधाभावात् । क्वचिद् विरोधस्य विषयभेदव्यवस्थापकत्वमनुमानविधयैवेति बोध्यम् ॥ ६ ॥

नन्वभावो यदि प्रमाणसिद्धस्तदा तस्य प्रमाणत्वमनुमानविधयाऽतिरिक्तत्वेन वा वक्तव्यं स एव नास्ति अर्थक्रियाकारित्वाभावेन तुच्छत्वात् । घटो नास्तीत्यादिव्यवहारस्त्वधिकरणविषयत्वेनैवोपपत्तेः असतोऽपि भानस्वीकाराच्च । एवं घटाद्यनुपलम्भस्याभावादिरेव साध्यस्तस्य च मिथ्यात्वेन तत्साधकस्य कुतः प्रमाणत्वमिति चार्वाकः शङ्कते ।

**नाभावप्रामाण्यं प्रमेयासिद्धेः**[१] ॥ ७ ॥

अभावो न प्रमाणं प्रमेयासिद्धेः प्रमेयाभावात् प्रमेयासाधकत्वाद्वेत्यर्थः ॥ ७ ॥

सिद्धान्तयति ।

**लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः**[२] ॥ ८ ॥

लक्षितेषु इन्द्रियसन्निकृष्टेषु भूतलादिषु अलक्षितानामसन्निकृष्टानां घटादीनामलक्षणलक्षितत्वादनुपलब्ध्या तत्प्रमेयसिद्धिः अभावात्मकप्रमेयसिद्धिरित्यर्थः । इन्द्रियसंयोगरूपसन्निकर्षेण यथा भूतलादीनां प्रमेयत्वं तथाऽभा-

(१) न्यायसूचीनिबन्धे दर्शनेन न्यायतत्त्वालोके व्याख्यातत्वेन तात्पर्यटीकायां नाभा-द्धेः इति सूत्रप्रतीकधारणरीतिदर्शनेन चास्य सूत्रत्वं सम्भाव्यते ।

(२) तत्रानेकधाभिन्नप्रपञ्चस्योदाहरणार्थं सूत्रम् । लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिरिति वार्त्तिकम् । सिद्धान्तसूत्रम् । लक्षितेष्वित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । आदर्शपुस्तके तु लक्षणेष्वलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिरिति पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

वस्यापीन्द्रियसंयुक्तविशेषणतया प्रमेयत्वमन्यथा भूतलादि प्रमेयं न स्यात्। न च संवादिप्रवृत्तिजनकतया भूतलादिग्रहाणां प्रामाण्यमभावग्रहस्य च कुतः प्रमात्वमिति वाच्यम्। तस्यापि घटो नास्तीत्यादिव्यवहारजनकत्वाच्छिद्रेतरघटो जलाहरणसाधनमितिज्ञानेन छिद्रेतरत्वादिना घटादिकमवधार्य तत्प्रवृत्तेरभावविषयकत्वाच्च। एवमसतः सम्बन्धाभावेन ज्ञानविषयत्वानङ्गीकारादिति। केचित्तु तस्याभावप्रमाणस्य प्रमेयसिद्धिः। भावप्रधानो निर्देशः। किं तत् प्रमेयमित्यत्राह। लक्षितेषु घटादिषु अलक्षितानां तत्प्रमेयत्वसिद्धिः। कथं प्रमेयत्वम्। अलक्षणलक्षितत्वात्। यद्यप्यभावस्य गुणकर्मादिभिर्लक्षणं न सम्भवति तथाप्यलक्षणेनैव तल्लक्षितं भवति। अनीलमानयेत्युक्ते नीलाभावो हि इतरव्यावर्तकतया लक्षणमतोऽभावो नाप्रामाणिक इति भाव इत्याहुः॥ ८॥

बाधकमाशङ्क्य निराचष्टे।

**असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः**(१) **॥ ९॥**

असति भूतलादावविद्यमानेऽसन्निकृष्ट इति यावत्। अर्थे प्रतियोगिनि। नाभावोऽभावग्रहो न वक्तव्यो नेत्याकारकप्रत्यक्षानङ्गीकारात्। प्रतियोगिसत्त्वे च तत्र भूतलादौ नास्त्यभावो विरोधादित्यलीकघटाभाव एव प्रतीतिविषय इति चेन्नान्यलक्षणोपपत्तेः लौकिकसन्निकर्षातिरिक्तेन ज्ञानसन्निकर्षेण तत्रास्थितस्यापि घटादेरभावे

(१) एतत्सूत्रव्याख्यानावसरे अयथार्थोऽयमुपालम्भ इत्यत उक्तार्थसूत्रम्। नान्यलक्षणोपपत्तेरितीत्युक्तं वार्त्तिककृद्भिः। आक्षेपसमाधानयोः सूत्रम्। असत्यर्थे नाभाव इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

भानोपपत्तेरित्यर्थः । यद्वा असति प्रतियोगिनि नाभावः । वक्तुं शक्य इति शेषः । सति च प्रतियोगिनि कथं तदभाव इति चेन्नान्यत्र लक्षणेन सत्त्वेनार्थात् प्रतियोगिन उपपत्तेरभावोपपत्तेरित्यर्थः ॥ ९ ॥

नन्वभावो यद्यपि प्रामाणिकस्तथापि तस्य न हेतुत्वमित्याशङ्कते ।

तत्सिद्धेरलक्षितेष्वहेतुः[1] ॥ १० ॥

तत्सिद्धेः तस्याभावस्य सिद्धावपि अलक्षितेषु गुणादिरूपव्यावर्तकधर्मशून्येष्वभावेष्वहेतुत्वमिति भावप्रधाननिर्देशादिति । यद्वा अलक्षितेषु अनुपलब्धेषु प्रतियोगिषु तत्सिद्धेरभावसिद्धेरभावोऽहेतुर्न हेतुरित्यर्थः । प्रतियोगिनिरपेक्षेणाभावत्वेनान्वयव्यतिरेकानुविधानाभावेन तेन कारणत्वाग्रहादभावत्वावच्छिन्नस्य केवलान्वयित्वादिति भावः । यद्वा अलक्षितेषु प्रतियोगिशून्येषु तत्सिद्धेरभावसिद्धेः स न हेतुरित्यर्थः । तथा च प्रतियोगिनः सामानाधिकरण्यसम्बन्धेन व्यावर्तकत्वाभावात् । केवलाभावत्वेन च न हेतुतासम्भव इति भावः ॥ १० ॥

समाधत्ते ।

न लक्षणावस्थितापेक्षसिद्धेः[2] ॥ ११ ॥

नाभावस्याहेतुत्वम् । लक्षणस्य व्यावर्तकस्य प्रतियोगिनो यदवस्थितमवस्थानं ज्ञानमिति यावत् । तदपेक्षा या

(१) असत्यर्थे नाभावस्तत्सिद्धेरलक्षितेष्वहेतुरित्युभे छलसूत्रे इति प्रागुत्पत्तेरभावोपपत्तेरितिसूत्रव्याख्यावसरे वार्त्तिकम् । आद्यपक्षसूत्रम । तत्सिद्धेरित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । तत्र च तत्सिद्धेरलक्षिते अहेतुरिति सूत्रपाठः ।

(२) अत्रोक्तं नापरिज्ञानादिति । अस्य चार्थस्य ज्ञापनार्थं सूत्रम् । न लक्षणावस्थितापेक्षसिद्धेरिति वार्त्तिकम् । समाधिसूत्रम् । न लक्षणेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

सिद्धिस्तत इत्यर्थः । यद्वा तदपेक्षसिद्धेरभावस्य नाहेतुत्वमित्यर्थः । तथा चाभावाधिकरणे प्रतियोग्यनुपलम्भापेक्षणे ऽपि सामान्यतः प्रतियोगिज्ञानं विना अभावप्रत्यक्षानुपगमात् प्रतियोग्युपरक्ताभावत्वेनान्वयव्यतिरेकानुविधानग्रहेण तेन नियतपूर्ववृत्तित्वरूपहेतुत्वे बाधकाभावादन्यथा भावस्यापि हेतुत्वं न स्यादिति भावः । यद्वा लक्षणस्य व्यावर्तकस्य प्रतियोगिनो यदवस्थानं सम्बन्धः प्रतियोग्यनुयोगिभावरूपस्तदपेक्षसिद्धेरित्यर्थः । तथा च प्रतियोगितासम्बन्धेन प्रतियोगिविशिष्टाभावत्वेनैव हेतुतासम्भव इति भावः ॥ ११ ॥

प्रागभावस्य प्रत्यक्षसिद्धत्वं दर्शयति ।

**प्रागुत्पत्तेरभावोपपत्तेश्च**(१) ॥ १२ ॥

प्रतियोगिन उत्पत्तेः प्रागभावोपपत्तेः प्रत्यक्षसिद्धत्वात् । प्रमेयसिद्धिरिति मण्डूकप्लुत्या पूर्वेणान्वयः । घटो भविष्यतीत्यादिप्रत्यक्षस्य प्रागभावविषयत्वे सर्वसम्मतत्वादिति भावः । चकारेण घटो ध्वस्तो घटो नेत्यादिप्रत्ययेन ध्वंसभेदावपि सिद्धाविति समुच्चीयते ॥ १२ ॥

समाप्तं प्रमाणचतुष्टयपरीक्षाप्रकरणम् ॥

ननु वेदस्य कुतः पौरुषेयत्वं येन तत्प्रामाण्यं स्याद् वर्णानां नित्यत्वेन तत्समुदायरूपवेदस्यापि नित्यत्वात् । न चापौरुषेयत्वे ऽपि नित्यनिर्दोषत्वेन महाजनपरिग्रहेण च वेदस्य प्रामाण्यं ग्राह्यमिति तथापि महाजनपरिग्रहस्यान्धपरम्परान्यायप्रसङ्गात् सर्वार्थदर्शी कश्चिदीश्वरो वर्तते तेन सर्वमतीन्द्रियमप्यर्थमाकलय्य वेदकरणादिति

(१) एतत्सूत्रव्याख्यानान्ते इति सूत्रार्थ इत्युक्तं न्यायतत्त्वालोके वाचस्पतिमिश्रैः ।

CC-0. In Public Domain. Digitized by eGangotri

तत्तात्पर्यमादाय वेदस्य प्रामाण्यमिति शब्दानित्यत्वं व्यवस्थापयति ।

**आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च**[(१)] ॥ १३ ॥

शब्दोऽनित्य इत्यादि । आदिमत्त्वात् कादचित्कत्वात् । कण्ठताल्वाद्यभिघातव्यङ्ग्यत्वेनैव कादाचित्कत्वव्यवहारोपपत्तेर्न वास्तविकं तदित्यत आह । ऐन्द्रियकत्वादिति । यद्वा आदिमत्त्वात् सकारणकत्वात् । ननु शब्दो न सकारणकः कण्ठताल्वाद्यभिघातादेर्व्यञ्जकत्वेनाप्युपपत्तेरित्यत आह । ऐन्द्रियकत्वादिति । बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः । आत्मादिवारणाय बहिःपदम् । मनसोऽनिन्द्रियत्वमते तन्नोपादेयमिति । हेत्वन्तरमाह । कृतकवदुपचारात् । कृतको जन्यो घटादिस्तद्वत् प्रतीतेरित्यर्थः । तथा चोत्पन्नो घट इत्यादिवदुत्पन्नो गकार इतिप्रतीतेः । कृतकवदिति दृष्टान्त उत्पन्नत्वेन प्रतीतिरेव हेतुरिति । यद्वा घटादौ यथा ह्रस्वदीर्घादिभेदस्तथा शब्दे तारमन्दादिभेद इति स च निमित्तवायुसंयोगवैलक्षण्येनेति न शब्दस्य नित्यत्वसम्भव इति भावः ॥ १३ ॥

व्यभिचारमाशङ्कते ।

**न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च**[(२)] ॥ १४ ॥

(१) आदिमत्त्वादादिः योनिः कारणमिति कारणवत्त्वादनित्य इति सूत्रार्थं इति कृतकवदुपचारादित्यनेन सूत्रेणेति च वार्त्तिकम् । सिद्धान्तसूत्रम् । आदिमत्त्वादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । कृतकवदुपचारादितिसूत्रावयवस्येत्यादि तात्पर्यपरिशुद्धावुदयनाचार्याः ।

(२) सूत्रस्य पूर्वहेतुनामनैकान्तिकत्वज्ञापनमर्थ इत्येतत्सूत्रव्याख्याने वार्त्तिकम् । व्यभिचारप्रदर्शनाय सूत्रम् । न घटाभावेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

नोक्ता हेतवोऽनित्यत्वसाधकाः। घटाभावो घटध्वंसस्तस्य नित्यत्वादविनाशित्वात् सामान्ये घटत्वादिजातौ नित्यत्वाद् ध्वंसप्रागभावाप्रतियोगित्वात्। तथा च ध्वंसे आदिमत्त्वस्य सामान्ये ऐन्द्रियकत्वस्य व्यभिचारादिति पर्यवसितम्। नित्येष्वाकाशादिष्वनित्यवदुपचारादुत्पन्नत्वेन प्रतीतेः। प्रतीतिश्च आकाशमुत्पन्नमहं सुखी जात इत्यादिरूपा। यद्वा घटाकाशगृहाकाशयोर्न्यूनाधिकत्वेनात्मनश्च स्थूलत्वकृशत्वादिना प्रतीतेः। तथा च कृतकवदुपचारस्याकाशादौ व्यभिचारादिति पर्यवसितम् ॥ १४ ॥

आद्ये व्यभिचारमुद्धरति।

**तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः(१) ॥ १५ ॥**

तत्त्वस्य मुख्यनित्यस्य भाक्तस्य गौणनित्यस्य च नानात्वस्य भेदस्य विभागात् सत्त्वान्न व्यभिचारः। आदिमत्त्वस्येत्यादिः। तथाहि ध्वंसेऽविनाशित्वरूपं गौणमेव नित्यत्वम्। ध्वंसप्रागभावाप्रतियोगित्वरूपमुख्यनित्यत्वाभावः साध्यते स च ध्वंसेऽप्यस्तीति न व्यभिचार इति भावः ॥ १५ ॥

द्वितीये व्यभिचारमुद्धरति।

**सन्तानानुमानविशेषणात्(२) ॥ १६ ॥**

---

(१) एतत्सूत्रव्याख्यानावसरे इति सूत्रार्थ इत्युक्तं न्यायतत्त्वालोके वाचस्पतिमिश्रैः। कारणद्रव्यस्य प्रदेशशब्देनाभिधानादित्यादिसूत्रस्यवार्त्तिकव्याख्यानावसरे तात्पर्यटीकाकृता तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः सन्तानानुमानविशेषणात् कारणद्रव्यस्य प्रदेशशब्देनाभिधानादिति सूत्रैरेवानैकान्तिकत्वपरिहारादित्युक्तम्।

(२) पूर्वसूत्रटिप्पणी द्रष्टव्या। यद्यप्यस्मिन्नर्थे सन्तानानुमानविशेषणादिति सूत्रमस्त्येवेति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः।

CC-0. In Public Domain. Digitized by eGangotri

सन्तानेन सामान्येनानुमानस्यैन्द्रियकत्वरूपहेतोर्विशेषणान्न तस्य व्यभिचार इत्यर्थः । सन्तन्यन्ते ऽनेकपदार्थाः सङ्गृह्यन्ते येनेतिव्युत्पत्त्या सन्तानशब्देन सामान्यलाभात् । तथा च सामान्यवत्त्वे सत्यैन्द्रियकत्वं हेतुरिति न तद् व्यभिचारीति भावः ॥ १६ ॥

तृतीये व्यभिचारमुद्धरति ।

**कारणद्रव्यस्य विशेषशब्देनाभिधानात्**(१)

॥ १७ ॥

कारणद्रव्यस्याकाशादि? विशेषशब्देनाभिधानात् । न च विशेषस्तत्रास्ति । अभिधानं च गौणमेव । आकाशमुत्पन्नमित्यत्रोत्पन्नमभिव्यक्तमित्यर्थः । अहं सुखी जात इत्यादौ सुखाद्युत्पत्तिरेव विषयः । घटाद्युपाधेर्न्यूनाधिकभावेनैवाकाशादेस्तथा व्यपदेशः । शरीरधर्मस्थूलत्वादिकमादायैवात्मनस्तथा तस्य तादृशोपाधिविरहात् तादृशप्रत्ययस्यौपचारिकत्वमिति भावः ॥ १७ ॥

उत्पन्नो गकार इत्यादिप्रत्ययस्याभिव्यक्तिविषयकत्वं न तूत्पत्तिविषयकत्वं सोऽयं गकार इत्यादिप्रत्यभिज्ञया स्थैर्यसिद्धेः । वर्णानां बहुत्वकल्पने तद्ध्वंसप्राग-

---

(१) अत्र कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इतीत्यन्तः सूत्रपाठः क्वचिद् दृश्यते । कारणद्रव्यस्य प्रदेशशब्देनाभिधानादिति सूत्रमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धिलेखदर्शनेन एतत्सूत्रस्यवार्त्तिकव्याख्यानावसरे तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः सन्तानानुमानविशेषणात् कारणद्रव्यस्य प्रदेशशब्देनाभिधानादितिसूत्रैरित्येवंतात्पर्यटीकालेखदर्शनेन न्यायसूचीनिबन्धदर्शनेन नित्येष्वप्यव्यभिचार इति प्रकृतमिति पूर्वसूत्रप्रतीकानुवृत्त्या भाष्यकारेणैव व्याख्यातत्वादिति न्यायवार्त्तिकतात्पर्यपरिशुद्धिलेखदर्शनेन च नित्येष्वप्यव्यभिचार इतीत्यन्तो न सूत्रान्तर्गत इति ज्ञायते । परं तु प्रदेशशब्देनेति पाठस्तु यथेक्तग्रन्थेषु सर्वत्र दृश्यते । एतद्व्याख्यानान्ते इति सूत्रार्थ इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः ।

CC-0. In Public Domain. Digitized by eGangotri

भावकल्पने च गौरवाच्च । तारत्वमन्दत्वादयश्च निमित्तवायुगता एव शब्दे उपचर्यन्ते । एवमादिमत्त्वमैन्द्रियकत्वं चाप्रयोजकमित्यतो नित्यत्वबाधकतर्कमाह ।

**प्रागुच्चारणादनुपलम्भादावरणाद्यनुपलब्धेश्च**[1] ॥ १८ ॥

वर्णा न नित्या उच्चारणात् कण्ठताल्वाद्यभिघातात् प्रागनुपलम्भात् । तथा च शब्दो यदि नित्यः स्यात् तदोच्चारणात् प्रागपि सन्निकृष्टतया योग्यतया चोपलभ्येतेति तर्क एव नित्यत्वबाधक इत्यर्थः । ननु न योग्यतासहितसन्निकृष्टतामात्रमुपलम्भापादकमपि तु बाधाभावसहितमित्यत आह । आवरणाद्यनुपलब्धेः । विरोधिनां बाधादिनिश्चयानां दोषविशेषाणां चानुपलब्धेरनुपलब्ध्याऽभावनिर्णयात् । तथा च बाधाभावादिसहितसन्निकृष्टतापि तदानीं वर्तत इति भावः । न च तदानीं शब्दो देशान्तरगतोऽमूर्त्तस्य गमनासम्भवात् । न च तदानीमतीन्द्रियो दोषः कश्चिद्वर्तते यत्प्रतिबन्धेन न शब्दग्रह इति वाच्यम् । तादृशदोषतद्ध्वंसादिकल्पनमपेक्ष्य शब्दानित्यत्वकल्पनस्यैवोचितत्वात् । न च कण्ठताल्वाद्यभिघातादिरेव शब्दव्यञ्जकस्तद्विरहादेव न तत्पूर्वं तद्ग्रह इति वाच्यम् । तद्ग्रहत्वमपेक्ष्य तत्त्वस्यैव कण्ठताल्वाद्यभिघातादिकार्यतावच्छेदकत्वे लाघवादन्यथा घटादयोऽपि नित्याः स्युस्तद्धेतूनां तद्व्यञ्जकत्वेनैवोपपत्तेः । मन्दत्वता-

(१) आदर्शपुस्तके चकाररहितः पाठः । प्रागुच्चारणादनुपलब्धेरित्यन्यत्र पाठः । अस्तद्व्याख्यानावसरे सतोऽनुपलब्धिकारणाभावे कदाचिदनुपलब्धेरनित्यः शब्द इति सूत्रार्थ इति वार्त्तिकम् । शब्दानित्यत्वे प्रत्यक्षप्रमाणप्रदर्शनाय सूत्रम् । प्रागुच्चारणादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । प्रागुच्चारणादनुपलब्धेरावरणानुपलब्धेश्चेत्यत्र सूत्र इति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

रत्वादीनां वायुसंयोगविशेषगतत्वे शब्दे तद्भ्रमजनकदोषादिकल्पने गौरवं च । सोऽयं गकार इत्यादिप्रत्यभिज्ञा च सेयं विद्येत्यादिवत् तत्साजात्यमवलम्बत इति दिक् ॥ १८ ॥

भ्रान्तः शङ्कते ।

**तदनुपलब्धेरनुपलम्भादावरणोपलब्धिः[1] ॥ १९ ॥**

तस्यावरणस्यानुपलब्धेरनुपलम्भात् तदावरणानुपलब्धेरभावस्तदावरणोपलब्धिः । सिद्धेति शेषः ॥ १९ ॥

आवरणानुपलब्धेरनुपलम्भो यदि नावरणानुपलब्धेरभावस्यावरणोपलब्धेः साधकस्तदावरणानुपलब्धिरप्यावरणाभावसाधिका न स्यादित्याह ।

**अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात्[2] ॥ २० ॥**

शङ्कां निरस्यति ।

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः[3] ॥२१॥**

आवरणानुपलब्धेरनुपलम्भादावरणोपलब्धिरिति जात्युत्तरमहेतुर्न मन्मतप्रतिषेधसाधनम् । अनुपलब्धेरावर-

(१) आवरणोपपत्तिरित्यन्यत्र पाठः । अत्र जातिवादिनः सूत्रद्वयम् । तदनुपलब्धेरनुपलम्भादावरणोपपत्तिरिति तात्पर्यटीका ।

(२) द्वितीयं सूत्रम् । अनुपलम्भादित्यादि तात्पर्यटीका । अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भादित्यस्य सूत्रस्यानुपलब्धेरनैकान्तिकत्वमर्थ इति वार्त्तिकम् । शिष्यव्युत्पत्तये जात्या पूर्वपक्षसूत्रे इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(३) अतथाजातीयेन प्रत्यवस्थानादनुत्तरमिति सूत्रार्थ इत्येतत्सूत्रव्याख्यावसरे वार्त्तिकम् । अस्योत्तरसूत्रम् । अनु-तुः इति तात्पर्यटीका । सिद्धान्तसूत्रम् । अनुपलम्भात्मकत्वादित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

णानुपलब्धेरनुपलम्भात्मकत्वादुपलम्भाभावात्मकत्वात् । तथा चोपलम्भस्यासत्त्वेनाग्रहे उपलम्भाभावस्यैव सुग्रहात् तदनुपलब्धिरसिद्धा उपलम्भाभावस्याग्रहे ऽपि तस्योपलम्भासाधकत्वमुपलम्भस्य भावत्वाद् भावभिन्नस्यैव प्रतियोग्यनुपलब्धिग्राह्यत्वादिति भावः ॥ २१ ॥

सत्प्रतिपक्षमाशङ्कते ।

**अस्पर्शत्वात्**(१) ॥ २२ ॥

शब्दो नित्योऽस्पर्शत्वाद् गगनवदिति भावः ॥ २२ ॥

उत्तरयति ।

**न कर्मानित्यत्वात्**(२) ॥ २३ ॥

अस्पर्शत्वं न नित्यत्वसाधकं कर्मणि व्यभिचारादिति भावः ॥ २३ ॥

ननु नित्यद्रव्यमात्रवृत्तित्वमेवात्रास्पर्शत्वमिति घटादिक्रियायां न व्यभिचार इत्यत आह ।

**नाणुनित्यत्वात्**(३) ॥ २४ ॥

नित्यद्रव्यमात्रवृत्तित्वमपि न नित्यत्वसाधकमणोर्नित्यत्वात् । तथा चाणुक्रियायां व्यभिचार इति भावः ॥ २४ ॥

शङ्कते ।

**सम्प्रदानत्वात्**(४) ॥ २५ ॥

गुरुणा शिष्याय प्रदेयत्वाच्छब्दस्य प्राक्सत्त्वं विना दानासम्भवात् प्राक्सत्त्वं सिद्धमनन्तरं च तावत् कालं

(१) पूर्वपक्षसूत्रम् । अस्पर्शत्वादिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) तस्य व्यभिचारप्रदर्शनार्थं सूत्रम् । न कर्मानित्यत्वादिति वार्त्तिकम् । सिद्धान्तसूत्रम् । न कर्मानित्यत्वादिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(३) इदं तु न्यायतत्त्वालोके वार्त्तिके च न धृतम् । न्यायसूचीनिबन्धे वर्तते ।

(४) सम्प्रदानादिति पाठोऽन्यत्र सर्वत्र । नित्यत्वानुमानाय सूत्रम् । सम्प्रदानादिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

स्थिरं चैनं कः पश्चान्नाशयिष्यतीतिन्यायान्नित्यत्वसमर्थायातमिति ॥ २५ ॥

उत्तरयति ।

तदन्तरालानुपलब्धेरहेतुः[1] ॥ २६ ॥

अहेतुः सम्प्रदानत्वं न नित्यत्वसाधकम् । गुरुः स्वगुरोरुच्चरितं शब्दं शृणोति स्वशिष्यायोच्चार्य ददाति तदुच्चारणकालयोरन्तरालकालेऽनुपलब्धेरनुपलब्ध्या शब्दाभावनिश्चयात् । तथा चासिद्धस्य कुतो दानमेवेति भावः ॥२६॥

पुनराशङ्कते ।

अध्यापनादप्रतिषेधः[2] ॥ २७ ॥

तथापि शब्दस्य न नित्यत्वप्रतिषेधोऽध्यापनात् । यद्यन्तराले शब्दो नास्ति तदा कथमध्यापनं स्यादसिद्धस्य ज्ञापनासम्भवात् । अनुपलब्धिस्तु कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावेनापि सम्भवतीति भावः । आचार्यास्तु सूत्रद्वयमेवं व्याचक्षते । विभक्तिव्यत्यासादहेतोस्तदन्तरालानुपलब्धिस्तथा च हेतोः स्वत्वस्याभावादेवान्तरालस्य स्वत्वध्वंसस्यानुपलब्धिरतो दानमेवासिद्धमिति भावः । प्रतिषेधो न युक्तो न हि दानं समभिप्रेतं किं त्वध्यापनं तच्च विद्यमानस्य शब्दस्यैवेति भावः ॥ २७ ॥

---

(१) अवतिष्ठमानो हि दातृप्रतिग्रहीत्रोरन्तराले उपलभ्येतेति इति सूत्रार्थाविरोध इति वार्त्तिकम् । सिद्धान्तसूत्रम् । तदन्तरालेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । अत्र परिहारसूत्रम् । तदन्तरालानुपलब्धेरहेतुरिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

(२) पूर्वपक्षसूत्रम् । अध्यापनादप्रतिषेध इति न्यायतत्त्वालोके वाचस्पतिमिश्राः । अत्र परिहारसूत्रम् । तदन्तरालानुपलब्धेरहेतुरिति बाधोद्भावनम् । न चैतद् योग्यानुपलब्धौ चावस्थानमन्तराले बाधितमित्यर्थ इति स्वरसतः प्रतिभाति उत्तरसूत्रावतारविरोधात् अध्यापनादप्रतिषेध इति हि तदिति न्यायवार्त्तिकतात्पर्यपरिशुद्धौ ।

CC-0. In Public Domain. Digitized by eGangotri

सिद्धान्तयति ।

**उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः[१] ॥ २८ ॥**

उभयोः पक्षयोर्नित्यत्वानित्यत्वयोरन्यतरस्याध्यापनान्न प्रतिषेधः । तथा चाध्यापनं यथा न नित्यत्वप्रतिषेधसाधकं तथा नानित्यत्वप्रतिषेधसाधकमित्यर्थः । तथाहि अध्यापनं शिष्योच्चारणानुकूलोच्चारणं शिष्यबोधानुकूलोच्चारणं वा उच्चारणं च शब्दस्य नित्यत्वपक्षे तद्व्यञ्जककण्ठताल्वाद्यभिघातोऽनित्यत्वपक्षे च शब्दोत्पत्त्यनुकूलकण्ठताल्वाद्यभिघातः तदनुकूलप्रयत्नो वेत्युभयथापि न दोषः । न हि नित्यत्वपक्षे ऽपि अध्यापनस्य दानत्वं सम्भवति तस्य स्वस्वत्वध्वंसावच्छिन्नपरस्वत्वोत्पादनरूपत्वात् । शब्दे च नियामकाभावात् स्वत्वासम्भवः अविशेषेण शब्दमात्रे सर्वेषां तुल्यस्वत्वापत्तेश्च । न हि सर्वसाधारणमेकस्मै दातुमेक इति । एकमध्याप्यापराध्यापनानुपपत्तिश्च । शिष्याय ददातीतिवच्छिष्यायाध्यापयतीतिप्रयोगापत्तिश्च । नन्वध्यापनं शास्त्रज्ञापनं शास्त्रं च परमेश्वरोपदिष्टवेदात्मकवर्णसमूहो व्यासादिप्रणीतभारतादिरूपवर्णसमूहश्च तादृशस्य च ज्ञापनं श्रावणप्रत्यक्षजननं प्रत्यक्षं च विषयासत्त्वे न भवतीति परमेश्वरादिप्रणीतशब्दानां नित्यत्वमित्यर्थायातं शब्दमात्रस्य नित्यत्वमिति चेत् । न । अध्यापनस्य निरुक्तोच्चारणरूपत्वेनैवोपपत्तेर्वेदमध्यापयतीत्यादौ परमेश्वरप्रणीतजातीयोच्चार-

---

(१) केचिदाधुनिकनैयायिकम्मन्या अस्य सूत्रत्वं न मन्यन्ते । सिद्धान्तसूत्रम् । उभयोः पक्षयोरित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

णानुकूलकृतिमानित्यादिबोधस्वीकाराच्च । अन्यथा नृत्या-ध्यापनादिप्रयोगेण नृत्यस्यापि नित्यत्वापत्तिरिति भावः ॥ २८ ॥

पूर्वपक्षान्तरम् ।

अभ्यासात्[1] ॥ २९ ॥

एककर्मकैकजातीयक्रियायाः पुनःपुनः करणमभ्यासः । तथा च यथा दशकृत्वो रूपं पश्यति तथा शतकृत्वोऽनुवाकमधीत इत्यभ्यासाच्छब्दस्य स्थैर्यं सिध्यतीति ॥ २९ ॥

सिद्धान्तमाह ।

नान्यत्वे ऽप्यभ्यासस्योपचारात्[2] ॥ ३० ॥

अभ्यासो न शब्दस्य स्थैर्यसाधकोऽन्यत्वे ऽपि अभ्यासकर्मणो भेदे ऽपि अभ्यासस्य उपचारात् सम्भवात् । एकजातीयस्यैकजातीयक्रियायाः पुनः करणमेवाभ्यासो द्वियागं करोतीतिप्रयोगादिति भावः ॥ ३० ॥

तटस्थः शङ्कते ।

अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः[3] ॥ ३१ ॥

अन्यस्माद् यदन्यदुच्यते तदनन्यत् स्वाभिन्नं कुतः अनन्यत्वात् स्वभिन्नभिन्नत्वात् । स्वभिन्नभेदस्य स्वाभेदरूपत्वादिति भावः । इति रीत्या सर्वत्रैव स्वाभेदस्य वर्तमानतयाऽन्यत्वाभावः सर्वत्रैवान्यत्वाभावः । अन्यत्वस्य

(१) एतद्व्याख्यानावसरे इति सूत्रार्थं इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) सिद्धान्तसूत्रम् । नान्यत्वे ऽप्यभ्यासोपपत्तेरिति न्यायतत्त्वालोके वाचस्पतिमिश्राः । तत्र चायमेव सूत्रपाठः ।

(३) एतत्सूत्रव्याख्यानान्ते इति सूत्रार्थं इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।



CC-0. In Public Domain. Digitized by eGangotri

भेदरूपस्याभेदेन विरोधात्। एवं चान्यत्वस्याप्रसिद्ध्या नान्यत्वे ऽप्यभ्यासस्योपचारादिति सूत्रमसङ्गतमिति भावः। यद्वा यद् वस्त्वन्यस्मादन्यदुच्यते तत् स्वस्मादनन्यदभिन्नं तत् कथमन्यद् भेदाभेदयोर्विरोधादिति भावः। स्वाभेदस्यावश्यकत्वादिति हृदयम् ॥ ३१ ॥

समाधत्ते।

**तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः**[1] **॥ ३२ ॥**

तदभावे ऽन्यत्वस्याभावे। अनन्यता नास्ति अनन्यतापि न स्यात्। तयोर्मध्ये इतरस्यैकतरस्यानन्यत्वस्य इतरापेक्षसिद्धेः इतरत्वस्य ज्ञानापेक्षा सिद्धिर्यस्य तादृशत्वादित्यर्थः ॥ ३२ ॥

शङ्कते।

**विनाशकारणानुपलब्धेः**[2] **॥ ३३ ॥**

विनाशकारणानुपलब्ध्या विनाशकारणाभावेन विनाशाभावसिद्धेरविनाशित्वेन हेतुना शब्दे नित्यत्वं साधनीयमिति भावः ॥ ३३ ॥

अनुपलब्धिरप्रत्यक्षमज्ञानं वा तत्राद्ये प्रतिबन्धिमाह।

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः**[3] **॥ ३४ ॥**

---

(१) परिहारसूत्रम्। तदभाव इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः। एतत्सूत्रव्याख्यानावसरे सूत्रस्यार्थोऽविरोध इति वार्त्तिकम्। तस्य परिहारसूत्रम्। तद-द्धेः इति तात्पर्यटीका।

(२) पूर्वपक्षसूत्रम्। विनाशकारणानुपलब्धेरिति न्यायतत्त्वालोके वाचस्पतिमिश्राः। न्यायसूचीनिबन्धे चकारयुक्तः पाठः।

(३) अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्ग इति। शेषं भाष्य इति वार्त्तिकम्। सिद्धान्तसूत्रम्। अश्रवणेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

यदि विनाशकारणाप्रत्यक्षेण विनाशकारणाभावस्तदा शब्दस्याप्यन्यदा अश्रवणेन शब्दस्याभावप्रसङ्ग इत्यायातं शब्दानित्यत्वं साधनीयमिति भावः ॥ ३४ ॥

द्वितीये त्वाह ।

**उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः**(१) ॥ ३५ ॥

अनुमानादिनोपलभ्यमाने विनाशकारणानुपलब्धेरसत्त्वादभावात् अनपदेशो विनाशकारणाभावेन शब्दस्य विनाशाभावापदेशो नेत्यर्थः । जन्यभावत्वेन शब्दस्य विनाशित्वं कल्पयित्वा उत्पत्तिमत्त्वेन तद्विनाशस्य सकारणकत्वकल्पनादिति भावः ॥ ३५ ॥

विनाशकारणोपलब्धिं दर्शयति ।

**पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः**(२) ॥ ३६ ॥

शब्दायमानमुरजादौ पाणिरूपशब्दाभावनिमित्तस्य प्रश्लेषात् संयोगाच्छब्दाभावे उपलभ्यमाने शब्दाभावकारणस्य नानुपलब्धिरिति यथाश्रुतार्थ इति केचिदाहुः । अन्ये तु पाणिरूपनिमित्तस्य प्रश्लेषः कार्यत्वरूपसम्बन्धो यत्र स शब्दोऽर्थादुत्तरशब्दः । तेन शब्दाभावे शब्दध्वंसे सति न विनाशकारणानुपलब्धिरित्यर्थ इत्याहुः ॥ ३६ ॥

---

(१) एतत्सूत्रव्याख्यानान्ते इति सूत्रार्थ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः । उक्तार्थं सूत्रमिति वार्त्तिकम् । नन्वनुपलम्भात् संस्कारो नास्त्येवेत्यत्र सूत्रम् पाणिनिमित्तेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

[1]ननु पाणिमुरजादिसंयोगान्मुरजादौ प्रथमशब्दो जन्यते उत्तरशब्दस्त्वाकाश इति वैयधिकरण्यात् कथमुत्तरशब्दस्य नाशकत्वमित्यत आह ।

**अस्पर्शत्वादप्रतिषेधः[2] ॥ ३७ ॥**

अस्पर्शत्वादस्पर्शधर्मत्वात् । शब्दस्येति शेषः । तथा च प्रथमशब्दोऽपि गगन एवेति न वैयधिकरण्यम् । अस्पर्शत्वे प्रमाणं च शब्दो न स्पर्शवद्विशेषगुणोऽग्निसंयोगासमवायिकारणकत्वाभाववदकारणगुणपूर्वककार्यत्वादित्यादि ॥ ३७ ॥

एतदेव सम्पादयति ।

**विभक्त्यन्तरोपपत्तेश्च समासे[3] ॥ ३८ ॥**

समासे सम्यक्स्थितौ । आश्रयस्येति शेषः । पाकं विनेति यावत् । विभक्त्यन्तरस्य विभक्तान्तरस्य तारमन्दादिनानाविधस्येति यावत् । उपपत्तेः स्पर्शवद्भिन्नविशेषगुणत्वे सत्येवोपपत्तेः । स्पर्शवद्विशेषगुणानां गन्धादीनां परावृत्तिस्तु पाकं विना नेति भावः ॥ ३८ ॥

(१) अत्र विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्ग इत्येकं सूत्रमधिकं न्यायसूचीनिबन्धन्यायसूत्रोद्धारयोर्दृश्यते । न्यायसूत्रोद्धारटिप्पण्यां च सिद्धान्तिनः सूत्रान्तरमिति वृत्तिरिति प्रमाणमप्युपन्यस्तम् । विश्वनाथकृतवृत्तिदर्शनाज्ज्ञायते पाणिनिमित्तेत्यादिसूत्रावतरणिकायामेव सिद्धान्तिनः सूत्रान्तरमित्युक्तं विश्वनाथेन एतत्सूत्रस्य धारणं व्याख्यानमपि तत्र नास्तीति अस्थाने प्रमाणोपन्यासस्तत्र भवतामिति । यथोक्तवाक्यं सूत्रतया न्यायतत्त्वालोके वाचस्पतिमिश्रैरपि न धृतम् । सिंहावलोकितन्यायेन पूर्वोक्तं हेतुं दूषयति । विनाशेति । इति तात्पर्यटीकायां भाष्यप्रतीकधारणरीतिरप्यत्र द्रष्टव्या ।

(२) अस्पर्शद्रव्याश्रयः शब्द इति सूत्रार्थ इति वार्तिकम् । अस्योत्तरसूत्रम् । अस्प-धः इति तात्पर्यटीका ।

(३) विभ-से इति धृत्वा व्याख्याय सूत्रव्याख्ययैव भाष्यवार्तिके व्याख्याते इति तात्पर्यटीकायामुक्तम् ।

CC-0. In Public Domain. Digitized by eGangotri

समाप्तं शब्दानित्यत्वप्रकरणम् ॥

प्रसङ्गाच्छब्दपरिणामवादं दूषयितुं संशयं प्रदर्शयति ।

**विकारादेशोपदेशात् संशयः**[१] ॥ ३९ ॥

विकारोपदेशादादेशोपदेशाच्च संशयो वर्णा विकारिणो न वेति संशयः । तत्रेकारादेर्विकारो यकारादिरिति सांख्या व्याचक्षते । अपरे तु इकारादीनां न विकारो यकारादिः किं तु इकारप्रयोगस्थले यकारादिः प्रयोक्तव्य इत्यादेशवादिनः । तत्र विकारो नाम तन्नाशजन्यत्वे सति तदवयवारब्धः । यथा दुग्धादेर्दध्यादिर्बीजादेर्वृक्षादिः । सुवर्णादेरपि लौहाद्यभिघातजावयवसंयोगनाशेनावयविनाशादेव कुण्डलाद्युत्पत्तिरिति कुण्डलादिकं तद्विकारः । न च कपालादिविकारत्वं घटादेर्न स्यात् कपालाद्यविनाशेनैव तदुत्पत्तेरिति वाच्यम् । इष्टत्वात् । खण्डघटादेर्महाघटाद्यविकारत्वे तज्जनकावयवसंयोगजातीयाजन्यत्वं विशेषणं देयम् । जातीयत्वनिवेशाद् विभिन्नसंयोगजन्ये पूर्वघटावयवजन्ये उत्तरघटे न पूर्वघटविकारत्वप्रसङ्गः । न च वर्णस्य विकारित्वे सावयवद्रव्यत्वापत्तिरिति वाच्यम् । इष्टत्वात् । अथवा तत्समवायिसमवेतत्वे सति तन्नाशाधीनत्वमेवात्र तद्विकारत्वम् । इकारयकारयोश्चैकस्मिन्नेव गगने समवेतत्वान्नाप्रसिद्धिरिति ॥ ३९ ॥

तत्र विकारित्वं खण्डयति ।

**प्रकृतिविवृद्धौ विकारविवृद्धेश्च**[२] ॥ ४० ॥

(१) संशयकारणज्ञापनार्थं सूत्रमिति वार्तिकम् । विप्रतिपत्तिप्रदर्शनाय सूत्रं विकारेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) प्रकृतिविवृद्धौ विकारविवृद्धेरिति सूत्रमिति वार्तिकम् । अत्र चकाररहितः सूत्रपाठो न्यायतत्त्वालोके ।

CC-0. In Public Domain. Digitized by eGangotri

महदल्पदुग्धादितो दध्यादेर्महदल्पत्ववत् ह्रस्वेकारजन्ययकारादितो दीर्घेकारजन्ययकारादेर्वृद्धिः स्याद्यदि यकारादेरिकारादिविकारत्वं स्यादिति न वर्णा विकारिण इति भावः ॥ ४० ॥

अथ प्रकृतिवैलक्षण्यं न विकारवैलक्षण्यनियामकमित्याशङ्कते ।

**न्यूनसमाधिकोपपत्तेर्विकाराणामहेतुः**[1] ॥ ४१ ॥

निरुक्तवृद्धिप्रसङ्गोऽहेतुर्न विकारित्वप्रतिषेधकः । विकाराणां प्रकृत्यपेक्षया क्वचिन्न्यूनत्वस्य क्वचित् समत्वस्य क्वचिदाधिक्यस्य चोपपत्तेर्दर्शनात् । यथा तूलपरिमाणापेक्षया तद्विकारस्तन्तुरल्पपरिमाणकः वटबीजादुत्कृष्टेन नारिकेलबीजेन न्यग्रोधादल्पो नारिकेलतरुर्जन्यते कनकादिसमपरिमाणं कटकादि न्यूनाधिकपरिमाणनारिकेलादिबीजाभ्यां समौ वृक्षौ न्यूनपरिमाणाच्च वटबीजान्महान् तरुरिति ॥ ४१ ॥

[2]अत्राह ।

**नातुल्यप्रकृतीनां विकारविकल्पात्**[3] ॥ ४२ ॥

नोक्तदूषणोद्धारः । अतुल्यप्रकृतीनां विलक्षणप्रकृ-

(१) न्यूनसमाधिकोपलब्धेरित्यन्यत्र पाठः । अस्याक्षेपसूत्रम् । न्यून–तुः । इति तात्पर्यटीका । आक्षेपसूत्रम् । न्यूनेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) अत्र द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्त इति सूत्रमधिकं न्यायसूचीनिबन्धे दृश्यते । अस्य प्रत्याख्यानसूत्रम् । द्विविधस्यापि हेतोरिति । इति तात्पर्यटीकायां च । परं तु न्यायतत्वालोके विश्वनाथकृतवृत्तौ न्यायसूत्रोद्धारे चेदं न धृतम् ।

(३) समाधिसूत्रम् । नातुल्यप्रकृतीनामित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

तिकानां विकाराणां विकल्पात् प्रकृतिवैलक्षण्येन वैलक्षण्यात् । न हि वटनारिकेलबीजाभ्यामेकजातीयो वृक्षो जन्यते । एवं चेकारस्य ह्रस्वदीर्घवैलक्षण्येन तद्विकारयकारस्यापि ह्रस्वदीर्घवैलक्षण्यापत्तिर्दुष्परिहरा भवदुक्तन्यूनसमाधिकोपपत्तिर्न तत्र बाधिका तथा च त्वदुक्तमुपचारच्छलमिति भावः ॥ ४२ ॥

पुनराशङ्कते ।

**द्रव्यविकारवैषम्यवद् वर्णविकारविकल्पः**(१) **॥ ४३ ॥**

वटादिबीजविजातीयबीजात् प्रकृतिभूताद् वटविजातीयो वृक्षो जन्यते । एवमिवर्णविजातीयादेवोवर्णादेर्यकारादिविजातीयो वकारादिर्जन्यते न त्विवर्णत्वेनैकजातीययोर्ह्रस्वदीर्घयोरपीकारयोर्यकारवैलक्षण्यमिति भावः ॥ ४३ ॥

शङ्कां निरस्यति ।

**न विकारधर्मानुपपत्तेः**(२) **॥ ४४ ॥**

न यकारादेरिकारविकारत्वं विकारधर्माभावात् । विकारधर्मः प्रकृत्यवयवारब्धत्वं तद् वर्णस्यासम्भवि निरवयवत्वात् । यद्वा नात्र द्रव्यविकारतुल्यता विकारधर्मो हि प्रकृतिवैजात्येन वैजात्यं तदत्र नास्ति ह्रस्वत्वदीर्घत्वादिप्रकृतिवैजात्येऽपि यकारादेरैकजात्यादिति ॥ ४४ ॥

(१) वर्णविकारविकल्प इत्यन्यत्र पाठः। द्रव्यविकारे वैषम्येत्यपि क्वचित् पाठः। अस्याक्षेपसूत्रम् । द्रव्यविकार इतीति तात्पर्यटीका ।

(२) तत्र प्रत्याख्यानसूत्रम् । न विकारधर्मे गोति तात्पर्यटीका । समाधिसूत्रम् । न विकारधर्मेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

समाधानान्तरमाह ।

**विकारप्राप्तानामपुनरापत्तेः**[1] ॥ ४५ ॥

अपुनरापत्तेः पुनःप्रकृतिरूपत्वादर्शनात् । न खलु दध्यादिकं कदाचिदपि क्षीरतामासादयति । विदुषः पुत्र इत्यत्र वकारादुकारः पुनरपि समासे षष्ठीलोपेन उकारस्य वकारप्राप्त्या विद्वत्पुत्र इत्यादिप्रयोग इति वकारादेर्नोकारादिप्रकृतित्वसम्भव इति भावः ॥ ४५ ॥

**सुवर्णादीनां पुनरापत्तेरहेतुः**[2] ॥ ४६ ॥

पुनःप्रकृतिभावो न विकारत्वाभावसाधकः सुवर्णादीनां सुवर्णादिविकाराणां कटकादीनां पुनरापत्तेः कटकादिभावं विहाय पूर्ववत् सुवर्णत्वदर्शनात् । यद्वा सुवर्णादीनां कटकादिभावनिरासेन कुण्डलादिभावप्राप्त्या पुनरपि कटकादिभावदर्शनादित्यर्थः ॥ ४६ ॥

समाधानमाह ।

**न तद्विकाराणां सुवर्णभावाव्यतिरेकात्**[3] ॥ ४७ ॥

वर्णानां विकारत्वाभावसाधकपुनरापत्तिरूपहेतौ न व्यभिचारः तद्विकाराणां सुवर्णविकाराणां कटकादीनां सुवर्णभावाव्यतिरेकात् सुवर्णत्वादित्यर्थः । तथा च वि-

(१) एतद्व्याख्यानान्ते इति सूत्रार्थ इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः ।

(२) विकारप्राप्तानां पुनरापत्तिदर्शनादनेकान्त इति सूत्रार्थ इति वार्त्तिकम् । अस्याक्षेपः सुवर्णादीनामिति सूत्रमिति तात्पर्यटीका । आक्षेपसूत्रं सुवर्णादीनामित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(३) समाधिसूत्रम् । तद्विकाराणामित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । तत्र च नकाररहितः सूत्रपाठः ।

CC-0. In Public Domain. Digitized by eGangotri

कारो द्विविधः प्रकृतिजातीयस्तद्विजातीयश्चेति । तत्राद्यः सुवर्णकटकादिः । द्वितीयः काष्ठभस्मादिः । तत्र प्रकृतिविजातीयविकारत्वं वर्णे वक्तव्यं तन्न भवति पुनरापत्तेरित्यत्र न व्यभिचार इति भावः । यद्वा सुवर्णविकारस्थले हि सुवर्णत्वादिना प्रकृतिता न तु कटकत्वादिना तत्रोभयमपि सुवर्णभावं न जहाति यदि हि सुवर्णतामपहाय कटकतापन्नं पुनः सुवर्णता तदा व्यभिचारः सम्भाव्येत प्रकृते च वकारतां विहाय उकारताप्राप्तस्य पुनर्वकारतेति यथोक्तदूषणं दुष्परिहरमिति भावः ॥ ४७ ॥

निरुक्तहेतोरप्रयोजकत्वशङ्कया युक्त्यन्तरमाह ।

**नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात्**[१] ॥ ४८ ॥

वर्णानां नित्यत्वे विकारासम्भवादनित्यत्वे च क्षणद्वयमात्रस्थायितया इकारादेः प्रत्यक्षानन्तरमेव तद्विनाशाद्विकारानुपपत्तिरित्यर्थः ॥ ४८ ॥

नित्यमते पूर्वपक्षयति ।

**नित्यानामतीन्द्रियत्वाद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः**[२] ॥ ४९ ॥

न निषेधो नित्यानामतीन्द्रियत्वाद् धर्मविकल्पाच्चेत्यर्थः । धर्मस्यातीन्द्रियत्वस्य विकल्पो विरुद्ध ऐन्द्रियकत्वं तस्मात् । चकारादन्येऽपि विरुद्धधर्मा लक्ष्यन्ते । तथा च यथा नित्यानामाकाशादीनामतीन्द्रियत्वेऽपि गोत्वादीनां

(१) एतत्सूत्रव्याख्यानान्ते इति सूत्रार्थं इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः ।

(२) पूर्वपक्षसूत्रम् । नित्यानामित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

नित्यानामैन्द्रियकत्वं तथान्येषां नित्यानामविकारित्वेऽपि वर्णानां विकारिता स्यादिति जातिवचनम् ॥ ४९ ॥

अनित्यत्वपक्षे जात्या पूर्वपक्षयति ।

**अनवस्थायित्वे च वर्णोपलब्धिवत्तदुपपत्तिः[1] ॥ ५० ॥**

वर्णानामनवस्थायित्वेऽपि यथा प्रत्यक्षं भवति तथा विकारोऽपि स्यादित्यर्थः ॥ ५० ॥

पक्षद्वये समाधानमाह ।

**विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः[2] ॥ ५१ ॥**

नित्यत्वासम्भवात् नित्यत्वेन विकारित्वस्य विरोधात् । तथाहि नित्यत्वं ध्वंसाप्रतियोगित्वघटितं विकारित्वं च वस्त्वन्तरानुगुणध्वंसप्रतियोगित्वघटितमिति स्फुटो विरोधः । न च मृदोऽविनाशेन मृद्विकारो घटादिर्यथा तथा इकारादेरविनाशेनैव यकारादिविकार इति वाच्यम् । यकारादिप्रयोगे इकाराद्यनुपलब्धेः । अनित्यत्वपक्षेऽपि वर्णविकारो न सम्भवतीत्याह । कालान्तर इति । इकारादिविनाशानन्तरं यकारादिप्रयोगात् । अप्रतिषेधो वर्णस्याविकारित्वप्रतिषेधो नेत्यर्थः । तथा च वर्णस्य द्वितीयक्षणे प्रत्यक्षं सम्भवति विषयस्य वर्णस्य सत्त्वात् । प्रकृते तु दधिशब्दप्रयोगानन्तरमत्रेतिप्रयोग एव दध्य-

(१) एतत्सूत्रव्याख्यानान्ते इति सूत्रार्थ इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः । तत्र वर्णोपलब्धिवद्विकारोपपत्तिरिति पाठः । तद्विकारोपपत्तिरित्यन्यत्र पाठः ।

(२) भाष्यकारोऽत्रैवार्थे सूत्रं पठति । विकारधर्मित्व इति । इति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

ऽतिभावात् तदानीमिकारस्यासत्त्वादुत्तरवर्णस्य पूर्ववर्णविनाशकत्वात् न हि प्रकृतेस्तदवयवस्य वा असत्त्वे विकारः सम्भवतीति भावः ॥ ५१ ॥

युक्त्यन्तरमाह ।

**प्रकृत्यनियमात्[1] ॥ ५२ ॥**

कदाचिद्यकारस्थले इकारो यथा विध्यतीति । कदाचिच्चेकारस्थाने यकारो यथा दध्यत्रेति । एवं सति प्रकृतिविकृतिभावो न सम्भवति न हि कदाचित् क्षीरं दधिविकृतिरिति भावः । सूत्रार्थस्तु प्रकृत्यनियमात् प्रकृत्यनियमप्रसङ्गादिति ॥ ५२ ॥

छलेन शङ्कते ।

**अनियमे नियमान्नानियमः[2] ॥ ५३ ॥**

प्रकृत्यनियमस्य नियमान्न प्रकृत्यनियम इत्यर्थः ॥ ५३ ॥

दूषयति ।

**नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः[3] ॥ ५४ ॥**

अनियमे नियमाद्योऽनियमप्रतिषेध उक्तः स न सम्भवति कुतः नियमानियमयोर्विरोधात् । अनियमो निय-

---

(१) एतत्सूत्रव्याख्यानान्ते इति सूत्रार्थ इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः । क्वचित्तु प्रकृत्यनियमाद्वर्णविकाराणामिति सूत्रपाठो दृश्यते । न्यायसूचीनिबन्धन्यायतत्त्वालोकवार्त्तिकेषु तु प्रकृत्यनियमादित्येतावन्मात्रं सूत्रमिति दृश्यते ।

(२) अनियमे नियमान्नानियमः । सूत्रार्थोऽनियमो नास्तीतीति वार्त्तिकम् । एतद्व्याख्यानान्ते इति सूत्रार्थ इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः ।

(३) अनुज्ञातप्रतिषिद्धयोरेकत्वानुपपत्तेरिति विरोधः सूत्रार्थ इति वार्त्तिकम् । अत्रोत्तरसूत्रम् । नियमानियमेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । व्याख्यानान्ते च इति सूत्रार्थ इति तत्रैव ।

CC-0. In Public Domain. Digitized by eGangotri

माभावस्तस्मिन् सति नियमासम्भवादिति भावः। चकारादनियमस्य नियमे ऽपि प्रकृत्यनियमस्तदवस्थ एवेति सूचितम् ॥ ५४ ॥

ननु वर्णस्याविकारित्वे कथं वर्णविकारव्यवहार इत्यतस्तमुपपादयति।

**गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु वर्णविकारोपपत्तेर्वर्णविकारः**(१) ॥ ५५ ॥

तुरवधारणे। वर्णविकारोपपत्तेरेव वर्णे विकारसादृश्यादेव वर्णविकारव्यवहार इत्यर्थः। तथा च भाक्त एव व्यवहार इति। सादृश्यं विवृणोति। गुणान्तरेत्यादि। गुणान्तरापत्तिर्धर्मिणि सत्येव धर्मान्तरापत्तिः। यथोदात्ते ऽनुदात्तत्वम्। उपमर्दो धर्म्यन्तरप्रयोगो यथा अस्तेर्भूः। ह्रासो दीर्घस्य ह्रस्वत्वम्। वृद्धिर्ह्रस्वस्य दीर्घत्वम्। लेशः स्वल्पता यथा अस्तेरकारलोपः। श्लेष आगम इति ॥ ५५ ॥

समाप्तं शब्दपरिणामप्रकरणम् ॥

शाब्दबोधे पदपदार्थयोः सम्बन्धो नियामकोऽन्यथाऽतिप्रसङ्गस्तत्र यादृशशब्दस्य यादृशार्थे तादृशसम्बन्धस्य तादृशार्थबोधप्रयोजकत्वं तादृशशब्दं तादृशार्थांश्च क्रमेणाह।

**ते विभक्त्यन्ताः पदम्**(२) ॥ ५६ ॥

ते शब्दाः। विभक्तिश्च सुप्तिङ्भेदेन द्विविधा। बहुवचनान्ता गणस्य संसूचका इतिन्यायेन बहुवचन

(१) श्लेषेभ्यस्तु विकारोपपत्तेरिति पाठोऽन्यत्र। सूत्रार्थो गुणान्तरापत्त्यादेरादेश इति वार्त्तिकम्।

(२) तत्र पदार्थः पदमनिरूप्य निरूपयितुं न शक्य इत्यादौ तल्लक्षणाय सूत्रम्। ते विभक्त्यन्ताः पदमिति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

निर्देशात् लुप्तविभक्तिकानामपि ग्रहणम् । वस्तुतस्तु विभक्त्यन्तानां लुप्तविभक्तिकानां च शब्दानां तत्तदानुपूर्वीविशेषेणैव पदशब्दशक्यत्वमितिसूचनाय बहुवचनम् । पदशब्दस्य नानार्थत्वमिष्टमेव । विभक्त्यन्तत्वस्य पदशब्दशक्यतावच्छेदकत्वे घटस्त्वित्यादेरपि तदापत्तेः । एवं च शक्तिसम्बन्धेन पदशब्दवत्त्वमेव तल्लक्षणम् । यद्यपि शाब्दबोधौपयिकशक्तिग्रहे विभक्त्यन्तत्वादिभानमनपेक्षितं तथापि विभक्त्यन्तपदज्ञानानामाकाङ्क्षाज्ञानरूपतया स्वातन्त्र्येण शाब्दहेतुतालाभाय वचनमिदम् । अन्यथा निर्विभक्तिकादपि पदाच्छाब्दबोधापत्तेः । वस्तुतः कीदृशशब्दः शाब्दबोधोपयोगीति प्रश्ने सूत्रमिदम् । तस्य च विभक्त्यन्ताः शब्दाः पदं प्रत्यायकमिति तदर्थः । प्रत्येकरूपेण शाब्दबोधोपयोगितालाभाय बहुवचनं वेदाः प्रमाणमितिवदेकवचनान्तता नपुंसकलिङ्गता चेति । पदशब्दशक्यतावच्छेदकं तु शक्तिमत्त्वमेव लाघवात् । पद्यते ज्ञायते ऽनेनेतिव्युत्पत्तेः शक्तिमतामेव पदव्यवहारः । केचित्तु विभक्तिः शक्तिरन्तः सम्बन्धस्तेन शक्तिमन्त इत्यर्थः । अत्र बहुत्वमविवक्षितं सूत्रे लिङ्गसंख्याकालाश्चातन्त्राणीतिन्यायादित्याहुः ॥ ५६ ॥

यस्य पदस्य योऽर्थः स तेन प्रतीयते । पदस्येति षष्ठ्यर्थो वृत्तिरूपसम्बन्धः वृत्तिश्च शक्तिलक्षणान्यतररूपा । तत्र शक्यसम्बन्धो लक्षणा शक्तिश्च अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयता सा च व्यवहाराद्यनुमेया क्वचिदुपमानगम्या च । धातुविशेषादेरर्थविशेषे शक्तिस्तु व्याकरणाद्यनुशासनतो निर्णीयते । पश्वादिपदानामपि लोमवल्लाङ्गूलवत्त्वरूपपशुत्वे पश्वादिपदस्य मुख्यप्रयोग

CC-0. In Public Domain. Digitized by eGangotri

विरहेण तद्विशिष्ट एव शक्तिर्निरूपिता। गवादिपदशक्तिस्तु गवादौ सन्दिग्धेति तन्निर्णयाय संशयं दर्शयति।

**तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः**[1] ॥ ५७ ॥

व्यक्तिर्गवादिः। आकृतिरवयवसंस्थानविशेषः। जातिर्गोत्वादिः। तासां सन्निधौ एकदा उपचारात् पदज्ञानानन्तरोपस्थितौ। तदर्थे तदर्थत्वस्य तच्छक्तेरिति यावत्। संशयो जातौ वा व्यक्तौ वा आकृतौ वा तत्समुदाये वेति संशय इत्यर्थः। तदर्थ इति भाष्यकारेण पूरितम्। केचित्तु सूत्रमिदं भाष्यकारस्येत्याहुः॥ ५७ ॥

तत्र व्यक्तिशक्तिवादिमतमाह।

**याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः**[2] ॥ ५८ ॥

पदार्थ इति शेषः। या गमनम्। समासः सम्यक् स्थितिः सम्बन्धो वा। अनुबन्धः प्रयोजनम्। एतेषामुपचाराद् गोपदार्थान्वयित्वेन प्रयोगाद् व्यक्तिरेव गवादिपदशक्येत्यर्थः। जात्याकृत्योस्त्वन्वये बाधादिति भावः। उदाहरणं यथा। गौर्गच्छति गौः शब्दायते गवां समूहः गां ददाति गां प्रतिगृह्णाति दश गावः गौः स्थूला गौः कृशा गौः कपिला गौः शेते गोर्मुखं गौः प्रसूते इत्यादि॥ ५८ ॥

(१) इदं भाष्यमिति केचित्। वस्तुतस्तु दुर्बाधादिस्वरसात् सूत्रमेव तदर्थ इत्यंशस्तु भाष्यकृतः पूरणमिति प्रतिभातीति विश्वनाथपञ्चाननाः। एतत्सूत्रव्याख्यानान्ते इति सूत्रार्थ इति लिखितं न्यायतत्त्वालोके वाचस्पतिमिश्रैः। तत्र न्यायसूचीनिबन्धे च तदर्थ इति सूत्रपाठो नास्ति।

(२) शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणमिति प्रयोगप्रदर्शनार्थं याशब्दादिसूत्रमिति वार्त्तिकम्। पूर्वपक्षसूत्रं याशब्देत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

प्रतिक्षिपति ।

न तदनवस्थानात्[1] ॥ ५९ ॥

व्यक्तिर्न पदार्थः तन्मात्रस्यानवस्थानादनुपस्थितेः । जात्यादिपुरस्कारेणैव गवादेः शाब्दबोधे भानात् । व्यक्तिमात्रस्य शक्यत्वे गवादिपदाद् गोव्यक्तिमात्रस्य बोधः स्याच्छाब्दबोधविषयत्वस्य वृत्तिप्रयोज्यत्वनियमादिति भावः ॥ ५९ ॥

गमनाद्युपचारस्तु लक्षणयापि सम्भवतीति न शक्तिसाधक इत्यभिप्रायेण तद्दृष्टान्तमाह ।

सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजशक्तुचन्दनगङ्गाशाकटान्नपुरुषेष्वतद्भावेऽपि तदुपचारः[2] ॥ ६० ॥

सहचरणादिसम्बन्धेभ्यो ब्राह्मणादौ अतद्भावेऽपि तत्पदाशक्यत्वेऽपि तदुपचारः तत्पदव्यवहारः । यष्ट्यादिपदाशक्यत्वेऽपि यष्ट्यादिप्रयोग इति यावत् । एवं गोपदाशक्यत्वेऽपि गवादौ गौर्गच्छतीत्यादिव्यवहारसम्भव इति भावः । क्रमेणोदाहरणं यथा यष्टिं भोजयेत्यत्र सहचरणात् संयोगविशेषाद् यष्टिपदस्य यष्टिधरे ब्राह्मणे लक्षणा । मञ्चाः क्रोशन्तीत्यत्र स्थानात् स्थितेर्मञ्चपदस्य

(१) न तदनवस्थानादिति सूत्रम् । नानेन गोशब्देन व्यक्तिमात्रं शुद्धमुच्यते । यद्ययं व्यक्तिमात्राभिधायकोऽभविष्यत् तेन यस्यां कस्याञ्चिद् व्यक्तौ प्रत्ययोऽभविष्यदिति सूत्रार्थ इति वार्त्तिकम् ।

(२) क्व पुनर्निमित्तादतद्भावेऽपि तदुपचारो दृष्ट इति तस्योपपादनार्थं सहचरणादिसूत्रमिति वार्त्तिकम् । क्वचिच्च व्यक्तिमात्रे प्रयोग उपचारात् तन्निमित्तोपदर्शनाय सूत्रं सहचरणेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

मञ्चस्थे लक्षणा। सूत्रे मञ्चपदमपि मञ्चस्थपरम्। कटमानय-तीत्यत्र तदर्थकत्वाद् वीरणे कटपदस्य लक्षणा। सूत्रस्थं कटपदमपि वीरणपरम्। नियमाद् बिभेतीत्यत्र वृत्तादनुशासनादितो नियमपदस्य राज्ञि लक्षणा। आढकं शक्तव इत्यत्र मानादाढकपदस्याढकपरिमिते लक्षणा। तुलाचन्दनमित्यत्र धारणात् तुलापदस्य तुलाधृते लक्षणा। गङ्गायां घोष इत्यत्र सामीप्याद् गङ्गापदस्य तीरे लक्षणा। सूत्रस्थ-गङ्गापदमपि तीरपरम्। कृष्णः शकट इत्यत्र योगात् कृष्णपदस्य कृष्णद्रव्यवति लक्षणा। अन्नं प्राणा इत्यत्र साधनात् प्राणपदस्य प्राणसाधने लक्षणा। राजायं गच्छतीत्यत्र आधिपत्याद्राजपदस्य राजपुरुषे लक्षणेत्यादि ॥ ६० ॥

आकृतिरेव शक्येतिमतमुपन्यस्यति।

**आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः**(१) ॥ ६१ ॥

आकृतिः शक्या कुतः सत्त्वस्य प्राणिनो गवादेर्व्यवस्थानसिद्धेर्व्यवस्थितत्वसिद्धेस्तदपेक्षत्वादाकृत्यपेक्षत्वात्। गौरयमित्यादिव्यवहारस्याकृत्यपेक्षत्वादाकृतिरेव शक्येत्यर्थः। अथवा आकृतिसहितव्यक्तिः पदार्थः तदपेक्षत्वादित्यादेः पूर्वोक्त एवार्थः ॥ ६१ ॥

आकृतिशक्तिपक्षं निरसन् जातिशक्तिपक्षमाह।

**व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः**(२) ॥ ६२ ॥

व्यक्त्याकृतियुक्ते मृद्गवके मृत्तिकारचितगवाकृति-

(१) एतद्व्याख्यानान्ते इति सूत्रार्थ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः।
(२) एतद्व्याख्यानान्ते इति सूत्रार्थ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

व्यक्तौ प्रोक्षणादीनामप्रसङ्गादसम्बन्धात् गां प्रोक्षयेदित्यादिविधिप्राप्तप्रोक्षणादिप्रसङ्गादिति यावत् । व्यक्तिराकृतिर्वा न शक्या किं तु जातिरेव मृद्गवके तादृशजातिविरहान्न दोष इति भावः ॥ ६२ ॥

जातिशक्तिं निराकरोति ।

**नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेश्च**(१)

॥ ६३ ॥

न जातिमात्रं पदार्थः । जात्यभिव्यक्तेर्जातिशाब्दबोधस्य । आकृतिव्यक्त्यपेक्षत्वादाकृतिव्यक्तिविषयकत्वनियमात् । तथा च जातिमात्रस्य पदार्थत्वे तन्मात्रतात्पर्येण गौर्नित्येत्यादिप्रयोगः स्याद् गौर्गच्छतीत्यादिमुख्यप्रयोगोऽपि न स्यात् । न च गोपदधर्मिकशक्तिसंसर्गकगोत्वप्रकारकं ज्ञानं गोत्वप्रकारेण गोः स्मरणे तादृशशाब्दबोधे च हेतुरिति नाप्रसङ्गातिप्रसङ्गाविति वाच्यम् । तद्विषयकशाब्दबोधे तदंशे वृत्तिज्ञानस्यापेक्षितत्वादन्यथा लक्षणामात्रोच्छेदापत्तेः गङ्गाप्रवाहादौ गङ्गापदशक्तिग्रहस्यैव गङ्गाप्रवाहस्येव तीरस्यापि शाब्दबोधहेतुत्वोपगमस्यापि सम्भवात् । तात्पर्यज्ञानादिकमेव तयोः कालभेदनियामकम् । न च प्रवाहे शक्तिरूपसम्बन्धज्ञानं कथं तीरस्मारकं स्यादिति वाच्यम् । तथा सति गोत्वशक्तिज्ञानस्यापि गोस्मारकत्वानुपपत्तेः । न च गोत्वशक्तिज्ञानं परम्परासम्बन्धेन कर्मत्वादौ गोत्वशाब्दबोधजनकमनन्तरं च परम्परासम्बन्धेन गोत्वहेतुनैव गवादिव्यक्त्यनुमानमिति वाच्यम् । तादृशानुमानं विनापि गोपदश्रवणानन्तरं गोबोधस्यानु-

(१) चकाररहितः सूत्रपाठोऽन्यत्र । एतद्व्याख्यानान्ते इति सूत्रार्थ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।



CC-0. In Public Domain. Digitized by eGangotri

भविकत्वाद् गोत्वत्वेनोपस्थित्यनियमेन तेनानुमानासम्भवाच्च। न च गोत्वत्वावच्छिन्न एव शक्तिरिति तद्ग्रहे नियतगोत्वत्वोपस्थितिरिति वाच्यम्। गोत्वत्वेन शक्तिस्वीकारे तदपेक्ष्य लाघवात् स्वरूपतो गोत्वविशिष्टे शक्तिस्वीकारस्योचितत्वादिति दिक्॥ ६३॥

सिद्धान्तमाह।

**जात्याकृतिव्यक्तयस्तु पदार्थः[(१)] ॥ ६४ ॥**

पदार्थ इत्येकवचनमेकशक्तिसूचनाय। एकवचनार्थस्यैकत्वस्य शक्तिरूपपदार्थत्वे ऽन्वयात्। जातौ शक्तिस्वीकारो गवादिपदानां मुख्यप्रयोगे गोत्वादिना गवादेः शाब्दबोधो न तु द्रव्यत्वादिनेतिनियमाय। आकृतौ शक्तिस्तु ताद्रूप्येण बोधस्यानुभविकत्वात्। न चेश्वरेच्छाविषयत्वरूपशक्तेर्विषयभेदविभिन्नतया कथमेका शक्तिस्त्रिष्विति वाच्यम्। गौर्गोपदजन्यबोधविषयो भवत्वितीश्वरेच्छाविषयता गोपदशक्तिस्तत्र बोधविषयता स्वरूपसम्बन्धेन व्यक्तौ भासते समवायसम्बन्धावच्छिन्नावच्छेदकतासम्बन्धेन जातौ भासते विशिष्टाधिकरणकवैशिष्ट्यबोध इव तादृशेच्छायां विशेष्यतावच्छेदके विधेयस्य भानस्वीकारात्। एवं च तादृशबोधविषयत्वप्रकारतानिरूपितविशेष्यतात्मकशक्तिस्त्रिष्वेव तादृशविशेष्यतानां मिथो भिन्नत्वे ऽपि तादृशबोधविषयताप्रकारतानिरूपितविशेष्यत्वत्वेनानुगमादैक्योक्तिः। एवं यत्र तादृशबोधविषयता स्वरूपसम्बन्धेन इच्छायां भासते तस्य विशेष्यतया

(१) सिद्धान्तसूत्रम्। व्यक्त्याकृतिजातयस्तु पदार्थ इति न्यायतत्त्वालोके वाचस्पतिमिश्राः। तस्मात् साधु पारमर्षं सूत्रं व्यक्त्याकृतिजातयस्तु पदार्थ इतीति तात्पर्यटीका। एवमन्यत्रापि व्यक्त्याकृतीत्यादिपाठक्रमो दृश्यते।

CC-0. In Public Domain. Digitized by eGangotri

शाब्दबोधे भानं यत्र च यादृशसम्बन्धावच्छिन्नावच्छेदकतासम्बन्धेन भासते तस्य तादृशसम्बन्धेन तत्र भानमिति नियमस्तेन जात्यादेर्न स्वातन्त्र्येण विशेष्यविधया वा भानम् । अत एव जात्याकृतिविशिष्टे गवादिपदानां शक्तिरिति व्यवह्रियते । तद्विशिष्टे शक्तिरित्यनेन तदंशे अवच्छेदकतासम्बन्धेन विशेषणतापन्नबोधविषयताप्रकारतानिरूपितविशेष्यताया बोधनाद् विशिष्टशक्तिज्ञानमेव शाब्दबोधहेतुरिति विशेषणं परित्यज्य केवलविशेष्ये शक्तिज्ञानान्न व्यक्तिशाब्दबोध इति । इदं च गवादिपदाभिप्रायेण तत्रैवाशङ्कनात् तेन पश्वादिपदस्थले पशुत्वाद्युपाधिविशिष्टे शक्तिः । गुणादिपदस्थले गुणत्वादिजातिविशिष्ट एव शक्तिस्तत्राकृतिविरहादिति दिक् ॥ ६४ ॥

व्यक्तेर्विशेष्यतया मुख्यत्वेन प्रथमत एव तत्र जिज्ञासोदयात् तां लक्षयति ।

**व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिः**[(१)] ॥ ६५ ॥

गुणविशेषो धर्मविशेषो जातिरिति यावत् । तदाश्रयत्वं समवायेन । मूर्त्तिः स्वाश्रयसमवेतत्वसम्बन्धेनाकृतिविशिष्ट इत्यर्थः । न च निरुक्तसम्बन्धेनाकृतिमत्त्वमेवास्तु किं जात्याश्रयत्वविशेषणेनेति वाच्यम् । प्रत्येकं लक्षणद्वये तात्पर्यात् । न च जात्याश्रयत्वरूपलक्षणमात्मादावतिव्याप्तं तस्याकृतिविरहेण निरुक्तत्रितयशक्तपदार्थव्यक्तित्वाभावादलक्ष्यत्वादिति वाच्यम् । गुणविशेषपदेनावच्छिन्नपरिमाणस्य नित्यावृत्तिजातेर्वा उक्तत्वात् । अथवा गुणविशेषाश्रयो व्यक्तिर्मूर्त्तिश्चेत्यर्थः । तथा च निरुक्तगुणविशेषाश्रयत्वं

(१) व्यक्तिलक्षणप्रतिपादनार्थं व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिरिति सूत्रमिति वार्त्तिकम् । व्यक्तिलक्षणाय सूत्रं व्यक्तिरित्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

लक्षणम् । व्यक्तिपदमूर्त्तिपदयोः पर्यायतेति भावः । इदं च गवादिपदशक्यव्यक्तिलक्षणम् । व्यक्तिपदप्रवृत्तिनिमित्तं च ज्ञेयत्वं पदार्थमात्र एव व्यक्तिपदप्रयोगात् । प्रमेयत्वं तु न तथा तस्य ज्ञेयत्वापेक्षया गुरुत्वात् । वस्तुतो गुणविशेषाश्रयो मूर्त्तिरित्येकं लक्षणम् । आत्मादिवारणाय मूर्त्तिपदम् । द्व्यणुकपदाद् द्व्यणुकादेराकृतिपुरस्कारेण बोधस्य नियमात् तत्रातिव्याप्तिवारणाय गुणविशेषाश्रयत्वम् । तदर्थस्तु महत्त्वाश्रयत्वं लौकिकप्रत्यक्षविषयत्वं वेति । आकृतेर्विशेषणविधया पदशक्यत्वेऽपि न प्रवृत्तिनिमित्तत्वं किं तु जातेरेव शक्यत्वे सति शक्यवृत्तित्वे सति शक्योपस्थितिप्रकारत्वमितिप्रवृत्तिनिमित्तलक्षणात् । द्रव्यत्वादेर्गवादिपदप्रवृत्तिनिमित्ततावारणाय शक्यत्वे सतीति । आकृतिवारणाय शक्यवृत्तित्वे सतीति । दध्यादेः समवायसम्बन्धेन दधिवृत्तितया दध्यादिपदप्रवृत्तिनिमित्ततावारणाय विशेष्यदलमिति ॥ ६५ ॥

विपरीतक्रमलब्धामाकृतिं लक्षयति ।

**आकृतिर्जातिलिङ्गाख्या**(१) ॥ ६६ ॥

जातेर्लिङ्गं व्यञ्जकं तदेवाख्या यस्याः सा । आकृतिश्च स्वसमवायिसमवेतत्वलक्षणपरम्परासम्बन्धेन गवाद्यवयवसंस्थानरूपाकृतिप्रकारकज्ञानस्य गोत्वादिप्रत्यक्षहेतुत्वादिति भावः । केचित्तु जातिर्द्रव्यासमवायिकारणतावच्छेदिका जातिर्लिङ्गं धर्मो यस्याः सेत्यर्थ इत्याहुः ॥ ६६ ॥

जातिं लक्षयति ।

**समानप्रसवात्मिका जातिः**(२) ॥ ६७ ॥

(१) न्यायसूचीनिबन्धे दर्शनेन न्यायतत्त्वालोके व्याख्यातत्वेन आकृ-ख्या इति तात्पर्यटीकालेखदर्शनेन चेदं सूत्रमिति प्रतीयते ।

(२) जातिलक्षणाय सूत्रम् । समानप्रसवात्मिका जातिरिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

प्रसवो लौकिकप्रत्यक्षात्मकं ज्ञानम् । समानमेकाकाराकलनं धर्मिविषयकं तादृशज्ञानं यस्मात् तादृश आत्मा स्वरूपं यस्याः सेत्यर्थः । तादृशज्ञाने लौकिकप्रत्यक्षरूपे विषयविधया जातेर्हेतुत्वसम्भवादिति भावः । एतेन तादृशजातौ प्रत्यक्षं प्रमाणं दर्शितम् । एवं च लौकिकप्रत्यक्षविषयमात्रसमवेतत्वं गोत्वादिजातिलक्षणम् । जातिसामान्यलक्षणं तु नित्यानेकसमवेतत्वमिति ॥ ६७ ॥

समाप्तं शब्दशक्तिपरीक्षाप्रकरणम् ॥

इति द्वितीयाध्यायस्य विभागपरीक्षाद्वारकसाङ्गप्रमाणपरीक्षणं द्वितीयमाह्निकम् ॥

इति द्वितीयोऽध्यायः ॥

इति द्वितीयाध्यायविवरणं समाप्तम् ॥



CC-0. In Public Domain. Digitized by eGangotri

# न्यायसूत्रविवरणे

## तृतीयोऽध्यायः ।

सपरिकरं प्रमाणं निरूप्य क्रमप्राप्तं प्रमेयं यथाविभागं परीक्षणीयमिति प्रथमत आत्मानं चैतन्याश्रयत्वेन परीक्षयति ।

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्**[1] ॥ १ ॥

दर्शनस्पर्शनाभ्यां चाक्षुषस्पार्शनज्ञानप्रकारेण । एकस्यैवार्थस्य वस्तुनो ग्रहणात् प्रत्यक्षात् । योऽहं घटं स्पृशामि सोऽहं घटमद्राक्षमितिप्रत्यक्षेणेन्द्रियव्यतिरिक्त आत्मा गृह्यते । इन्द्रियाणां चैतन्यस्वीकारे चक्षुरिन्द्रियस्य चाक्षुषवत्त्वं त्वचः स्पार्शनवत्त्वं स्वीकार्यम् । अन्यथोपहतनयनस्य स्पार्शनं कुष्ठादिरोगोपहतत्वचश्चाक्षुषं न स्यात् । एवं चैकस्य चाक्षुषस्पार्शनवत्त्वानुभवेन नेन्द्रियाणां तद्वत्त्वं सम्भवतीत्यतिरिक्त एक आत्मा सिध्यतीति भावः ॥ १ ॥

अत्र पूर्वपक्षमाह ।

**न विषयव्यवस्थानात्**[2] ॥ २ ॥

इन्द्रियस्य न चैतन्यविरहः । विषयव्यवस्थानात् विषयस्य चाक्षुषादिमत्त्वेनानुभूयमानस्य भेदात् । आत्मपदस्य

---

(१) एतत्सूत्रव्याख्यानावसरे अथ मन्यसे यावेतौ दर्शनस्पर्शनप्रत्ययौ तौ घटादिविषयौ न व्यतिरेकमात्मनो व्यधिकरणत्वाद् गमयत इति । न सूत्रार्थापरिज्ञानात् । दर्शनस्पर्शनप्रत्ययावेककर्तृकाविति सूत्रार्थ इति भावस्य भवित्रपेक्षत्वाद्धेति सूत्रार्थ इति च वार्त्तिकम् । सिद्धान्तसूत्रं दर्शनेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यनेन हि सूत्रेणेति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

(२) पूर्वपक्षसूत्रम् । न वि-त् । इति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

नानार्थकत्वमिष्टमेव । योऽहं स्पृशामि सोऽहमद्राक्षमित्यादिप्रत्ययस्तु गौरोऽहमित्यादिवद्भ्रम एवेति भावः ॥ २ ॥

समाधत्ते ।

**तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः**[१] ॥ ३ ॥

तद्व्यवस्थानादेव दर्शनस्पर्शनयोराश्रयभेदादेव इन्द्रियभेदादेवेति वा । आत्मसद्भावादतिरिक्तात्मस्वीकारावश्यकत्वादिन्द्रियाणां चैतन्यविरहप्रतिषेधो नेत्यर्थः । चक्षुरादौ प्रत्येकं विनिगमनाविरहेणानुमित्यादिस्वीकारासम्भवः । न च चक्षुरादेरनित्यत्वेन तद्विनाशे ऽप्यनुमित्याद्युत्पादात् श्रवणेन्द्रिय एव तत्स्वीकार इति वाच्यम् । श्रवणेन्द्रियस्याकाशस्य कर्णशष्कुल्यवच्छिन्नस्यैव तथात्वं वाच्यमन्यथा विनिगमनाविरहेण कालादावपि चैतन्यापत्तेरिति कर्णशष्कुल्युपघाते ऽनुमित्यनुत्पादापत्तेरिति भावः । अन्ये तु दर्शनस्पर्शनाभ्यामेकस्यार्थस्य विषयस्य ग्रहणात् । तथा च घटादिप्रत्यक्षं विनिगमनाविरहेण चक्षुस्त्वचोर्वक्तुमशक्यमित्यतिरिक्त आत्मा सिध्यति । श्रवणादीनां विषयभेदसत्त्वादेव दर्शनस्पर्शनमात्रोक्तिः । शङ्कते । न विषयव्यवस्थानात् । विनिगमनाविरहेण चक्षुस्त्वचोर्न चैतन्यस्वीकारो विषयव्यवस्थानात् चक्षुस्त्वचोरपि रूपस्पर्शयोर्विषययोर्भेदात् । एवं च रूपं पश्यामि न स्पृशामीत्यनुभवेन चाक्षुषात्मकविजातीयज्ञानस्य स्पर्शं स्पृशामि न पश्यामीतिप्रतीत्या स्पार्शनात्मकविजातीयज्ञानस्य च सिद्धौ चक्षुषि चाक्षुषस्य त्वचि त्वाचस्य स्वीकारेण न वि-

(१) विपर्ययसाधकत्वज्ञापनार्थं च तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेध इति सूत्रमिति वार्त्तिकम् । सौत्रे त्वयं सूत्रं तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेध इति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

निगमनाविरह इति भावः। इदमुपलक्षणम्। विषयैक्ये ऽपि ज्ञानवैलक्षण्येन विनिगमनासम्भव इति। समाधत्ते। तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः। विषयभेदादेवात्मातिरिक्तः स्वीकार्यः। अन्यथा चक्षुरादिबहिरिन्द्रियाणां नियमितमहत्त्वादिमद्वस्तुविषयकज्ञानजननस्वाभाव्यादतीन्द्रियपरमाण्वादिविषयकानुमित्यादिर्न स्यात् समवायिकारणाभावात् चक्षुरादेस्तदजनकत्वात्। न च चक्षुरादेश्चाक्षुषादिजनन एव विषयभेदव्यवस्था न त्वनुमित्यादाविति वाच्यम्। विनिगमनाविरहाच्चक्षुरादौ तत्स्वीकारासम्भवात्। एवं चाक्षुषाधीनं स्मरणं चक्षुषि स्वीकार्यं न त्वगादौ वैयधिकरण्येनासम्भवात्। तथा च चक्षुरुपघाते तत्स्मरणं न स्यादात्मनस्तु नित्यत्वान्नैष दोषः। मनसः स्मृत्यादिसमवायित्वसम्भवे ऽपि अग्रे दूष्यत्वादिति जन्यज्ञानत्वावच्छिन्नसमवायिकारणतयात्मा सिध्यतीति प्राहुः॥३॥

समाप्तमिन्द्रियभेदप्रकरणम्॥

इन्द्रियभेद आत्मनीत्यादिः॥

ननु गौरो ऽहं जानामीत्यादिप्रतीतिबलाच्छरीरमेव चेतनमस्तु किमतिरिक्तेनात्मनेत्यत आह।

## शरीरदाहे पातकाभावात्[१] ॥ ४ ॥

पातकपदं शरीरहेत्वदृष्टपरं तेन पुण्यपापलाभः। तथा च शरीरनाशे पुण्यपापयोरभावप्रसङ्गान्न शरीरमात्मेति पुण्यपापयोरभावे तदुत्तरकालीनभोगादिकं न स्यात् तद्बोधकशास्त्रादेरप्रामाण्यं च स्यात्। शास्त्रप्रामाण्यं च प्राग्व्यव-

(१) एतत्सूत्रव्याख्यानावसरे तदिदं सूत्रं यस्यात्मा नास्ति तस्यायं दोष इति दोषप्रतिपादनार्थमिति वार्त्तिकम्। सिद्धान्तसूत्रम्। शरीरदाह इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

स्थापितमेवेति भावः । शरीरस्य मृतशरीरस्य दाहे पातकाभावात् पापानुत्पत्तेः शरीरस्यात्मत्वे च तद्दाहे हिंसात्वेन पापं तत्कर्तुः स्यादिति भावः । हिंसायां पापं वदतां बौद्धानां मते ऽपि समाधानमिदं सम्भवतीति कश्चित् ॥ ४ ॥

शङ्कते ।

**तदभावः सात्मकप्रदाहे ऽपि तन्नित्यत्वात्[1] ॥ ५ ॥**

सात्मकस्यापि शरीरस्य नाशे तदभावप्रसङ्गः तन्नित्यत्वात् तस्य शरीरस्य नित्यत्वादावश्यकत्वात् । शरीरं विना भोगाभावेन शरीर एवादृष्टकल्पनादित्यर्थः । यद्वा तन्नित्यत्वात् तस्यात्मनो नित्यत्वान्निर्विकारत्वाज् जन्यधर्मानाश्रयत्वादिति यावत् । तथा च शरीरस्यादृष्टस्वीकारेण तदभावे भोगानुत्पत्तिप्रसङ्ग इति भावः । तन्नित्यत्वात् शरीरविशिष्टात्मव्यतिरेकस्य नियतत्वादित्यपि वदन्ति । सात्मकशरीरदाहे ऽपि तदभावः पापानुत्पादः । स्यादिति शेषः । तस्यात्मनो नित्यत्वाच्छरीरदाहकस्य पापानुत्पत्तेर्भवतैवोक्तत्वादिति भाव इति कश्चित् ॥ ५ ॥

शङ्कां निरस्यति ।

**न कार्याश्रयकर्तृबाधात्[2] ॥ ६ ॥**

न शरीरदाहे ऽदृष्टनाशः कार्यमदृष्टं तदाश्रयस्य कर्तुरात्मनः शरीरस्य नाशे बाधान्नाशाभावात् । तथा चात्मन्येवादृष्टं तदधीनोत्तरभोगस्तु शरीरान्तराश्रयणेनेति

(१) न्यायसूचीनिबन्धे दर्शनात् न्यायतत्त्वालोके व्याख्यातत्वात् तात्पर्यटीकायां तद-त् इति दर्शनादिदं सूत्रमिति प्रतीयते ।

(२) अस्यार्थस्य ज्ञापनाय न कार्याश्रयकर्तृवधादिति सूत्रमिति वार्त्तिकम् । वधादिति पाठोऽन्यत्रापि ।

CC-0. In Public Domain. Digitized by eGangotri

भावः। न सात्मकशरीरदाहे पापानुत्पादः कार्यं शरीरं तदाश्रयस्य तत्सम्बन्धस्य कर्तुरात्मनो बाधात्। तथा च शरीरविशिष्टात्मव्यतिरेकसाधनस्यैव पापजनकत्वादिति भाव इति कश्चित्। व्याख्यानमिदं चिन्त्यम्। प्राणवियोगानुकूलव्यापारस्यैव पापजनकत्वात् तदभावेन मृतशरीरदाहकस्य पापानुत्पादो जीवच्छरीरदाहकस्य पापोत्पत्तिश्चेति नात्मसिद्धिरिति सूत्रत्रयमसमञ्जसं स्यादिति ॥ ६ ॥

समाप्तं देहभेदप्रकरणम् ॥

आत्मनीति पूरणीयम् ॥

प्रसङ्गादाह।

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्**[1] ॥ ७ ॥

सव्येन वामेन दृष्टस्येतरेण दक्षिणेन चक्षुषा प्रत्यभिज्ञानादिति। वामगोलकावच्छिन्नचक्षुषा घटग्रहानन्तरं तदेवेदं घटग्राहकं चक्षुरितिदक्षिणचक्षुःप्रत्यभिज्ञानाच्चक्षुषोरभेदसिद्धिरित्यर्थः ॥ ७ ॥

ननु चक्षुषोरैक्ये कथं द्वित्वव्यवहार इत्यत आह।

**नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्**[2] ॥ ८ ॥

एकस्मिन्नेव चक्षुषि द्वित्वाभिमानाद् द्वित्वभ्रमात्

(१) सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्। सव्येन चक्षुषा दृष्टमितरेण प्रत्यभिजानातीति सूत्रमिति वार्त्तिकम्। अत एव सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादित्येतदवोच्यमानः? पूर्वोक्तमेवेन्द्रियभेदेऽपि प्रतिसन्धानं प्रकारान्तरेण सूत्रयति। इन्द्रियान्तरविकारादितीति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः।

(२) द्वित्वोपलब्धिप्रतिपादनार्थं नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानादिति सूत्रमिति वार्त्तिकम्। आदर्शपुस्तके नकाररहितः सूत्रपाठः।

CC-0. In Public Domain. Digitized by eGangotri

तद्व्यवहारः। नासास्थिव्यहितत्वमेव भ्रमजनको दोषः सेतुव्यवहितत्वमिव नद्याः ॥ ८ ॥

शङ्कते ।

**एकविनाशे द्वितीयाविनाशान्नैकत्वम्**[(१)] ॥ ९ ॥

एकविनाशे एकगोलकावच्छिन्नचक्षुर्नाशे द्वितीयस्यापरगोलकावच्छिन्नस्याविनाशादविनाशप्रत्ययान्न चक्षुरद्वैतम् । अत एव तदाश्रयस्य काणत्वं नान्धत्वं चेति व्यवहारः ॥ ९ ॥

शङ्कां निरस्यति ।

**अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः**[(२)] ॥ १० ॥

अवयवनाशेऽपि शाखाद्यवयवनाशेऽपि । अवस्थितावयवैः खण्डवृक्षाद्यवयव्यन्तरोपलब्धेरत्रापि एकगोलकावच्छिन्नावयवनाशे ऽपि गोलकान्तरावच्छिन्नावयवैश्चक्षुरन्तरोत्पत्तेर्नैकनाशे ऽप्यपरसत्ता चक्षुर्भेदसिद्धौ हेतुरित्यर्थः । न च शाखाद्यवयवनाशे ऽपि सोऽयं वृक्ष इतिप्रत्यभिज्ञानात् कथं खण्डवृक्षान्तरस्वीकार इति वाच्यम् । परिमाणभेदेन द्रव्यभेदात् । प्रत्यभिज्ञानं च यथावस्थितपूर्वावयवसमवेतत्वनिबन्धनम् । एवमवयवनाशस्य तत्संयोगनाशस्य चावयविनाशकत्वमन्यथाऽवयविनो नित्यत्वापत्तिः सर्वावयवनाशस्य तत्संयोगनाशस्य च तथात्वे गौरवादिति भावः । न च वृक्षादेरेकत्वस्य सिद्धत्वादवयवनाशे वृक्षान्तरस्वीकार इह तु द्वित्वग्रहेण भेदसिद्धिरस्तु ताह-

(१) न्यायसूचीनिबन्धे न्यायतत्त्वालोके च दर्शनात् तात्पर्यटीकायाम् एकत्वम् इति दर्शनाच्च सूत्रमिति प्रतीयते । नैकत्वमित्यादर्शपुस्तके नास्ति ।

(२) अवयवविनाश इति न्यायतत्त्वालोके पाठः । अस्यापि सूत्रत्वे युक्तिः पूर्वसूत्रवत् ।

CC-0. In Public Domain. Digitized by eGangotri

शद्वित्वग्रहस्य भ्रमत्वकल्पकाभावादिति वाच्यम् । चक्षुषि न प्रत्यक्षं प्रमाणं किं त्वनुमानं तत्र लाघवादेकस्यैव सिद्धेः। भेदप्रत्ययस्तु गोलकरूपाश्रयभेदेन नासास्थिव्यवधानेन च सम्भवतीति ॥ १० ॥

ननु वामचक्षुर्नष्टं दक्षिणं तु न नष्टमितिप्रतीत्या नाशप्रतियोगित्वतदभावयोर्विरोधेन चक्षुर्द्वयसिद्धा वृक्षादेर्दृष्टान्तस्य वैषम्यमित्यत आह ।

**दृष्टान्तविरोधादप्रतिषेधः(१) ॥ ११ ॥**

दृष्टान्तविरोधात् सुसदृशदृष्टान्तासत्त्वात् । अप्रतिषेधः चक्षुरद्वैतप्रतिषेधो नेत्यर्थः । तथा च यथा शाखाविशिष्टो वृक्षो नष्टो न तु मूलविशिष्ट इत्यत्र शाखानाशेन वृक्षनाशो न तु मूलनाशेनेति प्रतीयते तथा वामगोलकावच्छिन्नावयवनाशेन चक्षुर्नष्टं न तु दक्षिणगोलकावच्छिन्नावयवनाशेनेति प्रतीयत इति भावः ॥ ११ ॥

ननु कतिपयावयवनाशेनेन्द्रियान्तरं न दृष्टमित्यत आह ।

**इन्द्रियान्तरविकारात्(२) ॥ १२ ॥**

इन्द्रियान्तरस्य रसनादेरम्लद्रव्यादिभावनया विकारस्य दर्शनादित्यर्थः । इदमुपलक्षणम् । घर्षणादिना पूर्वचक्षुर्नाशेन चक्षुरन्तरोत्पादाच्च ॥ १२ ॥

---

(१) तस्योत्तरं दृष्टान्तविरोधादप्रतिषेध इति सूत्रमिति वार्त्तिकम् ।

(२) इदं तु न्यायतत्त्वालोके न धृतम् । न्यायसूचीनिबन्धे दृश्यते । तात्पर्यटीकायां तु इन्द्रि-त् इति सूत्रप्रतीकधारणरीतिर्दृश्यते । तात्पर्यपरिशुद्धिमतेऽपीदं सूत्रमिति ९सूत्रस्य टिप्पणी द्रष्टव्या । तदात्मगुणसद्भावादप्रतिषेध इतिसूत्रस्यवार्त्तिककारिकाव्याख्यानन्तरं तात्पर्यटीकाकृता एतेनेन्द्रियान्तरविकारादिति सूत्रं व्याख्यायेत्युक्तम् ।

CC-0. In Public Domain. Digitized by eGangotri

ननु येनेन्द्रियेण यद्विषयकानुभवो जातः स्मृतिरपि तद्विषयिका तदिन्द्रियजन्येति नियम इति पूर्वचक्षुषा दृष्टस्य कथं खण्डचक्षुषा स्मृतिरित्यत आह ।

न स्मृतेः स्मर्तव्यविषयत्वात्[1] ॥ १३ ॥

नोक्तदोषः । स्मृतेः स्मर्तव्यविषयत्वात् पूर्वानुभूतविषयत्वमात्रनियमात् । न तु तदिन्द्रियजन्यत्वनियमोऽपीति भावः ॥ १३ ॥

ननु स्मृतिसमवायित्वं तत्तदिन्द्रिये स्वीकार्यं तदन्यस्यानुपस्थितेरिति कथं पूर्वचक्षुर्नाशे स्मृत्युपपत्तिरित्यत आह ।

तदात्मगुणत्वसद्भावादप्रतिषेधः[2] ॥ १४ ॥

तस्याः स्मृतेरात्मगुणत्वसद्भावादात्मसमवायितयानुभवात् प्रतिषेधो यथोक्तप्रतिषेधो नेत्यर्थः । अनुभवाकारश्च स्मरामीत्यादिरूपः ॥ १४ ॥

अथ चक्षुरादिकं चाक्षुषादिसमवायि स्यात् स्मृत्यादिकं तु विषयसमवेतमस्तु चक्षुरादिनिष्ठत्वे पूर्वचक्षुरनुभूतस्य खण्डचक्षुषा स्मरणं न स्यात् । अनुव्यवसायस्तु अवच्छेदकतासम्बन्धेन शरीरे स्मृतिविषयक एव शरीरे आत्मत्वाभिमानात्मकश्चेत्यतो भाष्यकारसूत्रं यथा ।

---

(१) न्यायतत्त्वालोके नकाररहितः सूत्रपाठः । अस्याक्षेपसूत्रम् न स्म-त् इति तात्पर्यटीका ।

(२) एतत्सूत्रव्याख्यावसरे अथवा एकस्यानेकविषयोपलब्धिप्रतिसन्धानमनेन सूत्रेणोपदर्श्यत इत्युक्तं वार्त्तिककृद्भिः । परं तु तदेवं भाष्यमतेनेन्द्रियान्तरविकारादिति-सूत्रं व्याख्याय वार्त्तिककारः स्वमतेन व्याचष्टे अथवैकस्येति । उक्तमेव प्रतिसन्धानं पुनरिन्द्रियान्तरविकारद्वारेण दर्शयति सूत्रमित्यादितात्पर्यटीका द्रष्टव्या । न्यायतत्त्वालोकेऽपीदं व्याख्यातं न्यायसूचीनिबन्धेऽपि दृश्यते तात्पर्यटीकायां च तदा-धः इति सूत्रप्रतीकधारणरीतिर्दृश्यते । तदात्मगुणसद्भावादिति पाठोऽन्यत्र ।

CC-0. In Public Domain. Digitized by eGangotri

**अपरिसंख्यानाच्च स्मृतिविषयस्य[१] ॥ १५ ॥**

अपरिसंख्यानादानन्त्यात्। तथा च लाघवादतिरिक्त आत्मा कल्पनीयः। इदमुपलक्षणम्। स्मृतेरतीतादिविषयकत्वाच्छरीरस्यानित्यतया पूर्वशरीरानुभूतस्य खण्डशरीरे स्मरणं न स्यादन्यथा स्मृतेः पुरुषविशेषीयत्वनियामकाभावश्चेति। इदमपि सूत्रं मुनेरिति कश्चित् ॥ १५ ॥

समाप्तं चक्षुरद्वैतप्रकरणम् ॥

केचित्तु चक्षुर्द्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते। तत्र सिद्धान्तिनः सूत्रम्। सव्येति। शङ्कते। नैकस्मिन्निति। समाधत्ते। एकेति। शङ्कते। अवयवेति। निराकरोति। दृष्टान्तेति। शाखानाशे वृक्षनाशस्यावश्यकत्वाद् दृष्टान्तो न युक्तः। यद्वा दृष्टान्तगोलकभेदविरोधादन्यथानुपपन्नत्वात्। दृष्टं हि मृतस्य चक्षुरधिष्ठानगोलकद्वयं भेदेनैवोपलभ्यत इति वदन्ति। तच्चिन्त्यम् ॥

मनस्येव चैतन्यादिकमस्तु तस्य नित्यत्वेन स्मरणाद्युपपत्तिरित्याशङ्कते।

**नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात्[२] ॥१६॥**

अतिरिक्त आत्मा न कल्पनीयः। आत्मप्रतिपत्तिहेतूनामात्मसाधकलिङ्गानां ज्ञानादीनां मनसि सम्भवात् स्वीकारात् ॥ १६ ॥

शङ्कां निरस्यति।

**ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्[३] ॥१७॥**

(१) इदं तु न्यायतत्त्वालोके न्यायसूचीनिबन्धे वार्त्तिके च न धृतम्। वृत्तिकृतापि नेदं सूत्रं किं तु भाष्यमिति केचिदित्युक्तम्।

(२) तत्र पूर्वपक्षसूत्रं नात्मप्रतिपत्तिहेतूनां मनसि सम्भवादिति न्यायवार्त्तिककतात्पर्यपरिशुद्धावुदयनाचार्याः। पूर्वपक्षसूत्रं नात्मेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः।

(३) इदं न्यायसूचीनिबन्धे दृश्यते व्याख्यातं च न्यायतत्त्वालोके।

CC-0. In Public Domain. Digitized by eGangotri

ज्ञानसाधनोपपत्तेर्ज्ञानसाधनस्य जन्यज्ञानसामान्यकरणस्य उपपत्तेः स्वीकारात् । संज्ञाभेदमात्रं संज्ञाभेदस्य चाक्षुषादिरूपस्य मात्रं नियमः । अन्यथा चक्षुःसन्निकृष्टस्य त्वगादिसन्निकर्षे चाक्षुषत्वाचादेर्युगपदुत्पादप्रसङ्ग इति यत्संयुक्ततया चक्षुरादिकं चाक्षुषाद्युपधायकं तदेव मनः । तस्य महत्त्वे चक्षुस्त्वगादौ युगपत्संयोगसम्भवेन तद्दोषतादवस्थ्यमिति तस्याणुत्वं स्वीकार्यं तस्य च चैतन्यस्वीकारे चैतन्यस्याप्रत्यक्षापत्तिःसाक्षात्परम्परया वा महत्त्वशन्यत्वादिति महत्त्वाश्रयश्चेतनोऽवश्यं स्वीकार्य इति । अथवा ज्ञानसाधनस्य सुखादिप्रत्यक्षासाधारणकारणस्य स्वीकारात् ज्ञातुः संज्ञाभेदमात्रमात्मेति संज्ञामात्रम् । अतः सातत्यगमने इति सर्वे गत्यर्था ज्ञानार्थाश्चेतिस्मरणात् । व्युत्पत्तिसिद्धमिति शेषः । इत्थं च सुखादिप्रत्यक्षमिन्द्रियकरणकं प्रत्यक्षत्वादित्यनुमानेनेन्द्रियकरणकत्वसिद्धौ पक्षधर्मताबलान्मनः सिध्यति । ततश्च मनः सकर्तृकं करणत्वाद् वास्यादिवदित्यनुमानेन मनोभिन्नस्य कर्तुः सिद्धिः । तादृशकरणस्य मनःपदवाच्यता श्रुत्यादितः सिद्धेति भावः ॥ १७ ॥

ननु व्यासङ्गानुरोधान्न मनः स्वीक्रियते चाक्षुषादीनां यौगपद्यनिरासश्च एकतरसामग्र्या अपरफलप्रतिबन्धनियमाधीन इत्यत आह ।

**नियमश्च निरनुमानः**(१) ॥ १८ ॥

एकतरसामग्रीदशायामपरसामग्र्या फलानुत्पादनियमश्च निरनुमानोऽनुमानादिना न निर्णेय इत्यर्थः । (यथा वायोरतीन्द्रियत्वे ऽपि तद्गतस्पर्शादेः प्रत्यक्षत्वमभ्युपेयते

(१) इदमपि पूर्ववत् ।

CC-0. In Public Domain. Digitized by eGangotri

तथा मनसोऽतीन्द्रियत्व ऽपि तद्गतज्ञानसुखादेः प्रत्यक्षत्वमभ्युपेयते। वस्तुतो मानसेतरप्रत्यक्ष एव महत्त्वस्य हेतुता वाच्येति मनसोऽपि नातीन्द्रियत्वं द्रव्यमानसे महत्त्वेन हेतुतया न परमाण्वादीनां मानसप्रत्यक्षविषयतेति तस्यापि सुखाद्याश्रयस्याणुत्वे एकदा कराद्यवच्छेदेन सुखस्य पादाद्यवच्छेदेन दुःखस्य चानुत्पादापत्तेः मनसोऽणुत्वेन एकदा करचरणयोरसंयुक्तत्वात् असंयुक्तस्य चावच्छेदकत्वासम्भवादिति। एवमात्मनो विभुत्वे श्रुतिरपि मानमस्तीति )[१] ॥ १८ ॥

समाप्तं मनोभेदप्रकरणम् ॥

आत्मनोति शेषः ॥

सिद्धे चात्मनि तदनादित्वं विना संसारानुपपत्तिरनादित्वे च तस्य भावतया नित्यत्वमिति जन्मान्तरीयानुभूतस्य स्मरणोपपत्तिरित्यभिप्रायेणाह।

**पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः[२] ॥ १९ ॥**

जातस्य बालकस्य पूर्वाभ्यस्तानां पूर्वजन्मानुभूतवस्तूनां स्मृत्यनुबन्धात् स्मरणाधीनप्रवृत्त्यादितो ये हर्षादयस्तेषां हास्यरोदनादितः सम्प्रतिपत्तेर्दर्शनात्। आत्मनः स्थिरत्वमिति शेषः। एकस्यानुभवाधीनान्यस्मरणस्वीकारेऽतिप्रसङ्ग इति भावः॥ १९ ॥

ननु हास्यादयो लोकानां क्रियाविशेषाधीना एव पद्मादीनां विकाशा इवेति कथं तन्निमित्ततया हर्षादयस्त-

(१) ( ) एतन्मध्यस्थग्रन्थस्याभिप्रायश्चिन्तनीयः।

(२) पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेरिति सूत्रमिति वार्त्तिकम्। सिद्धान्तसूत्रम्। पूर्वाभ्यस्तेत्यादि न्यायतत्त्वलोके वाचस्पतिमिश्राः।

CC-0. In Public Domain. Digitized by eGangotri

न्निमित्ततया च प्रागनुभूतस्मरणादयः स्वीकार्या इत्याशङ्कते ।

**पद्मादिषु प्रबोधसम्मीलनविकारवत् तदुपपत्तेः[1] ॥ २० ॥**

तदुपपत्तेः हास्याद्युत्पत्तेः ॥ २० ॥

सिद्धान्तमाह ।

**नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम्[2] ॥ २१ ॥**

पाञ्चभौतिकपद्मादीनां विकाशमुद्रादिरूपा ये विकारास्तेषामुष्णादिकालनिमित्तकत्वात् तथैव तेषामन्वयव्यतिरेकात् । मनुष्यादीनां मुखविकाशादौ कालविशेषस्यानियतत्वात् हर्षविषादादिनियतत्वाच्च न पद्मविकाशादिदृष्टान्तेन हर्षादिकमन्तरेण मुखविकाशादिसम्भव इत्यर्थः ॥ २१ ॥

हेत्वन्तरमाह ।

**प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्[3] ॥ २२ ॥**

प्रेत्य मृत्वा जातमात्रस्य बालकस्याहाराभ्यासकृतात् प्राग्जन्मभवस्याहारस्याभ्यासो यत इष्टसाधनता-

(१) पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकार इति वार्त्तिकादिषु पाठः । विकारे तद्विकार इति न्यायतत्त्वालोके पाठः । एतद्व्याख्यावसरे अनित्ये ऽपि विकारदर्शनादनेकान्त इति सूत्रार्थ इति वार्त्तिकम् ।

(२) एतद्व्याख्यानावसरे नायमाकस्मिकः पद्मादिप्रबोधसम्मीलनविकार इति सूत्रार्थ इति वार्त्तिकम् ।

(३) एतत्सूत्रव्याख्यानावसरे किमर्थं पुनरिदं सूत्रमारभ्यते यदायमर्थः पूर्वाभ्यस्तसूत्रे ऽवगतः । सामान्यतोऽवगतस्य विशेषज्ञापनार्थं सूत्रमित्यदोष इति वार्त्तिकम् ।



CC-0. In Public Domain. Digitized by eGangotri

दिधीनिचयात् तत्कृतस्तज्जनितसंस्कारात् जीवनादृष्टो-दूबोधितात् समुत्पन्नेष्टसाधनतादिधीजनित एवंभूतात् स्त-न्याभिलाषात् स्तन्यपानादिप्रवृत्तेः। अभिलाषपदेन तत्-कार्यप्रवृत्तिबोधनात्। अभ्यासोपन्यासात् पुनःपुनः स्मर-णाद् दृढतरः संस्कारो जायत इत्यभियुक्तवचनात् संस्का-रस्य दृढतरत्वं लभ्यते। दृढतरत्वं च झटित्युद्बोधकसमव-हितत्वम्। तादृशाभ्यासश्च जातमात्रस्य प्रवृत्तिदर्शनेन कल्प्यः। कथमन्यथा तस्येष्टसाधनताधीरनुमानादीनां का-लविलम्बसाध्यत्वादिष्टसाधनादिधियं च विना प्रवृत्त्यनु-पपत्तेरित्यात्मनोऽनादित्वेन नित्यत्वमिति भावः ॥ २२ ॥

शङ्कते।

अयसोऽयस्कान्ताभिगमनवत् तदुपसर्प-णम्[1] ॥ २३ ॥

अयसो लौहस्य अयस्कान्तो मणिविशेषस्तत्सन्नि-धाने तदभिमुखगमनवत् तदुपसर्पणं बालकस्य सन्निधाने स्तनाभिमुखसर्पणम्। न च तत्रेष्टसाधनतादिज्ञानापेक्षेति भावः ॥ २३ ॥

समाधत्ते।

नान्यत्र प्रवृत्त्यभावात्[2] ॥ २४ ॥

नोक्तदूषणमन्यत्र अन्यदा प्रवृत्त्यभावात्। स्तनस-न्निधानस्य तदुपसर्पणहेतुत्वे क्षुन्निवृत्तावपि तदुपसर्पणं स्यादिति भावः ॥ २४ ॥

---

(१) प्रवृत्तिमात्रस्य नैकान्तिकत्वज्ञापनार्थमयसोऽयस्कान्ताभिगमनवत् तदुपस-र्पणमिति सूत्रमिति वार्त्तिकम्।

(२) नान्यत्र प्रवृत्त्यभावादिति सूत्रमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदय-नाचार्याः। आकस्मिकत्वप्रतिषेधार्थं च नान्यत्र प्रवृत्त्यभावादिति सूत्रमिति वार्त्तिकम्।

CC-0. In Public Domain. Digitized by eGangotri

न केवलं मनुष्य एव जातमात्रः स्तन्यपानादौ प्रवर्तते पश्वादयोऽपि जातमात्राः कणादिभक्षणे प्रवर्तन्त इत्याह ।

**वीतरागजन्मादर्शनात्**[1] ॥ २५ ॥

रागशून्यस्य जन्मादर्शनात् । रागश्च जातमात्रस्य प्राग्भवीयेष्टसाधनताज्ञानाधीन एवेति भावः ॥ २५ ॥

ननु प्रवृत्तिरागादयो गुणा एव तथा च यथा घटोत्पत्त्यनन्तरमेव तत्र रूपादिगुणोत्पत्तिस्तथा आत्मन उत्पत्त्यनन्तरमेव तत्र रागादिगुणोत्पत्तिः स्यादिति कथमात्मनोऽनादित्वमित्याशङ्कते ।

**सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः**[2] ॥ २६ ॥

सगुणद्रव्यं घटादि । तदुत्पत्तिः सरागात्मोत्पत्तिः ॥ २६ ॥

समाधत्ते ।

**न सङ्कल्पनिमित्तत्वाद्रागादीनाम्**[3] ॥ २७ ॥

नात्मोत्पत्त्यनन्तरं तत्र रागाद्युत्पत्तिः सङ्कल्पो ज्ञानं सुखसाधनतादिज्ञानमिति यावत् । तन्निमित्तत्वात् तद्धेतुकत्वात् । रागादीनामित्यत्रादिपदेन द्वेषादिपरिग्रहः । रागे इष्टसाधनताज्ञानादेर्द्वेषे च द्विष्टसाधनताज्ञानादेश्च हेतुत्वमावश्यकमन्यथा रागादेरात्मनि नियतत्वे सर्वदैवैकत्र प्रवृत्तिनिवृत्त्यापत्तेः । एवं रागस्य प्रवृत्तिहेतुत्वं द्वेषस्य निवृत्तिहेतुत्वं प्रवृत्तेश्च चेष्टाहेतुत्वमन्वयव्यतिरेकादिना क-

(१) एतद्व्याख्यावसरे नाभिप्रायापरिज्ञानात् । नैवमभिप्रायःकारणनियमेन रागोऽपिं तु पूर्वशरीरसम्बन्धप्रतिपादनं सूत्रार्थं इति वार्त्तिकम् ।

(२) सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिरित्यनैकान्तिकपक्षे सूत्रमिति वार्त्तिकम् ।

(३) इदं तु न्यायसूचीनिबन्धे वर्तते व्याख्यातं च न्यायतत्त्वालोके ।

CC-0. In Public Domain. Digitized by eGangotri

ल्प्यमिति जातमात्रस्य चेष्टादर्शनेन रागादिकं कल्प्यं तेन च प्राग्भवीयेष्टसाधनतादिज्ञानं कल्प्यमित्यनादित्वमात्मन इति भावः। इदमुपलक्षणम्। सरागात्मन आकस्मिकत्वे तद्वैचित्र्यं क्रमिकत्वं च न स्यादिति ॥२७॥

समाप्तमनादिनिधनप्रकरणम् ॥

आत्मन उत्पत्तिविनाशराहित्यप्रकरणमित्यर्थः ॥

क्रमप्राप्तेऽर्थे परीक्षणीये प्रत्यक्षतया मानुषादिशरीरं पार्थिवतया परीक्षयति।

## पार्थिवं गुणान्तरोपलब्धेः(१) ॥ २८ ॥

प्रकरणक्रमेण पक्षतया शरीरस्य लाभः। तत्र च प्रसिद्धतया मानुषादिशरीरमेव पक्षः पर्यवसितः। पार्थिवं पृथिवीसमवायिकारणकं पृथिवीति यावत्। गुणान्तरस्य तेजआदिव्यावृत्तगन्धनीलरूपादेरुपलब्धेरित्यर्थः ॥ २८ ॥

मतान्तरमाह।

## पार्थिवाप्यतैजसं तद्गुणोपलब्धेः(२) ॥ २९ ॥

मानुषादिशरीरं पृथिवीजलतेजःसमवायिकारणकं तद्गुणोपलब्धेः तेषां पृथिवीजलतेजसां ये गुणा गन्धस्नेहोष्णस्पर्शास्तेषामुपलब्धेरित्यर्थः। श्रुतिरपि। सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतंत्रिवृतमेकैकं करवाणीति। ईक्षित्वा सा परमा देवता सृष्टानां देवतानां

(१) पार्थिवं तद्विशेषगुणोपलब्धेरितिसूत्रस्यावतार इति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः। तत्र चायमेव पाठः। सिद्धान्तसूत्रमिति वृत्तिकृतः।

(२) मतान्तराभिधानाय त्रिसूत्रीति वृत्तिकृतः। अन्यथासिद्धज्ञानपूर्वकाणि पूर्वपक्षसूत्राणीति न्यायतत्त्वालोके वाचस्पतिमिश्राः। न्यायसूचीनिबन्धेऽप्येतानि वर्तन्ते।

CC-0. In Public Domain. Digitized by eGangotri

तेजोऽबन्नात्मिकानां मध्ये एकैकं देवतां त्रिवृतं त्रिरूपां-त्रिरूपामकरोत् । त्रिवृत्करणं नाम तेजोऽबन्नानां त्रयाणा-मेकैकं द्विधा संविभज्य पुनरेकैकभागस्य द्विधा विभागं कृत्वा स्वस्वद्वितीयं स्थूलभागं परित्यज्यान्यदीयस्थूलभा-गयोरेकैकस्य योजनम् ॥ २९ ॥

मतान्तरमाह ।

निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्[1] ॥ ३० ॥

निःश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषौ । तथा चैतादृशकार्येण तत्कारणवायोरपि शरीरघटकत्वम् ॥ ३० ॥

मतान्तरमाह ।

गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्च-भौतिकम्[2] ॥ ३१ ॥

क्लेदो जलविशेषो जलविशिष्टपृथिवी वेत्युभयथापि जलमावश्यकम् । पाकस्य तेजःसंयोगाधीनत्वात् तेजः-सिद्धिः । व्यूहो निःश्वासादिः । अवकाशदानं छिद्रम् । न चास्मिन् पक्षे त्रिवृत्करणश्रुतिविरोधः तस्य च पञ्ची-करणोपलक्षकत्वात् । यद्वा आकाशस्य सर्वावकाशतया सर्वाव्यतिरेकाद् वायोश्च सर्वचेष्टाहेतुत्वेन सर्वाविना-भूतत्वात् तयोस्तेजःप्रभृतिष्वन्तर्भावं सिद्धवत् कृत्वा त्रिवृत्करणं प्रयोगसौकर्यार्थं श्रुतिराहेति । एतन्मतत्रयं दूषितं भाष्यकारैः । अत्र सन्निहितानां तद्गुणोप-लब्धेरिति भाष्यसिद्धान्तः । अत्र शरीरे सन्निहितानां

(१) पूर्वसूत्रटिप्पणी द्रष्टव्या ।
(२) पूर्वपूर्वसूत्रटिप्पणी द्रष्टव्या ।

CC-0. In Public Domain. Digitized by eGangotri

निमित्तीभूतानां संयुक्तानां जलादीनां तद्गुणोपलब्धेः स्नेहादिगुणोपलब्धेरित्यर्थः। अत्रायमाशयः। एकस्मिन् शरीरे पृथिवीत्वादिनानाजातिस्वीकारे साङ्कर्यप्रसङ्गो द्रव्यस्य विजातीयद्रव्यानारम्भकत्वनियमभङ्गश्च। नापि पृथिव्यादिभिर्विचित्रं द्रव्यं शरीरं जन्यते मानाभावात्। न च त्रिवृत्करणश्रुतिरेव मानमिति वाच्यम्। जलादीनां निमित्ततयैव श्रुतेरुपपत्तेः। एवमाकाशस्य रूपादिराहित्येनैकत्वेन च नारम्भकत्वं वायोरपि नीरूपतया तत्त्वम्। नापि तज्जलमात्रारब्धं नियतगन्धवत्त्वानुपपत्तेः क्लेदादिरहिते ऽपि शरीरव्यवहारात्। अत एव न तत् तैजसं किंतु मानुषादिशरीरं पार्थिवमेवेति। न च क्लेदोष्मादेरुपचयापचये शरीरोपचयापचयानुपपत्तिः क्लेदोष्मादेरवयवाघटकत्वादिति वाच्यम्। क्लेदादेरवयवाघटकत्वे ऽपि तद्योगे शिथिलसंयोगापन्नावयवैः शरीरस्थूलतादि तदयोगे कार्श्यादि तथान्यत्र दर्शनादिति। जलादीनां निमित्ततया प्रवेशादेव पाञ्चभौतिकत्वेन व्यपदिश्यत इति॥ ३१॥

एवं तस्य पार्थिवत्वे श्रुतिरपि मानमित्याह।

श्रुतिप्रामाण्याच्च[1] ॥ ३२ ॥

सूर्यं ते चक्षुः स्पृणोमीतिमन्त्रान्ते पृथिव्यां ते शरीरमिति हि श्रुतिः। तत्र पृथिव्यां शरीरस्य लयाभिधानेन पृथिव्या एव शरीरारम्भकत्वं प्रकृतावेव कार्यविलयादिति। एवं वरुणलोके जलीयं स्वर्गे तैजसं वायुलोके वायवीयं शरीरम्। तेष्वपि पृथिव्याद्युपष्टम्भोऽन्यथा भोगसाधनानुपपत्तिरित्याह भाष्यम्। आप्यतैजसवायव्यानि लोकान्तरे शरीराणि तेष्वपि भूतसंयोगः पुरुषार्थतश्च

(१) इदं तु न्यायसूचीनिबन्धे वर्तते व्याख्यातं च न्यायतत्त्वालोके।

CC-0. In Public Domain. Digitized by eGangotri

इति । भूतसंयोगः पृथिव्युपष्टम्भः । पुरुषार्थतन्त्रो भोगसम्पादक इति ॥ ३२ ॥

समाप्तं शरीरपरीक्षाप्रकरणम् ॥

अथेन्द्रियाणि गोलकातिरिक्तत्वेन भौतिकत्वेन च परीक्षणीयानि । तत्र संशयमाह ।

**कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात् संशयः(१) ॥ ३३ ॥**

कृष्णसारे चक्षुर्गोलके सति विषयोपलम्भात् । असति च तस्मिन्ननुपलम्भादिति पूरणीयम् । चकारेण वा व्यतिरेकदर्शनम् । गोलकमेवेन्द्रियमिति बौद्धाः । व्यतिरिच्य गोलकान्निर्गत्य विषयं प्राप्येन्दियेणोपलम्भाद् विषयोपलम्भादन्यथा नेति गोलकातिरिक्तमिन्द्रियमिति विशेषदर्शिन इति तटस्थानां संशयो गोलकमिन्द्रियं न वेति इन्द्रियं गोलकातिरिक्तं न वेति । अत्र व्यतिरिच्य चेत्यादिविशेषविवेचने बौद्धमतनिरासान्न संशय इति सूत्रतात्पर्यम् । तथाहि गोलकं न विषयग्राहकं तदसम्बन्धात् तदसम्बद्धेन तद्ग्रहणे ऽतिप्रसङ्गात् । तथा च विषयसाक्षात्कारकरणस्यैवेन्द्रियत्वाद् गोलकस्य चातत्त्वेन नेन्द्रियत्वमिति सिद्धमिन्द्रियं गोलकातिरिक्तम् ॥ ३३ ॥

तत्रातिरिक्तत्वे ऽपि न भौतिकत्वं किं त्वाहङ्कारिकत्वमितिसांख्यमतमाह ।

**महदणुग्रहणात्(२) ॥ ३४ ॥**

---

(१) संशयकारणप्रतिपादनार्थं सूत्रम् कृष्णसार इत्यादि वार्त्तिकम् । विप्रतिपत्तिहेतुप्रदर्शनाय सूत्रम् कृष्णसार इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) सांख्यसूत्रं महदणुग्रहणादिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

महतो वस्तुनोऽनुग्रहणात् चक्षुषा साक्षात्कारजननाचक्षुर्न भौतिकम् । भौतिकत्वे हि न्यूनपरिमाणेन चक्षुषा महतो व्यापनासम्भवेन तत्साक्षात्कारानुपपत्तिरिति । अथवा महदणुग्रहणादिति पाठः । अणोर्न्यूनपरिमाणस्य यथा चक्षुषा ग्रहणं तथाऽधिकपरिमाणस्यापि ग्रहणादित्यर्थः । तत्र महतो ग्रहणं चक्षुषो भूतत्वे न सम्भवतीत्युक्तम् । केचित्तु पूर्वसूत्रं संशयप्रदर्शनपरम् । तत्र बौद्धनिरासेन संशयनिरासकमिदं सूत्रम् । तथा च कदाचिन्महतः कदाचिदणोश्च ग्रहणाद् विषयेन्द्रियसम्बन्ध एव नियामको वाच्य इति गोलकस्य तद्बाधात् तदतिरिक्तमिन्द्रियं स्वीकार्यं यत्सम्बन्धासम्बन्धाभ्यां विषयग्रहणाग्रहणनियम इति । नन्वतिरिक्तत्वे ऽपि कथं तत्सम्बन्धोऽतिरिक्तमपि किं कूपान्तर्गतमुत नेत्यत आह । रश्म्यर्थेतीति प्राहुः । अभौतिकानीन्द्रियाणीत्यवतारभाष्यं सूत्रादौ केचिल्लिखन्ति ॥ ३४ ॥

सिद्धान्तयति ।

**रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम्**[१] ॥ ३५ ॥

रश्मि चक्षुर्गोलकावच्छिन्नं तेजः तेनार्थस्य घटादे रूपादेश्च सन्निकर्षविशेषः संयोगसंयुक्तसमवायादिरूपस्तस्मात् । तद्ग्रहणं महदादिवस्तुग्रहणम् । दीपान्महदणुप्रकाशवद् भौतिकत्वे ऽपि सर्वव्यापकत्वमङ्गीकार्यमन्यथा तद्दोषतादवस्थ्यम् । तथा च पुरःपश्चाद्वर्तिनां सर्वेषामेव वस्तूनां ग्रहणप्रसङ्ग इति भावः ॥ ३५ ॥

(१) नैयायिकः सांख्यं दूषयति । रश्म्य-नम् इति तात्पर्यटीका । सिद्धान्तसूत्रम् । रश्म्यर्थेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

गोलकातिरिक्तेन्द्रियस्य बाधमाशङ्कते बौद्धः ।

**तदनुपलब्धेरहेतुः**[1] ॥ ३६ ॥

तद् गोलकातिरिक्तमिन्द्रियम् । न हेतुः न साक्षात्कारकारणम् । अनुपलब्धेः अनुपलब्धिबाधितत्वात् । परेषामसतोऽपि भानान्नाश्रयासिद्धिः । अथवा गोलकातिरिक्तं न साक्षात्कारकारणमिन्द्रियं तत्त्वेनाप्रतीयमानत्वादिति ॥ ३६ ॥

समाधत्ते ।

**नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः**[2] ॥ ३७ ॥

अनुमीयमानस्य रूपादिसाक्षात्कारः सकरणको बुद्धित्वादित्याद्यनुमानगम्यस्यायोग्यस्य वस्तुनः । प्रत्यक्षतोऽनुपलब्धिः साक्षात्काराभावः । नाभावहेतुः न सर्वकालवृत्त्यभावग्राहक इत्यर्थः । तथा च योग्यानुपलब्धिरेवाभावग्राहिका न त्वनुपलब्धिमात्रम् । योग्यता च महत्त्वे सत्युद्भूतरूपवत्त्वं निरुक्तरश्मेश्चोद्भूतरूपविरहान्न योग्यत्वमिति तदनुपलब्धिर्न तदभावसाधिकेति भावः ॥ ३७ ॥

ननु महतो द्रव्यस्य चक्षुषः कुतो नोपलम्भ इत्यत आह ।

**द्रव्यगुणधर्मभेदाच्चोपलब्ध्यनियमः**[3] ॥ ३८ ॥

---

(१) तदनुपलब्धेरहेतुः । न चाक्षुषो रश्मिर्विद्यत इति सूत्रार्थ इति वार्त्तिकम् ।

(२) एवं तर्हीदं सूत्रं नोपलब्धेः कारणप्रतिपादकमिति वार्त्तिकम् ।

(३) उपलब्ध्यनियम इत्यन्यत्र पाठः । इदं न्यायसूत्रीनिबन्धे दृश्यते न्यायतत्त्वालोके च व्याख्यातम् । द्रव्यगुणधर्मभेदाच्चोपलब्ध्यनियम इति । शेषं भाष्य इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

द्रव्यमात्रस्योपलब्धिनियमो न द्रव्यगुणधर्मभेदात् द्रव्यगुणधर्मविशेषाणां प्रत्यक्षनियामकत्वात् । तत्र द्रव्यधर्मो महत्त्वरूपादिकं, गुणधर्म उद्भूतत्वादिः तथा चोद्भूतरूपवत्त्वविरहादेव न चक्षुषः प्रत्यक्षं तादृशरूपविरहश्च प्रत्यक्षाभावादनुमेयः । यद्वा द्रव्यधर्मो महत्त्वोद्भूतरूपादिर्गुणधर्मोऽदृष्टभिन्नत्वादिः । उपलब्ध्यनियमो द्रव्यमात्रस्य गुणमात्रस्य च न प्रत्यक्षनियमः । चकारात् क्रियादीनामप्येवमनियमः(१) ॥ ३८ ॥

ननु चक्षुरादावुद्भूतरूपमेव कुतो न स्वीक्रियत इत्यत आह ।

**कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः(२) ॥ ३९ ॥**

कर्मणे कार्याय प्रत्यक्षात्मककार्याय कारितः स्वीकृत इन्द्रियाणां व्यूहो रचनाविशेषः समूह इति वा । पुरुषार्थसाधक इत्यर्थः । तथा च प्रयोजनविरहेणोद्भूतरूपं न स्वीक्रियत इति भावः । केचित्तु कर्मकारितोऽदृष्टविशेषाधीन इत्यर्थः । तथा चादृष्टविशेष एवोद्भूतरूपविरहे प्रयोजक इत्याहुः । सूत्रमिदं भाष्यकारस्येति केचित्(३) ॥ ३९ ॥

(१) अत्र अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिरित्येकं सूत्रं न्यायसूचीनिबन्धे दृश्यते । न्यायतत्त्वालोके तु तत्र कणादसम्मतिप्रदर्शनाय तत्सूत्रम् महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरिति दृश्यते । एवं च सूत्रमिति वार्त्तिकम् । काणादसूत्रे तु अ॰ ४ आ॰ १ सू॰ ८ दृश्यते ।

(२) एतत्प्रतीकधारणानन्तरं शेषं भाष्य इति वार्त्तिकम् । व्याख्यातमिदं न्यायतत्त्वालोके वर्तते च न्यायसूचीनिबन्धे ।

(३) अत्र न्यायसूत्रोद्धारे अव्यभिचाराच्च प्रतिघातो भौतिकधर्म इत्येकमधिकं सूत्रं दृश्यते तत्तु वृत्तौ न्यायतत्त्वालोके न्यायसूचीनिबन्धे च नास्ति । वार्त्तिके तु अव्यभिचारी चेति पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

ननु महत्त्वे सति रूपवत्त्वमेव प्रत्यक्षप्रयोजकमस्तु किमर्थमुद्भूतत्वं रूपविशेषणमित्यत आह ।

**मध्यन्दिनोल्काप्रकाशानुपलब्धिवत् तदनुपलब्धिः**[1] **॥ ४० ॥**

महतो रूपवतश्चोल्काप्रकाशस्य मध्याह्नसम्बन्धिनः सौरालोकेनाभिभवादनुपलब्धिवत् तस्य चक्षुषोऽनुपलब्धिरित्यर्थः । तथा च रूपमात्रस्य व्यभिचारेण न प्रत्यक्षहेतुना । व्यभिचारवारणाय यद्यनभिभूतत्वं रूपविशेषणमुच्यते तदा प्रत्यक्षकरणतया सिद्धस्य चक्षुरादेर्व्यभिचारवारणायानुद्भूतत्वमपि रूपविशेषणं देयमिति भावः ॥४०॥

ननु चक्षुषो रूपे सौरालोकाभिभवादेव न प्रत्यक्षमित्येव किं नोच्यत इत्यत आह ।

**न रात्रावप्यनुपलब्धेः**[2] **॥ ४१ ॥**

न चक्षूरूपं सौरालोकेनाभिभूतत्वेनाप्रत्यक्षं रात्रावप्यनुपलब्धेः । तथा च चक्षुषो रात्रावनुपलब्धिसम्पादनाय तद्रूपस्यानुद्भूतत्वमेव स्वीकार्यमिति भावः ॥ ४१ ॥

दिवसेऽपि चक्षुषो रूपस्य सौरालोकाभिभवो न भवतीत्याह ।

**बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः**[3] **॥ ४२ ॥**

(१) इदं तु न्यायतत्त्वालोके व्याख्यातम् न्यायसूचीनिबन्धेऽपि दृश्यते ।

(२) तदेतदुत्तरद्वाऽङ्कं सूत्रं न रात्रावप्यनुपलब्धेरिति वार्त्तिकम् । न रात्रावपीति-सूत्रमतादिति तात्पर्यटीका ।

(३) एतत्प्रतीकधारणानन्तरं दृष्टान्तस्थान एवैतत् सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

न अभिव्यक्तिर्यत इतिव्युत्पत्त्या कार्याभावप्रयोजकतया कारणाभावस्य क्लृप्तत्वादनभिव्यक्तिपदेन उद्भूतरूपविरहो बोध्यते। तेन चक्षुषोऽनुपलब्धिर्न त्वभिभवात्। अभिभवे बाधकमाह। बाह्यप्रकाशानुग्रहात्। सौरालोकादिसहकृताच्चक्षुष इति शेषः। विषयोपलब्धेरित्यर्थः। सौरालोकाभिभूतत्वे तत्सहकारेण प्रत्यक्षजननं न स्यादभिभूतस्य कार्याक्षमत्वात्। उद्भूतरूपवत्त्वे चक्षुरालोकाद्विषयप्रकाशसम्भवेनेतरालोकापेक्षा न स्यादिति भावः ॥ ४२ ॥

नन्वभिभूतस्यापि भर्जनकपालस्थवह्नेर्दाहजनकत्वं दृष्टं तथाभिभूतस्य चक्षुषो विषयग्राहकत्वं कल्प्यम्। एवमनभिभूतालोकसंयोगस्यैव विषयप्रकाशकत्वं वाच्यं नातो वह्निप्रकाशानपेक्षा तथाऽभिभवश्च दिवसे सौरालोकेनेव रात्रावपि केनचिद्वस्तुना कल्पनीय इत्यत आह।

## अभिव्यक्तौ चाभिभवात्[1] ॥ ४३ ॥

अभिव्यक्तिमात्रे भवन्मतेऽभिभवकल्पनात्। अभिव्यक्तिश्च स्वस्येव परस्यापि न सम्भवति तत्प्रयोजकस्यानभिभूतत्वाभावात्। स्वाभिव्यक्तौ तस्य प्रयोजकत्वकल्पने गौरवादन्यथा भर्जनकपालस्थवह्निना परप्रकाशो भवेत्। एवं रात्रावभिभावकवस्त्वन्तरकल्पने गौरवम्। एवमुष्मादेरप्रत्यक्षाय प्रत्यक्षप्रयोजकमुद्भूतत्वं क्लृप्तं तद्विरहादेव चक्षुषोऽनुपलब्धिः। ननु चक्षुषस्तैजसत्वे किं मानमिति चेत् चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवदित्यनुमानेनैव तत्सिद्धेः। तत्र मन-

(१) इदं तु न्यायतत्त्वालोके व्याख्यातत्वात् न्यायसूचीनिबन्धे सत्त्वात् अभि-त् इति तात्पर्यटीकायां सूत्रप्रतीकधारणारीतेश्च सूत्रमिति प्रतीयते।

CC-0. In Public Domain. Digitized by eGangotri

आदौ व्यभिचारवारणाय सत्यन्तम् । घटादौ व्यभिचारवारणाय विशेष्यदलम् । पटादौ स्वीयरूपव्यञ्जकत्वाद् द्वितीयं परकीयेति । दृष्टान्ते प्रदीपादावसिद्धिवारणाय प्रथमं परकीयेति । प्रभाया दृष्टान्ततासम्भवात् तदपि वा नोपादेयम् । चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं विशेषणं देयम् । एतदनुमानं च रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणमितिप्रागुक्तसूत्रादवसेयम् । अग्रे च स्पष्टं वक्ष्यति ॥ ४३ ॥

क्वचित् प्रत्यक्षमपि प्रमाणयति ।

**नक्तञ्चरनयनरश्मिदर्शनाच्च**[1] ॥ ४४ ॥

नक्तञ्चराणां विडालादीनां गोलकरश्मिदर्शनादन्यथा तमसि तस्य प्रत्यक्षं न स्यात् । तथा च तद्दृष्टान्तेन मानुषादीनां गोलकरश्म्यनुमानमिति भावः ॥ ४४ ॥

सन्निकर्षो न हेतुरित्याशङ्कते ।

**अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः**[2] ॥ ४५ ॥

सिद्धान्तयति ।

**कुड्यान्तरितानुपलब्धेरप्रतिषेधः**[3] ॥ ४६ ॥

अप्रतिषेधः सन्निकर्षहेतुताऽप्रतिषेधः ॥ ४६ ॥

ननु सन्निकर्षहेतुता काचाद्यन्तरितविषयकप्रत्यक्षे व्यभिचारान्न सम्भवतीत्युक्तं तत् कथमप्रतिषेध इति व्यभिचारमुद्धरति ।

(१) नक्तञ्चरनयनरश्मिदर्शनाच्चेति दृष्टान्तसूत्रमिति वार्त्तिकम् । दृष्टान्तायसूत्रम् । नक्तञ्चरेत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

(२) इदं न्यायतत्त्वालोके व्याख्यातं न्यायसूचीनिबन्धे च वर्त्तते ।

(३) इदमपि पूर्ववत् । कुड्यान्तरितानुपलब्धेरप्रतिषेधः । अप्राप्यकारित्वे इन्द्रियस्य न कुड्याद्यावरणमस्तीत्युक्तं शेषं भाष्य इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

**अप्रतिघातात् सन्निकर्षोपपत्तिः**(१) **॥ ४७ ॥**

काचादिस्वच्छद्रव्येणाप्रतिघातादप्रतिबन्धात् सन्निकर्ष उपपद्यत इत्यर्थः । एतेन चक्षुषि तेजस्त्वमपि साधितं तेजस एव स्वच्छद्रव्येणाप्रतिघातात् प्रदीपादौ तथादर्शनात् ॥ ४७ ॥

अत एव तेज एव दृष्टान्तमाह ।

**आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽभिघातात्**(२) **॥ ४८ ॥**

अभिघातात् संयोगात् ॥ ४८ ॥

शङ्कते ।

**नेतरेतरधर्मप्रसङ्गात्**(३) **॥ ४९ ॥**

अप्रतिघातो न युक्त इतरस्य कुड्यादेः स्फटिकादेर्वा इतरस्य स्फटिकादेः कुड्यादेर्वा यो धर्मोऽप्रतिघातः प्रतिघातो वा तत्प्रसङ्गात् । तथा च कुड्यादेः स्फटिकादिधर्मप्रसङ्गेन तदन्तरितस्य प्रत्यक्षं स्फटिकादेः कुड्यादिधर्मप्रसङ्गेन स्फटिकान्तरितस्याप्रत्यक्षं वा स्यादिति भावः ॥ ४९ ॥

समाधत्ते ।

**आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः**(४) **॥ ५० ॥**

---

(१) इदमपि न्यायतत्त्वालोके न्यायसूचीनिबन्धे च वर्तते ।

(२) इदमपि पूर्ववत् । एतद्व्याख्यानन्तरं शेषं भाष्य इति वार्त्तिकम् । न्यायसूचीनिबन्धादौ दाह्ये ऽविघातादिति पाठः ।

(३) इदं च न्यायतत्त्वालोके न्यायसूचीनिबन्धे च दृश्यते ।

(४) एतद्व्याख्यानानन्तरं शेषं भाष्य इत्युक्तं वार्त्तिककृद्भिः । न्यायतत्त्वालोके व्याख्यातमिदं न्यायसूचीनिबन्धे च वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

आदर्शे उदके च प्रसादस्वाभाव्यात् स्वच्छस्वभावत्वात् तत्संयुक्तनयनरश्मीनामुच्छलितानां मुखादौ संयोगात् मुखादिरूपोपलब्धिर्न तु भित्त्यादौ तथा भवति तथा स्फटिकादेः स्वाभाव्यात् नयनरश्म्यप्रतिघातात् तदन्तरितस्य तथात्वं न कुड्यादेस्तथास्वभावाकल्पनात् । न च वह्न्यादेर्घटादिनाऽप्रतिघातवच्चक्षुषोऽपि तेनाप्रतिघातः स्यादिति वाच्यम् । वह्न्यादेरतिवेगवत्तयाऽप्रतिघातः स्याच्चक्षुषस्तु दीपालोकादेरिव प्रतिघात एवेति ॥ ५० ॥

चक्षुषः केनचित् प्रतिघातः केनचिन्नेति नियमः कथमित्यत आह ।

**दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः**(१) **॥ ५१ ॥**

दृष्टानामिवानुमितानामपि पदार्थानां नियोगप्रतिषेधानुपपत्तिः स्वभावप्रतिषेधो नेत्यर्थः । फलानुरोधित्वात् कल्पनाया इति भावः । यद्वा नियोग इतरधर्मकल्पनं प्रतिषेधः स्वधर्मनिषेधः तयोरनुपपत्तिः । न ह्यप्रामाणिकं कल्पयितुं शक्यते प्रामाणिकं निषेद्धुं वेति भावः । एवं घ्राणादिकमपि नासारन्ध्राद्यतिरिक्तमतीन्द्रियं प्राप्यकारित्वादिति बोध्यम् । तेषां पार्थिवत्वादिकमग्रे व्यक्तीभविष्यतीति ॥ ५१ ॥

सामान्यमिन्द्रियपरीक्षाप्रकरणम् ॥

नन्वेकमेवेन्द्रियं विषयभासकं तस्य काचाद्यप्रतिहतत्वे काचाद्यन्तरितस्य स्पार्शनापत्तिः । एवं स्पर्शाद्यग्राहकत्वविशिष्टरूपग्राहकत्वेन न चक्षुषस्तेजस्त्वानुमानं स्पर्श-

(१) इदं न्यायतत्त्वालोके व्याख्यातं न्यायसूचीनिबन्धे च वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

ग्राहकस्यैव रूपग्राहकत्वादिति तस्यैकत्वनिराकरणाय संशयमाह ।

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः[1] ॥ ५२ ॥**

केचित्तु दर्शनस्पर्शनाभ्यामित्यादिकमिन्द्रियनानात्वे युज्यत इत्युपोद्घातेनेन्द्रियनानात्वं परीक्षणीयं तत्र संशयमाह । स्थानेत्यादीत्याहुः । स्थानान्यत्वे आश्रयभेदे घटपटादीनां नानात्वदर्शनादवयवात्मकस्थानभेदेऽप्यवयविनो घटादेरेकत्वदर्शनाच्चेन्द्रियाणामेकत्वं नानात्वं वेति संशयः । स्थानभेदस्य नानात्वाप्रयोजकत्वादिति पर्यवसितार्थः ॥ ५२ ॥

अत्र पूर्वपक्षमाह ।

**त्वगव्यतिरेकात्[2] ॥ ५३ ॥**

सर्वेन्द्रियस्थाने त्वचोऽव्यतिरेकात् सत्त्वात् । चक्षुर्गोलकाद्यवच्छेदेनापि स्पार्शनोत्पत्तेरिति लाघवात् त्वगेवैकमिन्द्रियमस्तु तस्याश्च वायुविशेषत्वेनाप्रत्यक्षत्वमिति भावः ॥ ५३ ॥

(१) एके तु स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशय इति वर्त्तिकपञ्चपङ्क्तिः । स्थाना-यः । तत्र केचिदिदं सूत्रं भाष्यमतानपेक्षं यथाश्रुति व्याचक्षते । तद्दूषणपुरःसरं भाष्यव्याख्यानं ग्रहीतुं यथाश्रुति व्याख्यानं परेषां सूत्रपाठपूर्वकमुपन्यस्यति एके त्विती ति तात्पर्यटीका । संशयकधर्मप्रदर्शनाय सूत्रम् । स्थानान्यात्व इत्यादि न्यायतत्त्वालोके वाचस्पतिमिश्राः । अत्र स्थानान्यत्वे नानात्वादित्यादि सूत्रमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । यथाश्रुतसूत्रे स्थानान्यत्वे नानात्वमुक्तमिति न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायाः ।

(२) त्वगव्यतिरेकादित्यस्य सूत्रतां सूचयतीति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । पूर्वपक्षसूत्रम् त्वगव्यतिरेकादिति न्यायतत्त्वालोके वाचस्पतिमिश्राः ।

CC-0. In Public Domain. Digitized by eGangotri

सिद्धान्तयति ।

**न युगपदर्थानुपलब्धेः[1] ॥ ५४ ॥**

नैकमिन्द्रियं युगपदेकदार्थानां रूपरसादीनामग्रहात् । एकेन्द्रियस्य सर्वग्राहकत्वे युगपदेव तेषां ग्रहः स्यादिति भावः ॥ ५४ ॥

(२) ज्ञानभेदस्य भेदकत्वमुक्त्वा विषयभेदेन तदाह ।

**इन्द्रियार्थपञ्चत्वात्[3] ॥ ५५ ॥**

इन्द्रियार्थानां इन्द्रियग्राह्याणां रूपादीनाम् । पञ्चत्वात् पञ्चविधत्वात् । रूपं पश्यामि न तु जिघ्रामि गन्धं जिघ्रामि न तु रूपमित्याद्यनुव्यवसायेन रूपादिप्रत्यक्षाणां वैलक्षण्यमावश्यकम् । वैलक्षण्यं चेन्द्रियभेदमन्तरेण न सम्भवति प्रमावैजात्यस्य विलक्षणकरणनियम्यत्वात् । न च विषयवैलक्षण्यमेव प्रमावैजात्यनियामकमिति वाच्यम् । अन्धादीनां रूपाद्युपलब्धिप्रसङ्गात् । तथा च रूपाद्येकैकं चक्षुराद्येकैकेन्द्रियग्राह्यमितीन्द्रियभेद आवश्यक इति भावः ॥ ५५ ॥

प्रतिबन्ध्या[4] शङ्कते ।

**न तदर्थबहुत्वात्[5] ॥ ५६ ॥**

---

(१) एतद्व्याख्यानावसरे एतस्मिन् पक्षे न युगपदुपलब्धिप्रसङ्गादिति सूत्रमिति वार्त्तिकम् । न यु-ब्धेः नैतदस्त्येकमिन्द्रियमिति कस्माद् युगपदर्थानुपलब्धेरिति । तदेतत् सूत्रं भाष्यदृष्ट्या व्याचष्ट इति तात्पर्यटीका । न युगपदर्थानुपलब्धेरिति सूत्रमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

(२) अत्रैकं सूत्रमधिकं न्यायसूचीनिबन्धे विप्रतिषेधाच्च न त्वगेकेत्याकारकं दृश्यते । विप्रतिषेधाच्च न त्वक् । शेषं भाष्य इति वार्त्तिकम् । इदं तु न्यायतत्त्वालोके विश्वनाथकृतवृत्तौ च न धृतम् ।

(३) इन्द्रियार्थपञ्चत्वादिति सूत्रम् । अर्थः प्रयोजनमित्येवमादि भाष्ये । इदं च सूत्रं न कथञ्चन न्यायेन सम्बध्यत इति वार्त्तिकम् ।

(४) आदर्शपुस्तके ऽयमेव पाठः । एवमग्रे ऽपि ।

(५) पूर्वपक्षिणः सूत्रम् । न त-त इति तात्पर्यटीका ।



CC-0. In Public Domain. Digitized by eGangotri

नेन्द्रियाणामर्थपञ्चविधत्वेन भेदः तथा सति गन्धादीनां सौरभादिभेदेन बहुविधत्वादिन्द्रियबाहुल्यप्रसङ्ग इत्यर्थः ॥ ५६ ॥

शङ्कां निरस्यति ।

**गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेधः**[1] **॥ ५७ ॥**

गन्धादीनां सौरभादीनाम् । गन्धत्वाद्यव्यतिरेकाद् गन्धत्वादिरूपविषयविभाजकधर्मवत्त्वादेव नोक्तप्रतिबन्ध्या इन्द्रियभेदवारणम् ॥ ५७ ॥

यदि गन्धत्वादिना सौरभादीनामनुगमेन तेषां नेन्द्रियभेदकत्वं तदा विषयत्वेनानुगतानां गन्धादीनामपि नेन्द्रियभेदकत्वमित्याशङ्कते ।

**विषयत्वाव्यतिरेकादेकत्वम्**[2] **॥ ५८ ॥**

गन्धरूपादिषु सर्वेष्वेव विषयत्वरूपैकधर्मवत्त्वात् एकत्वमिति । तेषां नेन्द्रियभेदकत्वमिति शेषः ॥ ५८ ॥

शङ्कां निरस्यति ।

**न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः**[3] **॥ ५९ ॥**

न विषयत्वेन विषयानुगमादेवेन्द्रियैक्यम् । कथमित्यत आह । बुद्धीत्यादि । बुद्धेर्बुद्धिविशेषस्य लक्षणं चाक्षु-

(१) अस्योद्धारकं सूत्रम् । गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेध इति वार्त्तिकम् ।

(२) इदं न्यायसूचीनिबन्धे वर्तते ।

(३) अस्य चार्थस्य ज्ञापनार्थं न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्य इतिसूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

षत्वादि तत्पञ्चत्वात् तत्तदवच्छिन्नकरणानां पञ्चविधत्वम् । तथाऽधिष्ठानं गोलकादि तेषां पञ्चविधत्वात् तदधिष्ठितानां पञ्चविधत्वम् । तथा गतिर्विषयप्राप्तिः । तथा च चक्षुर्हि गत्वा गृह्णाति त्वग् देहावच्छेदेन श्रोत्रं कर्णावच्छेदेन रसना तदधिष्ठानावच्छेदेन घ्राणमपि तथेति विषयप्राप्तिप्रकाराणां पञ्चविधत्वात् । आकृतिर्ज्ञानाकृतिः सा च विषय एव । तथा च विषयाणां पञ्चविधत्वात् । जातिः पृथिवीत्वादि तासामिन्द्रियवृत्तीनां पञ्चत्वात् साङ्कर्यभिया तदाश्रयेन्द्रियाणां पञ्चविध त्वम् । जातिपदं धर्मपरं तेन श्रोत्रत्वस्य जातित्वविरहे ऽपि न क्षतिः ॥ ५९ ॥

घ्राणादेः पृथिवीत्वादिजातिमत्त्वे मानमाह ।

**भूतगुणविशेषोपलब्धेस्तादात्म्यम्**(१) ॥ ६० ॥

भूतानां पृथिव्यादीनां गुणविशेषा गन्धादयस्तेषामुपलब्धेर्ग्राहकत्वात् । तादात्म्यं तत्तद्भूतविशेषतादात्म्यम् । तथा च घ्राणेन्द्रियं पार्थिवं रूपाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकगोघृतादिवत् । अथ गोघृतादौ स्वकीयरूपव्यञ्जकत्वाद् दृष्टान्तासिद्धिः । न च परकीयेति रूपादिविशेषणं वाच्यमिति वाच्यम् । नवशरावगन्धव्यञ्जकजले ऽनैकान्तिकत्वादिति चेत् । न । जलस्य शक्तुरसाभिव्यञ्जकत्वेनानैकान्तिकत्वविरहात् । अथवा परकीयेति न देयं वाय्वानीतसुरभिभागस्य दृष्टान्ततासम्भवादिति । घ्राणेन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं विशेषणं देयम् । रसनेन्द्रियं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसाभिव्यञ्जकद्रव्यत्वाच्छक्तुरसाभिव्यञ्जको-

(१) इदं न्यायसूचीनिबन्धे वर्तते ।

दकवदिति। चक्षुरिन्द्रिये तेजस्त्वानुमानं च प्राग् दर्शितम्। त्वगिन्द्रियं वायुः गन्धाद्यव्यञ्जकत्वे सति स्पर्शव्यञ्जकद्रव्यत्वादङ्गसंसर्गिसलिलशैत्यग्राहकव्यजनवायुवत्। एवं श्रोत्रमाकाशं गन्धाद्यव्यञ्जकत्वे सति शब्दव्यञ्जकद्रव्यत्वादिति। अत्र व्यतिरेकेण दृष्टान्त इति दिक्॥ ६०॥

समाप्तमिन्द्रियनानात्वपरीक्षाप्रकरणम्॥

क्रमप्राप्तमर्थं परीक्षयति।

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः॥ ६१॥**

**अप्तेजोवायूनां पूर्वपूर्वमपोह्याकाशस्योत्तरः[1]॥ ६२॥**

पूर्वपूर्वमपोह्य गन्धरसरूपस्पर्शेषु मध्ये पूर्वंपूर्वं त्यक्त्वा। अप्तेजोवायूनां गुणा ज्ञातव्याः। उत्तरः शब्दः। तथा च गन्धरसरूपस्पर्शाः पृथिव्या गुणा रसरूपस्पर्शा जलस्य रूपस्पर्शौ तेजसः स्पर्शो वायोः शब्द आकाशस्येति॥ ६१॥ ६२॥

पूर्वपक्षयति।

**न सर्वगुणानुपलब्धेः[2]॥ ६३॥**

तत्तद्भूतगुणोपलम्भकत्वेन तत्तदिन्द्रियस्य तत्तद्भूतमयत्वमुक्तं तन्न सङ्गतं भवदुक्तानां पृथिवीगुणानां रसा-

(१) गन्धेत्याद्यारभ्य उत्तर इत्येतत्पर्यन्तं सूत्रद्वयम्। अतो विशेषणार्थं गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः। अप्तेजोवायूनां पूर्वपूर्वमपोह्याकाशस्योत्तरः। नियमार्थं सूत्रं इतिवार्त्तिकदर्शनात्। अत एव द्वयोरेकसूत्रत्वेन केषाञ्चिल्लेखोऽनादेयः। तात्पर्यटीकायामपि गन्ध–व्याः। अप्ते–रः। सूत्रयोस्तात्पर्यमुक्तं तदेव स्फुटयतीत्युक्तम्।

(२) इदं न्यायसूचीनिबन्धे वर्तते। तात्पर्यटीकायां न स–ब्धेः इति सूत्रप्रतीकधारणरीतिर्दृश्यते।

CC-0. In Public Domain. Digitized by eGangotri

दीनां घ्राणेनाग्रहात् रसनादिना ग्रहाच्च । तथा च बहिरिन्द्रियाणां स्वप्रकृतिवृत्तियोग्याशेषगुणग्राहकत्वनियमभावे कथं घ्राणादेः पृथिवीत्वादिकमिति भावः । यद्वा रसादीनां घ्राणादिनाऽग्रहात् कथं रसादीनां पृथिव्यादिगुणत्वमुक्तमिति पूर्वपक्षः ॥ ६३ ॥

पूर्वपक्षी स्वयं समाधत्ते ।

एकैकश्येनोत्तरोत्तरगुणासद्भावादुत्तरोत्तराणां तदनुपलब्धिः[१] ॥ ६४ ॥

उत्तरोत्तराणां जलादीनाम् । एकैकश्येन एकैकक्रमेण । उत्तरोत्तरगुणसद्भावाद् रसादिसद्भावात् । तदनुपलब्धिः तेषां रसादीनां घ्राणादिनानुपलब्धिरित्यर्थः । इदमुपलक्षणम् । पृथिव्यामपि केवलगन्धवत्त्वमिति ॥ ६४ ॥

[२]ननु तर्हि कथं पृथिव्यादौ रसादिग्रहणं तत्राह ।

विष्टं ह्यपरं परेण[३] ॥ ६५ ॥

अपरं पृथिव्यादि । अपरेण जलादिना । विष्टं सम्बद्धम् । तथा च पृथिव्यवच्छिन्नजलादिना रसनासंयोगाद्रसादिग्रहः न तु पृथिव्यामपि रसादिरिति भावः ॥ ६५ ॥

सिद्धान्ती समाधत्ते ।

न पार्थिवाप्ययोः प्रत्यक्षत्वात्[४] ॥ ६६ ॥

न पृथिव्यादेर्निरुक्तैकैकगुणवत्त्वं पार्थिवस्याप्यस्य च द्रव्यस्य प्रत्यक्षत्वात् । प्रत्यक्षे हि रूपस्पर्शौ हेतू पार्थिवज-

(१) एतद्व्याख्यानावसरे एकैकश्येनेति सौत्रो निर्देश इति वार्त्तिकम् ।

(२) अत्र न्यायसूत्रोद्धारे संसर्गाच्चानेकगुणग्रहणमित्येकं सूत्रमधिकं तच्च न्यायसूचीनिबन्धे नास्ति ।

(३) विष्टं-ग्ग इति तात्पर्यटीका । न्यायसूचीनिबन्धे ऽपीदं वर्तते ।

(४) एतद्व्याख्याने न पार्थिवमाप्यं वा अरूपत्वात् । अस्य सूत्रस्य विकल्पतोऽनेकः सूत्रार्थः कल्प्यत इति भाष्ये वर्णितमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

लयोश्चक्षुषा त्वचा च ग्रहणात् प्रत्यक्षेण कार्यलिङ्गेन रूपस्पर्शयोः सिद्धेः। न च पार्थिवाप्ययोस्तेजोवायुसम्बन्धात् परम्परया रूपस्पर्शवत्त्वेन प्रत्यक्षत्वमिति वाच्यम्। क्वचित् साक्षात्सम्बन्धेन क्वचिच्च परम्परासम्बन्धेन तयोर्हेतुत्वे गौरवादिति भावः। एवं तेजसि स्पर्शवत्त्वं बोध्यम्। न च तावता पृथिव्यां रसो नायातीति वाच्यम्। पृथिव्यामिव जल इत्यस्यापि वक्तुं शक्यत्वात् जले पृथिवीसम्बन्धादेव जलावच्छिन्नपृथिव्यां रसग्रहोपगमसम्भवात्। यद्वा पार्थिवाप्ययोरिति। गुणयोरिति शेषः। प्रत्यक्षत्वात् प्रत्यक्षसिद्धत्वात्। न हि प्रत्यक्षसिद्धमपह्नोतुं शक्यत इति भावः। इदमुपलक्षणम्। तेजसोऽपि स्पर्शगुणः प्रत्यक्षसिद्ध इति॥ ६६॥

ननु रसादेः पृथिव्यादिगुणत्वे घ्राणादिना कथं न तद्ग्रह इत्यत आह।

**पूर्वंपूर्वं गुणोत्कर्षात् तत्तत्प्रधानम्(१)॥ ६७॥**

पूर्वंपूर्वं कारणं घ्राणादीति यावत्। गुणोत्कर्षात् गन्धादिप्रत्यक्षरूपकार्यवैलक्षण्यात्। तत्तत्प्रधानं तत्तद्विलक्षणकार्यानुमितम्। तथा च घ्राणादीनां गन्धादिग्राहकत्वेनैव सिद्ध्या दुरुपपादमितरग्राहकत्वं न प्रामाणिकं प्रत्युत गन्धं जिघ्रामि न तु रसादीत्यादिप्रतीत्या रसाद्यग्राहकत्वं घ्राणादीनां सिद्धमन्यथा संयोगादीनामपि घ्राणादिग्राह्यता स्यादिति भावः॥ ६७॥

(१) इदं न्यायसूचीनिबन्धे दृश्यते। तात्पर्यटीकायामपि पूर्व-नम् इति सूत्रप्रतीकधारणरीतिर्दृश्यते। अत्र पूर्वपूर्वेति पाठोऽन्यत्र दृश्यते। परं तु पूर्वंपूर्वमिति पाठः समीचीनः। पूर्वंपूर्वमित्यादिसूत्रस्यायमर्थः। पूर्वंपूर्वं घ्राणादि गुणानां गन्धादीनामित्यादिन्यायनिबन्धप्रकाशीयवर्धमानोपाध्यायलेखदर्शनात्।

CC-0. In Public Domain. Digitized by eGangotri

ननु तावता पृथिवीत्वादिना कुतो घ्राणादीनां सिद्धिरित्यत आह ।

**तद्व्यवस्थानं तु भूयस्त्वात्**[1] ॥ ६८ ॥

तेषां पृथिवीत्वादिना व्यवस्थानं भूयःसु पृथिव्यादिष्वेव गन्धादिव्यञ्जकत्वस्य दृष्टत्वादिति । तच्च प्रदर्शितं तत्तदनुमानप्रकार एवेति ॥ ६८ ॥

ननु निर्गुणानां तेषां कथं पृथिव्यादित्वमत आह ।

**सगुणानामिन्द्रियभावात्**[2] ॥ ६९ ॥

गन्धादिविशिष्टानां घ्राणादीनामिन्द्रियभावाद् गन्धादिसाक्षात्कारकरणत्वात् । कुङ्कुमगन्धाभिव्यञ्जकगोघृतादौ तथादर्शनादिति भावः । केचित्तु पूर्वं घ्राणादि तत्तत् प्रधानम् । प्राधान्ये बीजमाह । गुणोत्कर्षात् । तद्व्यवस्थापकत्वात् । तथा च गन्धादिषु मध्ये स्वव्यवस्थापकगुणस्यैव ग्राहकत्वमिन्द्रियाणामिति । ननु पृथिव्यन्तरस्यापि गन्धप्राधान्यात् किमिन्द्रियं किमनिन्द्रियं तत्राह । तद्व्यवस्थानं तु भूयस्त्वादिति । भूयस्त्वात् जलाद्यविशिष्टपृथिव्याद्यारब्धत्वात् । तद्व्यवस्थानं घ्राणादीनामिन्द्रियत्वव्यवस्थितिः । घ्राणादीनां गन्धादिगुणवत्त्वे मानमाह । सगुणानामिन्द्रियभावादिति । अर्थस्तु समान इत्याहुः ॥ ६९ ॥

ननु सगुणत्वे कुतो नाध्यक्षमित्यत आह ।

**तेनैव तस्याग्रहणात्**[3] ॥ ७० ॥

---

(१) व्यवस्थानियमज्ञापनार्थं तद्व्यवस्थानं तु भूयस्त्वादिति सूत्रमिति वार्त्तिकम् ।

(२) इदं न्यायसूचीनिबन्धे वर्तते ।

(३) तेनैव तस्याग्रहणाच्चेति पाठोऽन्यत्र । इदमपि न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

तेनैव इन्द्रियेणैव । तस्य गुणस्याग्रहणात् । एवकारेणेन्द्रियाणां गुणाभावव्यवच्छेदः । तथा च तद्गुणानामनुद्भूतत्वकल्पनेनैवाप्रत्यक्षत्वमुपपाद्यमिति भावः ॥ ७० ॥

शङ्कते ।

न शब्दगुणोपलब्धेः[१] ॥ ७१ ॥

इन्द्रियगुणानामप्रत्यक्षत्वनियमो न शब्दात्मकेन्द्रियगुणस्य प्रत्यक्षत्वादित्यर्थः ॥ ७१ ॥

समाधत्ते ।

तदुपलब्धिरितरेतरद्रव्यगुणावैधर्म्यात्[२] ॥ ७२ ॥

भिन्नभिन्नद्रव्यगुणानां वैधर्म्यात् मिथो वैलक्षण्यात् । श्रोत्रस्य शब्दस्योपलब्धिर्न तु चक्षुरूपादेरितिस्वभाववैलक्षण्यादित्यर्थः । शब्दाश्रयस्य लाघवादैक्यसिद्धेरिति भावः ॥ ७२ ॥

समाप्तमर्थपरीक्षाप्रकरणम् ॥

अर्थानां घ्राणादिग्राह्यत्वेन पृथिव्यादिगुणत्वेन च परीक्षाप्रकरणमित्यर्थः ॥

इति न्यायसूत्रे तृतीयाध्यायस्याद्यमाह्निकम् ॥

इत्यात्मादिप्रमेयचतुष्कपरीक्षणात्मकतृतीयाध्यायाद्याह्निकविवरणम् ॥



(१) इदमपि पूर्ववत् ।

(२) अस्यार्थस्य ज्ञापनार्थं तदुपलब्धिरितरेतरवैधर्म्यादिति सूत्रमिति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

अथ पञ्चभिः प्रकरणैर्विनाशित्वादिना बुद्धिः परीक्षणीया तत्रादौ बुद्धिविनाशित्वप्रकरणम् । तत्रादौ संशयं प्रदर्शयति ।

**कर्माकाशसाधर्म्यात् संशयः[१] ॥ १ ॥**

कर्मण आकाशस्य च साधर्म्यं निःस्पर्शत्वादि तेन विनाशित्वाविनाशित्वसहचरितेन बुद्धौ विनाशित्वसंशय इत्यर्थः । अत्र बुद्धिपदार्थत्वेन धर्मिता तेन सांख्यमते पुरुषोपाधिभूताया बुद्धेर्ज्ञानाद्यतिरिक्तत्वेन तेन सह न विवादाप्रसक्तिरिति । यत्तु बुद्धिपदं नित्यशक्तं न वेतिसंशयाकारप्रदर्शनम् । तन्न सङ्गतम् । नैयायिकनये ऽपि नित्ये परमेश्वरज्ञाने बुद्धिपदस्य शक्तत्वादिति ॥ १ ॥

अत्र सांख्याः बुद्ध्यविनाशित्वं वदन्ति तन्मतमाह ।

**विषयप्रत्यभिज्ञानात्[२] ॥ २ ॥**

यया बुद्ध्या घटो दृष्टः सैव बुद्धिरिदानीं वर्तत इतिबुद्धेः कालान्तरे च तस्या अविनाशकल्पनेनाविनाशित्वमिति । दर्शनं च ज्ञानं बुद्धेर्व्यापारविशेषः तस्य च विनाशितया दृष्ट इत्यतीतनिर्देशः ॥ २ ॥

मतमिदं दूषयति ।

**साध्यसमत्वादहेतुः[३] ॥ ३ ॥**

तादृशप्रत्ययस्य साध्यसमत्वात् साध्यत्वादसिद्धत्वादिति यावत् । तादृशप्रत्ययोऽहेतुः स्थिराया बुद्धेरसाधकः ॥ ३ ॥

---

(१) एतद्व्याख्यानावसरे शेषं भाष्य इति वार्तिकम् । तत्र संशयप्रदर्शनाय सूत्रमिति वृत्तिकृतः ।

(२) इदं न्यायसूचीनिबन्धे वर्तते । विषयप्रत्यभिज्ञानस्य सौत्रहेतोरात्मविषयकत्वव्याख्यां निरस्येत्यादि न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायाः ।

(३) इदमपि न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

ननु योऽहं घटमद्राक्षं सोऽहं घटं स्पृशामीति प्रत्यभिज्ञानमहंप्रत्ययगोचरामेकां स्थिरां बुद्धिं विषयीकरोति न तु कूटस्थमात्मानं तस्याश्च ज्ञानात्मिका वृत्तयो जायन्ते वृत्तयश्च बुद्ध्यभिन्ना वह्नेरिव स्फुलिङ्गा इत्यत आह ।

**न युगपदग्रहणात्**[1] ॥ ४ ॥

वृत्तिवृत्तिमतोरभेदे वृत्तिमतोऽविनाशित्वे वृत्तीनामपि स्थिरतापत्त्या सर्वपदार्थग्रहणं युगपत् स्यात् सार्वदिकं च स्यात् ॥ ४ ॥

अथ यथा सुवर्णाभिन्नकुण्डलादिभङ्गेऽपि न सुवर्णविनाशस्तथा बुद्ध्या अभिन्नानां बुद्धिवृत्तीनां नीलाद्याकाराणां विनाशेऽपि न बुद्धिनाश इति बुद्ध्यविनाशेऽपि न वृत्तिस्थिरतेत्येवं वृत्तीनां भेदेऽप्याह ।

**अप्रत्यभिज्ञाने च विनाशप्रसङ्गः**[2] ॥ ५ ॥

तथा चोक्तप्रत्यभिज्ञानमहङ्कारास्पदं कूटस्थमात्मानं विषयीकरोति बुद्धेरचेतनत्वात् तथा च बुद्धेः प्रत्यभिज्ञानाविषयत्वेन भवदुक्तवृत्त्यतिरिक्ततया प्रमाणसिद्धत्वात् विषयोपरक्ततयानुभूयमानायाश्च विनाशित्वं घटो बुद्ध इत्यादिप्रत्ययेनातीतत्वबोधनाच्चेति भावः ॥ ५ ॥

नन्वात्मा ज्ञानसमवायी तस्य चाविशेषात् सर्वदैव सर्वविषयग्रहणं स्यादित्यत आह ।

**क्रमवृत्तित्वादयुगपद्ग्रहणम्**[3] ॥ ६ ॥

---

(१) न युगपदग्रहणात् । वृत्तिमतोऽवस्थानाद् वृत्त्यवस्थानमिति सूत्रार्थ इति वार्त्तिकम् ।

(२) अप्रत्यभिज्ञाने च विनाशप्रसङ्गः । वृत्तीनामपगमे वृत्तिमतोऽप्यपगम इति सूत्रार्थ इति वार्त्तिकम् ।

(३) क्रमवृत्तित्वादयुगपद्ग्रहणम् । वृत्तिवृत्तिमतोर्नानात्वादिति सूत्रार्थ इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

इन्द्रियाणां क्रमवृत्तितया सामग्र्याः क्रमवृत्तित्वाद् युगपदभावान्न युगपद्ग्रहणम् । ननु नानाविषयैरेकदैव नानेन्द्रियसम्बन्धात् सामग्र्यपि युगपदस्तीत्यत आह भाष्यकारः । पर्यायेण सर्वेन्द्रियैः । पर्यायेण मनः सर्वेन्द्रियैः सम्बध्यत इत्यर्थः । तथा च मनसोऽणुत्वादेकदा नानेन्द्रियसम्बन्धाभावेन यस्मिन्निन्द्रिये यदा मनसः सम्बन्धस्तदा तेनेन्द्रियेण ज्ञानं जन्यत इति भावः ॥ ६ ॥

ननु घटादीनामेकस्यैवाधिकरणचाक्षुषादिधारा स्यादित्यत आह ।

**अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात्**[1] **॥ ७ ॥**

अप्रत्यभिज्ञानं अविरलधारया तत्तदिन्द्रियजन्यज्ञानविरहः । विषयान्तरव्यासङ्गाद् विषयान्तरसञ्चारात्मकप्रतिबन्धकवशादित्यर्थः । विषयान्तरसञ्चारविरहे त्विष्टैव ज्ञानधारेति भावः ॥ ७ ॥

ननु किमर्थं मनः स्वीकार्यं बुद्धिरेव युगपद्ग्रहणवारणाय स्वीकार्येत्यत आह ।

**न गत्यभावात्**[2] **॥ ८ ॥**

बुद्धेरणुत्वे तदाश्रितज्ञानाप्रत्यक्षापत्तिः मनःपदपर्यायतापत्तिरपि स्याद् विभुत्वे च युगपद्ग्रहणावारणमिति भावः ॥ ८ ॥

(१) इदं न्यायसूचीनिबन्धे वर्तते ।

(२) न गत्यभावात् । प्राप्तान्यन्तःकरणेनेन्द्रियाणीति सूत्रार्थ इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

शङ्कते ।

**स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः**[१] ॥ ९ ॥

यथा स्फटिके जवादिसन्निधाने जवादिलौहित्यारोपेण स्फटिकान्यत्वारोपस्तथा एकस्या एव बुद्धेर्विषयेन्द्रियसन्निकर्षादिवशेन नानाविधविषयसम्बन्धान्नानात्वारोपस्तेन च घटज्ञानं नष्टं पटज्ञानं जातमित्याद्यारोपो न तु ज्ञानभेद इति ॥ ९ ॥

शङ्कां निरस्यति ।

**न हेत्वभावात्**[२] ॥ १० ॥

एकस्यां बुद्धौ न नानात्वारोपः हेत्वभावात् बुद्धेरेकत्वसाधकाभावात् नानात्वस्य प्रत्यक्षसिद्धस्यान्यथात्वकल्पकाभावाच्चान्यथा घटादेरपि नित्यत्वं स्यादिति भावः । इदं भाष्यं न मुनिकृतमिति केचित् ॥ १० ॥

समाप्तं बुद्धिविनाशित्वप्रकरणम् ॥

स्फटिके नानात्वभ्रम इत्यसहमानः सौगतः शङ्कते । यद्वा बुद्धेः क्षणिकत्वं मनस्यभिप्रेत्य स्फटिकस्य क्षणिकत्वं सौगतः साधयति ।

(१) अस्य चार्थस्य ज्ञापनार्थं स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमान इति सूत्रमिति वार्त्तिकम् । स्फटिकान्यत्वाभिमानवत् तदभिमान इति सौत्रपूर्वपक्ष इति न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायाः । तत्र चायमेव पाठः ।

(२) न हेत्वभावादिति भाष्यं व्याचष्टे यथाश्रुति सूत्र इतीति तात्पर्यटीका । इदं न्यायसूचीनिबन्धे नास्त्यत इदं भाष्यमेवेति केचित् । तच्च । अत्र स्फटिकान्यत्वाभिमानवत् तदभिमान इतिसौत्रपूर्वपक्षे सौत्र एव सिद्धान्तो युक्त इति हेत्वभावादिति सिद्धान्तसूत्रस्य । न हेत्वभावादिति भाष्यमिति टीका च सूत्रव्याख्यानपरभाष्याभिप्रायेणापि सङ्गच्छत इत्याहुरिति न्यायनिबन्धप्रकाशीयवर्धमानोपाध्यायलेखदर्शनात् ।

CC-0. In Public Domain. Digitized by eGangotri

स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनाम्[१] ॥ ११ ॥

अपिकराद् बुद्ध्यादिपरिग्रहः। अपरापरोत्पत्तेः प्रतिक्षणं पूर्वस्फटिकनाशेनापरस्फटिकोत्पत्तेः। क्षणिकत्वमिति शेषः। प्रतिक्षणविनाशे हेतुमाह। व्यक्तीनां भावानाम्। क्षणिकत्वात् स्वोत्पत्तिद्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वात्। यत् सत् तत् क्षणिकमितिव्याप्तेः। अत्र दृष्टान्तः क्षणिकान्त्यशब्दः। क्षणिकान्त्यशब्दास्वीकारे दृष्टान्तार्थमाह भाष्यं यथा। उपचयापचयप्रबन्धदर्शनाच्छरीरेषु। प्रतिक्षणं शरीरेषु उपचयापचयधारादर्शनान्नानात्वं न ह्येकस्मिन्नवयविनि परिमाणद्वयसमावेश इति भावः। इदमपि सूत्र मिति केचित् ॥ ११ ॥

मतं दूषयति।

लयहेत्वभावाद् यथादर्शनमभ्यनुज्ञा[२] ॥ १२ ॥

पदार्थानां लयो विनाशस्तस्य हेत्वभावात् सामग्र्यनियमात् पदार्थानां यथादर्शनं दर्शनमनतिक्रम्याभ्यनुज्ञा। तथा च स्फटिकादीनां स एवायमितिप्रत्यभिज्ञानात् स्थैर्यसिद्धिरिति भावः। केचित्तु ननु तदा न कोऽपि क्षणिकः पदार्थ इत्यत आह। यथादर्शनमिति। तथा च यदि कस्यचिदुत्पत्तिपरसमय एव विनाशसम्भवस्तदा तस्य क्षणिकत्वमभ्युपेयत एव यथान्त्यः शब्द इत्याहुः ॥ १२ ॥

(१) इदं न्यायसूचीनिबन्धे वर्तते। स्फटि-तुः इति तात्पर्यटीका। व्यक्तीनामहेतुरिति पाठो न्यायसूचीनिबन्धादौ सर्वत्र।

(२) नियमहेत्वभावादिति पाठोऽन्यत्र सर्वत्र। सिद्धान्तसूत्रम्। निय-ज्ञा इति तात्पर्यटीका।

CC-0. In Public Domain. Digitized by eGangotri

दोषान्तरमाह ।

**नोत्पत्तिविनाशकारणोपपत्तेः**[(१)] ॥ १३ ॥

न स्फटिकादेः क्षणिकत्वं यतः पदार्थानामुत्पत्तिविनाशयोरुत्पत्तिविनाशकारणाभ्यामेवोपपत्तेः । तथा च स्फटिकादावुत्पत्तिविनाशकारणानुपलब्ध्या न पूर्वविनाशोऽपरोत्पत्तिश्च स्यादिति भावः ॥ १३ ॥

पूर्वपक्षयति ।

**क्षीरविनाशकारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुत्पत्तिः**[(२)] ॥ १४ ॥

क्षीरविनाशकारणानुपलब्धावपि क्षीरविनाशवद् दध्युत्पत्तिकारणानुपलब्धावपि दध्युत्पत्तिवच्च तदुत्पत्तिः । पूर्वस्फटिकनाशकारणापरस्फटिकोत्पत्तिकारणानुपलब्धावपि पूर्वविनाशोऽपरोत्पत्तिश्चेत्यर्थः ॥ १४ ॥

सिद्धान्तयति ।

**लिङ्गतो ग्रहणान्नानुपलब्धिः**[(३)] ॥ १५ ॥

क्षीरविनाशस्य दध्नश्च प्रत्यक्षसिद्धत्वात् तेन लिङ्गेन तत्कारणं कल्प्यते स्फटिकादौ विनाशजन्माप्रत्यक्षेण न तत्कारणकल्पनमिति भावः ॥ १५ ॥

---

(१) कारणोपलब्धेरित्यन्यत्र पाठः । अथावश्यं साधनं वक्तव्यम् । इदं ब्रूमः नोत्पत्तिविनाशकारणोपलब्धेरिति वार्त्तिकग्रन्थपङ्क्तिव्याख्यानावसरे उत्तरसूत्रमवतारयति अथावश्यं साधनं वक्तव्यमितीति तात्पर्यटीका । एतद्व्याख्यानावसरे च न ह्यपूर्वं जायमानं वर्धत इत्युच्यते नापि विनश्यदपचितमित्युच्यते उपचयापचयोत्पत्तिविनाशकारणोपलब्धेरिति सूत्रार्थ इति वार्त्तिकम् ।

(२) क्षीरविनाशे कारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुपपत्तिरित्यन्यत्र पाठः । इदं न्यायसूचीनिबन्धे वर्तते ।

(३) इदमपि पूर्ववत् । सिद्धान्तसूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

साङ्ख्यमतं दूषयितुमाह ।

**न पयसः परिणामगुणान्तरप्रादुर्भावात्**[1] ॥ १६ ॥

न क्षीरनाशो दध्युत्पत्तिश्च किं तु दुग्धस्य परिणामेन पूर्वगुणनाशेन गुणान्तरप्रादुर्भावात् । गुणश्चात्र रसादिः । एवं चैतद्दृष्टान्तेन न स्फटिकादेर्नाशोत्पत्तिकल्पनमिति भावः ॥ १६ ॥

मतमिदं दूषयति ।

**व्यूहान्तराद् द्रव्यान्तरोत्पत्तिः पूर्वद्रव्यनिवृत्तेरनुमानम्**[2] ॥ १७ ॥

व्यूहान्तरादवयवसंस्थानवैलक्षण्यात् । अनुमानं ज्ञापकम् । द्रव्यान्तरोत्पत्तौ द्रव्यान्तरस्य प्रतिबन्धकतया तन्नाशं विना द्रव्यान्तरोत्पत्तिर्न भवतीत्यानुभविकी द्रव्यान्तरोत्पत्तिः पूर्वद्रव्यनाशज्ञापिकेति भावः ॥ १७ ॥

सौगतमते पुनर्दूषणमाह सिद्धान्ती ।

**क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः**[3] ॥ १८ ॥

क्षीरदधिदृष्टान्तेन विनाशोत्पादावकारणकावेवेति न युक्तं घटादौ सकारणकत्वोपलब्धेर्व्यभिचारादिति । यद्वा

(१) इदमपि न्यायसूचीनिबन्धे वर्तते ।

(२) उभयत्रोत्तरं व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् । शेषं भाष्य इति वार्त्तिकम् । अयमेव पाठो न्यायसूचीनिबन्धेऽपि दृश्यते । एतच्चिराकरोति सूत्रकार इत्येतदवतरणिकायां वृत्तिकृतः ।

(३) इदं न्यायसूचीनिबन्धे वर्तते । एतदुत्थानबीजं दोषान्तराभिधानाय सिद्धान्तिनः सूत्रमिति वृत्तिकारैर्दत्तम् ।

CC-0. In Public Domain. Digitized by eGangotri

क्वचित् क्षीरादिनाशस्थले। विनाशकारणेत्युत्पत्तिकारणोपलक्षकम्। क्वचिच्च दण्डादिना घटादिनाशस्थले। उपलब्धेः विनाशकारणोपलब्धेः। अनेकान्तः स्फटिकादौ प्रतिक्षणं विनाशानिर्णयः। क्षीरादिदृष्टान्तेन नाश इव घटादिदृष्टान्तेन नाशाभावोऽपि कल्पयितुं शक्य इति भावः। न च तावता क्षणिकत्वसंशयेन स्थिरत्वानिर्णय इति वाच्यम्। क्षीरविनाशेऽम्लद्रव्यसंयोगस्य हेतुत्वादम्लरसवत्परमाणुभिश्च दध्न आरम्भान्नाकारणकौ क्षीरदध्युत्पादविनाशावित्यभिप्रायः। सूत्रं तु तन्मतमभ्युपेत्योक्तम्। वस्तुतस्तु सूत्रमेवं व्याख्येयम्। क्वचिद् ग्रीष्मादौ क्षीरविनाशेन दध्युत्पादे विनाशकारणानिर्णयात् क्वचिच्चाम्लद्रव्यसंयोगेन क्षीरादिविनाशेन दध्युत्पादेऽनेकान्तः सकारणकत्वस्य व्यभिचारसंशयः। न च स सकारणकत्वनिश्चयविरोधी व्यभिचारनिर्णयस्य विरोधित्वादिति भावः॥ १८॥

समाप्तं क्षणभङ्गभञ्जनप्रकरणम्॥

अथ बुद्धेरात्मगुणत्वं यद्यप्यात्मग्राहकमानेनैव सिद्धं प्रागुक्तं तथाप्यत्र शिष्यबुद्धिवैशद्याय विशिष्य विस्तरेण तदुपपादयति।

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्**[1] ॥ १९॥

बुद्धिर्नेन्द्रियस्य गुणः तत्तदिन्द्रियनाशेऽपि तत्तदिन्द्रियजन्यज्ञानाहितसंस्कारात् ज्ञानावस्थानात् स्मरणोत्प-

(१) तत्र चेन्द्रियार्थसन्निकर्षाधीनत्वादिन्द्रियादिनिष्ठत्वमेवास्तु भेर्याकाशसंयोगाधीनशब्दस्याकाशनिष्ठत्ववदिति पूर्वपक्षे सिद्धान्तसूत्रमित्येतदुत्थानबीजं वृत्तिकारैर्दत्तम्। वर्त्तते चेदं न्यायसूचीनिबन्धे।

CC-0. In Public Domain. Digitized by eGangotri

त्तेः । ननु त्वगेवैकमिन्द्रियं तत्रैव ज्ञानं जायते गोलकाद्यवच्छेदकभेदेन चाक्षुषादिभेदः स्मरणादिकं प्रति गोलकादीनां नियामकता नास्तीति । न च चक्षुर्गोलकाद्यवच्छेदेनापि त्वाचोदयात् तत्र चाक्षुषत्वादिसाङ्कर्यमिति वाच्यम् । शरीरावच्छेदेन त्वग्विषययोः संयोग एव त्वाचजनना-चक्षुर्गोलकादिवर्त्मना निर्गम्य विषयसम्बन्धे चाक्षुषादिकं जन्यत इति चेत् । न । कुष्ठाद्युपहतत्वचश्चाक्षुषाद्युत्पादानुपपत्तेः । न च कुष्ठिनां शरीरावच्छेदेन त्वग्विषयसम्बन्धानां ज्ञानानुपधायकत्वं शरीरस्यैव दुष्टत्वादिति कल्प्यत इति वाच्यम् । गोलकाद्यवच्छेदकमन्तर्भाव्य कार्यकारणभावे गौरवादिति । एवं बुद्धिर्नार्थस्य गुणः तद्विनाशे ऽपि स्मरणानुमानादेरुत्पत्तेः । अपिकाराद् भाविवर्तमानयोः परिग्रहः ॥ १९ ॥

नापि मनस इत्याह ।

**युगपज्ज्ञानानुपलब्धेश्च मनसः**[१] ॥ २० ॥

पूर्वसूत्रस्थेन नकारेण मनस इत्यस्य सम्बन्धः । चकारोऽप्यर्थः । तेन नापि मनस इत्यर्थः । न मनस इत्यपि क्वचित् पाठः । हेतुमाह । युगपज्ज्ञानानुपलब्धेः । कायव्यूहस्थले युगपन्नानाशरीरावच्छेदेन ज्ञानानुत्पादप्रसङ्गान्मनसोऽणुत्वेन नानाशरीरसम्बन्धस्यैकदा असम्भवात् ॥ २० ॥

(१) युगपज्ज्ञेयानुपलब्धेश्च न मनस इति पूर्वसूत्रस्थस्य चकारस्यार्थे भाष्यकारेण युगपज्ज्ञेयोपलब्धेश्च योगिन इति वा चार्थ इति विचरिष्यमाणत्वादिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । युगपज्ज्ञेयानुपलब्धेश्च न मनस इति पाठोऽन्यत्रापि ।



CC-0. In Public Domain. Digitized by eGangotri

शङ्कते ।

**तदात्मगुणत्वेऽपि तुल्यम्**[1] ॥ २१ ॥

तस्या बुद्धेरात्मगुणत्वेऽपि तुल्यम् । कायव्यूहस्थले युगपज्ज्ञानानुपपत्तिस्तुल्येत्यर्थः ॥ २१ ॥

समाधत्ते ।

**सन्निकर्षाभावात् तदनुत्पत्तिः**[2] ॥ २२ ॥

सन्निकर्षस्यात्मशरीरसम्बन्धस्याभावादेव तदनुत्पत्तिः तत्तच्छरीरावच्छेदेन ज्ञानानुत्पत्तिः । अत्र तु कायव्यूहस्थले आत्मनो विभुतया नानाशरीरेष्वेकदा सम्बन्धादेव नानुपपत्तिरिति भावः । केचित्तु युगपज्ज्ञानानुपलब्धेर्युगपच्चाक्षुषादिनानाज्ञानानुत्पादात् । तथा च मनसो ज्ञानाश्रयत्वे ज्ञानादेः प्रत्यक्षतासम्पादनाय मनसो विभुत्वं कल्प्यमिति युगपज्ज्ञानाज्ञानोत्पादप्रसङ्ग इति भावः । शङ्कते । तदात्मगुणत्वेऽपि तुल्यम् । अस्यार्थस्तु सुगमः । उत्तरमाह । सन्निकर्षाभावात् तदनुत्पत्तिः । सन्निकर्षाभावाद् युगपज्ज्ञानेन्द्रियैर्मनःसन्निकर्षाभावादित्याहुः । यत्तु युगपज्ज्ञानानुपलब्धेर्हेतोः सिद्धस्य मनसो न कर्तृत्वं धर्मिग्राहकमानेन करणत्वेनैव सिद्धेरिति । तन्न । तदात्मगुणत्वेऽपि तुल्यमित्याशङ्कासूत्रानुत्थितेरिति ॥ २२ ॥

---

(१) तदात्मगुणत्वेऽपि तुल्यमिति सूत्रमेव विनाशकारणानुपलब्धेश्चेत्यादिसूत्रे तदात्मगुणत्वेऽपि तुल्यमित्येतदनेन समुच्चीयत इति भाष्यस्य भविष्यत्वादिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । विनाशकारणानुपलब्धेरित्यादिसूत्रव्याख्यावसरे तात्पर्यटीकाकृता अत्र पूर्वपक्षसूत्रे चकारः पूर्वपूर्वपक्षसूत्रापेक्षयेत्याह । तदात्मगुणत्व इतीत्युक्तम् । तत्रत्यवार्त्तिकं च तदात्मगुणत्वेऽपि तुल्यमित्येतदनेन समुच्चीयत इति ।

(२) इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिरित्यन्यत्र पाठः । इदं न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

आक्षिपति ।

**नोत्पत्तिकारणानुपदेशात्**[१] ॥ २३ ॥

न बुद्धिरात्मगुण उत्पत्तिकारणानुपदेशाद् बुद्ध्युत्पत्तौ कारणस्याकथनात् । आत्ममनःसंयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्ग इति भावः ॥ २३ ॥

बाधकमप्याह ।

**विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः**[२] ॥ २४ ॥

बुद्धेरात्मगुणत्वे तद्विनाशकारणानुपलब्धेस्तस्या बुद्धेर्नित्यत्वप्रसङ्ग इत्यर्थः । आत्मनो नित्यत्वव्यवस्थापनेन प्रसिद्धस्य गुणनाशहेतोराश्रयनाशस्यात्रासम्भवादिति भावः ॥ २४ ॥

उत्तरयति ।

**अनित्यत्वग्रहणाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत्**[३] ॥ २५ ॥

बुद्धेरनित्यत्वग्रहणादुत्पादविनाशयोरानुभविकत्वात् । तत्रोत्पत्तिहेतूनां विषयेन्द्रियसम्बन्धात्ममनोयोगेन्द्रियमनोयोगादीनां प्रागुक्तत्वात् प्रसिद्धत्वाच्च तदनुक्त्वा विनाशकारणं दर्शयति । बुद्धेति । बुद्ध्यन्तराद्विनाशः स्वोत्तरोत्पन्नबुद्ध्या विनाशः कल्प्यते । ननु चरमबुद्धेः

---

(१) नोत्पत्तिकारणानपदेशात् अस्मादेयोत्पद्यतामिति न कारणमपदिश्यत इति सूत्रार्थ इति वार्त्तिकम् । अनपदेशादिति पाठोऽन्यत्रापि ।

(२) विना-ङ्गः । अत्र पूर्वपक्षसूत्रे चकारः पूर्वपूर्वपक्षसूत्रापेक्षयेति तात्पर्यटीका ।

(३) इदं न्यायसूचीनिबन्धे वर्तते । अनित्यत्वग्रहादिति पाठः क्वचित् ।

CC-0. In Public Domain. Digitized by eGangotri

केन नाश इत्यत आह । शब्दवदिति । शब्दस्य स्वोत्तरोत्पन्नशब्दनाश्यत्वं चरमशब्दस्य स्वस्मादेव नाशस्तेन तस्य क्षणिकत्वमप्युच्यते । यदि च क्षणिकपदार्थस्वीकारोऽपसिद्धान्तस्तदा निमित्तनाशात् कालविशेषाददृष्टविशेषाद्वा चरमशब्दनाशस्तथा चरमबुद्धिनाशोऽपि । वस्तुतो बुद्धिनाशं प्रति स्वोत्तरोत्पन्नविशेषगुणत्वेनैव हेतुत्वाच्चरमबुद्धेः संस्कारादिनैव नाश इति भावः ॥ २५ ॥

ननु बुद्धेरात्मगुणत्वे संस्कारमनोयोगयोः सत्त्वात् स्मृतीनां पूर्वानुभूतयावद्वस्तुविषयकत्वं स्यादित्यत्र कस्यचित् समाधानं दूषयितुमाह ।

**ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः(१) ॥ २६ ॥**

ज्ञायते ऽनेनेतिव्युत्पत्त्या ज्ञानपदं संस्कारपरम् । तत्समवेतो विषयतया तत्सम्बद्धः तद्विषय इति यावत् । तदात्मको य आत्मप्रदेश आत्मसम्बन्धी तदवच्छेदेन सन्निकर्षादित्यर्थः । तथा च यद्विषयावच्छेदेनात्ममनोयोगो वर्तते तद्विषयस्यैव स्मरणं न तु सर्वस्येति भावः ॥ २६ ॥

मतमिदं दूषयति ।

**नान्तःशरीरवृत्तित्वान्मनसः(२) ॥ २७ ॥**

उक्तसमाधानं न शरीरवृत्तित्वाच्छरीरावच्छिन्नात्मसम्बन्धान्मनसः । स्मृतिजनकत्वादिति शेषः । तथा च मनसोऽणुतया शरीरावच्छेदेन विषयावच्छेदेन च युगप-

(१) इदं न्यायसूचीनिबन्धे वर्तते ।

(२) इदमपि पूर्ववत् ।

CC-0. In Public Domain. Digitized by eGangotri

दात्ममनोयोगासम्भवाद् विषयावच्छिन्नात्ममनोयोगो न हेतुर्येन तज्ज्ञाननियमः स्यादिति भावः । इदमुपलक्षणम् । विषयावच्छेदेन मनोयोगस्य हेतुत्वकल्पने ऽपि नोक्तदोषवारणं विषयविशेषावच्छेद एव नियामकाभावात् । एवं युगपन्नानाविषयावच्छेदेन मनोयोगासम्भवात् समूहालम्बनस्मरणं कदापि न स्यादिति ॥ २७ ॥

शङ्कते ।

**साध्यत्वादहेतुः[१] ॥ २८ ॥**

शरीरावच्छिन्नात्ममनोयोगो न हेतुः साध्यत्वादसिद्धत्वान्मानाभावादिति यावत् ॥ २८ ॥

शङ्कां निरस्यति ।

**स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः[२] ॥ २९ ॥**

उक्तप्रतिषेधो न युक्तः स्मरतः शरीरान्तर्वर्तिमनस एव । शरीरधारणस्योपपत्तेरन्यथा मनसो बहिर्भावे शरीरावच्छिन्नमनोयोगाभावे प्रयत्नाभावे शरीरधारणं न स्यादिति भावः ॥ २९ ॥

पुनः शङ्कते ।

**न तदाशुगतित्वान्मनसः[३] ॥ ३० ॥**

न तच्छरीराधारणं मनस आशुगतित्वात् । शरीरे शीघ्रमेव परावृत्तेरिति भावः ॥ ३० ॥

---

(१) इदमपि पूर्वपूर्ववत् । साध्य-तुः इति तात्पर्यटीका ।

(२) परिहारः । स्मर-धः इति तात्पर्यटीका । सिद्धान्तसूत्रमिति वृत्तिकृतः । न्यायसूचीनिबन्धे ऽपीदं वर्तते ।

(३) पुनश्चोद्यम् । न त-सः इति तात्पर्यटीका । न्यायसूचीनिबन्धे ऽपीदं वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

दूषयति ।

**न स्मरणकालानियमात्**[१] ॥ ३१ ॥

न मनस आशुगतित्वेन शरीरधारणसम्पादनं स्मरणकालानियमात् । तथा च कदाचित् स्मरणधारासम्भवेन तदानीं शरीरे मनःपरावृत्त्यभावेन शरीरधारणं न स्यादिति भावः ॥ ३१ ॥

कस्यचिद् दूषणमाह ।

**आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः**[२] ॥ ३२ ॥

आत्मप्रेरणेन यदृच्छया ज्ञतया च न संयोगविशेषः न बहिःप्रदेशे विषयेण मनःसंयोगविशेषः । सम्भवतीति शेषः । तत्रात्मप्रेरणं स्मरणीयज्ञानं तच्च स्मरणात् पूर्वं नास्तीति मनसो बहिःप्रदेशगमनं तेन न सम्भवतीति । एवं यदृच्छा आकस्मिकत्वम् । मनोगमनस्याकस्मिकत्वे जगत एवाकस्मिकत्वापत्तिः । ज्ञता ज्ञातृता सा च मनसो दूषितैव ॥ ३२ ॥

एतद्दूषणमुद्धरति ।

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम्**[३] ॥ ३३ ॥

व्यासक्तमनसो नृत्यादिकं कुर्वतः । पादव्यथनेन यः संयोगविशेषः पादावच्छेदेन मनःसंयोगस्तेन विषयमनः-

(१) परिहारः । न स्मर-त् इति तात्पर्यटीका । न्यायसूचीनिबन्धे ऽपीदं वर्तते ।

(२) एकदेशिमतमुपन्यस्यति । आत्म-षः इति तात्पर्यटीका । न्यायसूची निबन्धे ऽपीदं वर्तते ।

(३) दूषयति । व्यास-नम् इति तात्पर्यटीका । इदं न्यायसूचीनिबन्धे वर्तते ।

संयोगः समान इत्यर्थः । अन्यथा पादावच्छेदेन मनोयोगेऽप्येतद्दोषः स्यात् तत्रादृष्टविशेषाधीनत्वकल्पनेन दोषोद्धारेऽत्रापि तथाकल्पनेन दोषवारणादिति भावः ॥ ३३ ॥

स्मरणायौगपद्यं स्वयमुपपादयति ।

**प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम्**(१) ॥ ३४ ॥

प्रणिधानं चित्तैकाग्र्यं स्मरणेच्छेति यावत् । लिङ्गादिज्ञानानामित्यत्रादिपदं ज्ञानपदोत्तरं योजनीयम् । तेन लिङ्गज्ञानादीनामित्यर्थः । लिङ्गज्ञानमुद्बोधकज्ञानपरम् । आदिपदेनोद्बोधकेच्छासंस्कारादिपरिग्रहः । अयुगपद्भावात् क्रमेणोत्पादात् । युगपदस्मरणं क्रमेण स्मरणम् । यदा च नानाविषयोद्बोधकमेकदा तदा तावद्विषयकमेकं स्मरणं जायत एव यथा पदज्ञानादाविति । उद्बोधकानि फलबलकल्प्यानि । गत्यन्तरविरहेण तेषामननुगतकारणतापि स्वीकार्येति । केचित्तु लिङ्गमुद्बोधकं तच्च क्वचिज्ज्ञानं क्वचिदिच्छादि । आदिज्ञानं कारणीभूतज्ञानं संस्कारकारणीभूतज्ञानं तज्जन्यसंस्कारो वेत्यर्थ इत्याहुः । वस्तुतो लिङ्गं व्याप्यं तदादिज्ञानानामित्यर्थः । आदिपदग्राह्यं वक्ष्यते । स्वरूपसदुद्बोधकानां ज्ञानभिन्नानां बहुवचनस्वरसाल्लाभः । बहुवचनान्ता गणस्य संसूचका इतिन्यायात् ॥ ३४ ॥

(२)प्रसङ्गादिच्छादीनामात्मगुणत्वं व्यवस्थापयति । ज्ञस्येच्छेत्यादि । यद्वा इच्छाद्वेषयोरनात्मगुणत्वे बुद्धेरा-

(१) स्मरणायौगपद्यं स्वयमुपपादयतीत्येतदवतरणिका वृत्तिकारैर्दत्ता । इदं न्यायसूचीनिबन्धे वर्तते ।

(२) अत्र न्यायसूत्रोद्धारे प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्ग इत्येकमधिकं सूत्रं दृश्यते । तच्च तात्पर्यटीकायां प्रातिभवदितीतिप्रतीकधारणदर्शनाद् वृत्तिकृद्भिरव्याख्यातत्वात् न्यायसूचीनिबन्धे विरहाच्च भाष्यमिति सम्भाव्यते ।

CC-0. In Public Domain. Digitized by eGangotri

त्मगुणत्वं न सम्भवति ज्ञानस्य सामानाधिकरण्येन तत्कारणत्वादित्यत इच्छादीनामपि तत् साधयति ।

**ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः[1] ॥३५॥**

ज्ञस्य ज्ञानाश्रयस्यात्मनः । आरम्भनिवृत्त्योः प्रवृत्तिनिवृत्त्योः । इच्छाद्वेषनिमित्तत्वादिच्छाद्वेषकारणकत्वात् । तथा च प्रवृत्तिं प्रतीच्छाया निवृत्तिं प्रति द्वेषस्य सामानाधिकरण्यप्रत्यासत्त्या हेतुत्वेन प्रवृत्तिनिवृत्त्योरनुभवसिद्धत्वेन च ज्ञस्येच्छाद्याश्रयत्वम् । इत्थं च ज्ञानेच्छाकृतिद्वेषनिवृत्तीनामात्मगुणत्वं लब्धमिति भावः । एवं संस्कारोऽनुभवेन कालान्तरे स्मृतौ जननीयायां द्वारत्वेन कल्प्यते सोऽप्यात्मनिष्ठः सामानाधिकरण्येन ज्ञानजन्यत्वादिति ॥ ३५ ॥

चार्वाकः शङ्कते ।

**तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः[2] ॥ ३६ ॥**

तयोरारम्भनिवृत्त्योर्लिङ्गं कार्यतया ज्ञापकं चेष्टात्मकं यत्र शरीरे तत्त्वात् । पार्थिवाद्येषु शरीरेषु इच्छाद्वेषयोरप्रतिषेधः । तत्समानाधिकरणतया ज्ञानस्यापि शरीरधर्मत्वमिति भावः ॥ ३६ ॥

समाधानार्थं प्रतिवन्धिमाह ।

**परश्वादिष्वारम्भनिवृत्तिदर्शनात्[3] ॥ ३७ ॥**

(१) ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः । ज्ञातुरेवेच्छादय इति सूत्रार्थ इति वार्त्तिकम् । आरम्भनिवृत्ती प्रयत्नरूपे ज्ञानसमानाधिकरणे एवेति ज्ञस्येत्यादिसूत्रस्यार्थ इति न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायाः ।

(२) तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः । प्रवृत्तिनिवृत्तिभ्यां सामानाधिकरण्यात् शरीरादिष्वप्रसङ्ग इति सूत्रार्थ इति वार्त्तिकम् । तल्लिङ्गत्वादिच्छाद्वेषयोरिति सूत्रे भूतचैतनिकेत्यादि न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायाः ।

(३) इदं न्यायसूचीनिबन्धे वर्तते । वार्त्तिके तु अनेकान्तो वाक्यार्थ इति व्याख्यानम् । तात्पर्यटीकायां तु परश्वादिष्वित्यस्य तात्पर्यमाह वार्त्तिककार इत्युक्तम् ।

CC-0. In Public Domain. Digitized by eGangotri

आरम्भनिवृत्तिदर्शनादारम्भनिवृत्त्यनुमापकक्रियाविशेषदर्शनात् । यद्वा दृश्यतेऽनेनेति दर्शनमनुमापकं क्रियाविशेषरूपं तस्मादिति । एवं परश्वादौ प्रवृत्त्यादिविरहेण व्यभिचारात् क्रियायां प्रवृत्त्यादीनां न समवायसम्बन्धेन हेतुता किं त्वन्यसम्बन्धेनेति शरीरे चेष्टावत्त्वेन न प्रवृत्त्यादिप्रसङ्ग इति भावः ॥ ३७ ॥

(१)ननु शरीरे परश्वादौ च कथं चेष्टानियम इत्यत आह ।

**नियमानियमौ तु तद्विशेषकौ(२)॥ ३८ ॥**

नियमः प्रवृत्त्यादेर्जन्यता अनियमः तज्जन्यतातिरिक्तपदार्थः तौ । तद्विशेषकौ चेष्टानियामकौ । तथा च शरीरचेष्टायामवच्छेदकतासम्बन्धेन प्रवृत्तेर्हेतुतया नियामकत्वम् । परश्वादिक्रियायां शरीरचेष्टादिरेव नियामक इति भावः । यद्वा नियमो जन्यता समवायसम्बन्धावच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यतेति यावत् । अनियमस्तादृशकार्यताविरहस्तौ । तद्विशेषकौ चेतनाचेतनव्यावर्तकौ । इच्छादीनां चेतनधर्मत्वस्य चेष्टाया अचेतनधर्मत्वस्य च व्यवस्थापकाविति यावत् ॥ ३८ ॥

---

(१) अत्र न्यायसूत्रोद्धारे कुम्भादिष्वनुपलब्धेरहेतुरित्येकमधिकं सूत्रं दृश्यते तद् वार्त्तिके न धृतं नापि न्यायसूचीनिबन्धे वर्तते ।

(२) अस्य सूत्रत्वे प्रमाणं नोपलभ्यत इति केचिदाधुनिकाः । नियमानियमौ तु तद्विशेषकाविति सूत्रस्यायमर्थः । तयोरिच्छाद्वेषयोर्विशेषकौ भूतवृत्तित्वव्यावृत्त्या तदन्यगुणत्वव्यवस्थापकाविति न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायाः ।

CC-0. In Public Domain. Digitized by eGangotri

इच्छादीनां मनोगुणत्वं निराकरोति ।

**यथोक्तहेतुत्वात् पारतन्त्र्यात् स्वकृताभ्यागमाच्च न मनसः[१] ॥ ३९ ॥**

इच्छादय इति शेषः । यथोक्तहेतुत्वात् समवायघटितसामानाधिकरण्यप्रत्यासत्त्या ज्ञानेच्छादीनां हेतुहेतुमद्भावात् । ननु ज्ञानमपि मनोधर्म इति सामानाधिकरण्याविरोध इत्यतो हेत्वन्तरमाह । पारतन्त्र्यात् । चेतनसहकारित्वेन मनसः सिद्धेः । तथा च मनसो यथा न ज्ञानाश्रयत्वं तथोक्तमधस्तादिति भावः । केचित्तु इच्छादीनां पारतन्त्र्यात् पराधीनविषयताशालित्वात् । इच्छादीनां स्वजनकज्ञानविषयतैव विषयता वैयधिकरण्ये च सा न स्यादिति भावः । हेत्वन्तरमाह । स्वकृताभ्यागमात् । स्वकृतात् कर्मणोऽभ्यागमो भोगः । मनसः कृत्यादिमत्त्वे कर्मणः स्वकृतत्वाभावेनात्मनः सुखदुःखभोगो न स्यादिति भावः । न च भोगोऽपि मनस एव सुखादेरप्रत्यक्षत्वापत्तेर्मनसोऽणुत्वेन सिद्धेर्ज्ञानसुखयोः सामानाधिकरण्यानुभवाच्च । न च ज्ञानादिकं प्रक्रम्य एतत् सर्वं मन एवेतिश्रुतिविरोधः तत्र मनोऽधिकरणत्वेन मनस्त्वेन कथनादिति वाच्यम् । मनसो निमित्तकारणतया मनःपदेन मनोजन्यबोधनात् । अन्नं वै प्राणा इत्यादौ तथादर्शनात् ॥ ३९ ॥

उपसंहरति ।

**परिशेषाद् यथोक्तहेतूपपत्तेश्च[२] ॥ ४० ॥**

---

(१) पारतन्त्र्यादकृताभ्यागमाच्चेति पाठोऽन्यत्र । स्वकृताभ्यागमादिति पाठो वृत्तिकारसम्मतः । यथो–सः इति तात्पर्यटीका । इदं न्यायसूचीनिबन्धे वर्तते ।

(२) इदं न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

बुद्ध्यादिकमात्मगुण इत्यादि । हेतुमाह । परिशेषात् शरीरादिगुणत्वाभावात् । यथोक्तहेतूनां दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्याद्युक्तानाम् । उपपत्तेः सत्त्वादिति ॥ ४० ॥

शिष्यबुद्धिवैशद्याय स्मृतेरात्मगुणत्वं विशिष्याह ।

**स्मरणं त्वात्मनो ज्ञस्वाभाव्यात्**(१) ॥ ४१ ॥

स्मरणं तु स्मरणमपीत्यर्थः । ज्ञा स्वभावो ज्ञानं तस्य भावो ज्ञस्वाभाव्यं ज्ञानत्वमिति यावत् तस्मात् । तथा च ज्ञानस्यात्मगुणत्वे तद्विशेषस्य स्मरणस्य सुतरां तत्त्वमिति भावः । यद्वा ज्ञस्वाभाव्यात् ज्ञानाश्रयवृत्तित्वात् । तथा च स्मरणं प्रति सामानाधिकरण्येन हेतुभूतज्ञानस्यात्मवृत्तित्वे स्मरणस्यात्मवृत्तित्वमायातमिति भावः । केचित्तु ज्ञानस्याशुविनाशित्वात् कथं ततः स्मृतिरित्यत आह । स्मरणं त्वित्यादि । ज्ञानवतः स्वभावः संस्कारस्तस्मादित्यर्थ इत्याहुः ॥ ४१ ॥

स्मृतियौगपद्यवारणाय प्रणिधानेत्यादिसूत्रमुक्तं तत्रातिग्राह्यं विशेषतो दर्शयति ।

**प्रणिधाननिबन्धनाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः**(२) ॥ ४२ ॥

(१) इदमपि पूर्ववत् ।

(२) स्मृतिकारणानामयौगपद्यप्रतिपादनार्थं प्रणिधानादिसूत्रमिति वार्त्तिकम् । प्रणिधानादिसूत्रोपयोगं शङ्कापूर्वकमावेदयतीति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । अन्यत्र निबन्धाभ्यासेति पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

स्मरणमित्यनुवर्तते। द्वन्द्वात् परश्रुतस्य निमित्तपदस्य प्रणिधानादिना प्रत्येकमन्वयः। प्रणिधानं प्राग् व्याख्यातम्। निबन्धनमेकत्र कथनम्। यथा प्रमाणज्ञानेन प्रमेयस्मरणम्। अभ्यासः पुनःपुनर्ग्रहः। एतस्य यद्यपि नोद्बोधकत्वं तथापि अभ्यासेन दृढतरदृढतमसंस्काराणां जनकतया तादृशसंस्काराणां च झटित्युद्बोधकसमवधानं जायते। उद्बोधकत्वं च यथाकथञ्चित्सम्बन्धशालिनामपीतिद्योतनायोक्तमिति। लिङ्गं व्याप्यम्। यथा धूमादिर्ज्ञायमानो वह्न्यादिस्मारकः। एवं व्यापकमपि व्याप्यस्मारकम्। एवमुत्तरत्रापि यथायथं मिथःस्मारकत्वम्। लक्षणं चिह्नम्। यथा ज्ञातं कपिध्वजादिकमर्जुनादेः स्मारकम्। सादृश्यं सादृश्यतया ज्ञातम्। परिग्रहः स्वीकारः स्वीकृतवस्त्विति यावत्। तच्च ज्ञातं तत्पूर्वस्वामिस्मारकम्। आश्रयाश्रितः सम्बन्धः संयोगादिः। यथा वह्न्यादिदर्शनेन पर्वतादेः स्मरणम्। आनन्तर्यं कार्यत्वादि। वियोगः प्रेमास्पदवस्तूनाम्। एककार्यमेककार्यकारि। विरोधः सहानवस्थानम्। अतिशय आधिक्यम्। प्राप्तिर्वियोगानन्तरप्राप्तिः। व्यवधानं व्यवधायकम्। यथा खड्गादेः कोषादिः। सुखदुःखे तत्प्रयोजकादिस्मारके। इच्छाद्वेषौ विषयस्मारकौ। अनयोर्ज्ञानं नापेक्षितम्। भयमपि स्वरूपसदेव मरणस्मारकम्। अर्थित्वं दातुः स्मारकम्। क्रिया शाखादेः। सा च तत्कारकवाय्वादिस्मारिका। रागः पुत्रादेः स्वरूपसन्नेव स्मारकः। धर्माधर्मौ जन्मान्तरानुभूतवस्तुविशेषस्मारकौ। ज्ञानमत्रापि नापेक्षितम्। यथा जातमात्रस्य स्तनपानादौ सुखसाधनतादिस्मरणम्। इदं च दिक्प्रदर्शनम्। तेन शक्त्यादिसम्बन्धपरिग्रहः॥ ४२॥

CC-0. In Public Domain. Digitized by eGangotri

समाप्तं बुद्ध्यात्मगुणत्वप्रकरणम् ॥

ननु बुद्धेर्बुद्ध्यन्तराद्विनाशः स्वतृतीयक्षणवृत्तिध्वंसप्रतियोगित्व एव सम्भवति तच्च न सम्भवति एकस्या एव बुद्धेर्विषयान्तरसञ्चारविरहादिसत्त्वे बहुतरक्षणस्थायित्वादित्यत आह ।

**कर्मानवस्थायिग्रहणात्[1] ॥ ४३ ॥**

कर्मवदनवस्थायिनां प्रत्यक्षाणां ग्रहणादनुभवात् । एकस्य शाखादेरनवरतक्रियास्थले यथा क्रियाणां नानात्वं तथा धारावाहिकप्रत्यक्षस्थले नैकं प्रत्यक्षं तथैवानुभवकल्पनाद् योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नगुणत्वेन नाशकत्वस्य लाघवेन कल्पनात् । न चापेक्षाबुद्धेः क्षणत्रयावस्थायित्वं न स्यादिति वाच्यम् । अपेक्षाबुद्धेरव्यवहितोत्तरक्षणे तदधिकरणे विशेषगुणान्तरोत्पादस्यैवाकल्पनात् । अपेक्षाबुद्ध्यन्यत्वं वा नाश्यविशेषणं देयम् । अपेक्षाबुद्धौ तु तृतीयक्षणोत्पन्नानां नाशकत्वं कल्प्यते फलबलात् । न चोत्तरत्वस्य स्वत्वघटितत्वेनाननुगमाद् विशेषत एव नाश्यनाशकभाव उपगन्तव्यस्तथा च धारावहनस्थले एकमेव ज्ञानं जायते लाघवादिति वाच्यम् । स्वप्रागभाववज्ज्ञाननिष्ठसामानाधिकरण्यसम्बन्धेन ज्ञानत्वेन गुणत्वेन वा हेतुत्वं ज्ञाननिष्ठप्रतियोगितासम्बन्धेन नाशत्वेन कार्यत्वमित्यत्र तात्पर्यात् धारावहनस्थले ऽनेकज्ञानकल्पनस्य फलमुखत्वेनादोषत्वादिति । यद्वा कर्मानवस्थायिग्रहणादित्यस्य कर्मणा यथोत्तरसंयोगोत्पत्त्यनन्तरमनवस्थायित्वानुभवेनोत्तरसंयोगनाश्यत्वं तथा ज्ञानानामपि

---

(१) अस्यार्थस्य ज्ञापनार्थं कर्मानवस्थायिग्रहणादिति सूत्रमिति वार्त्तिकम् । सिद्धान्तसूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

द्वितीयक्षणोत्पन्नेन ज्ञानादिना नाश्यत्वं तृतीयक्षणानवस्थायित्वग्रहादित्यर्थः। केचित्तु शरीरादिकर्मधाराया अनवस्थायिन्याः प्रत्यक्षधारापि वाच्या। न चाद्यबुद्धेरुत्तरग्राहकत्वं शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् पूर्वपूर्वस्य च परतःपरतोऽननुभवाद् विनाशसिद्धावाश्रयनाशादेरभावाद् विरोधिगुणस्यैव नाशकत्वमिति ॥ ४३ ॥

शङ्कते।

**अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत्[1] ॥ ४४ ॥**

अव्यक्तग्रहणं योग्याशेषविशेषधर्ममपुरस्कृत्य यत्किञ्चित्सामान्यधर्मपुरस्कारेण बुद्धौ भानं स्यादचिरस्थायित्वाद् विद्युत्सम्पातजन्यग्रहवदित्यर्थः ॥ ४४ ॥

उत्तरयति।

**हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा[2] ॥ ४५ ॥**

विद्युत्सम्पातरूपस्य दृष्टान्तस्य हेतोरुपादानात् प्रदर्शनात् प्रतिषेद्धव्यस्य बुद्धेराशुविनाशित्वस्याभ्यनुज्ञा त्वयैव कृतेत्यर्थः। एवं च कदाचिद्विद्युत्सम्पातेन यथा विशेषतो ग्रहणं तथान्यत्रापि यावदुपस्थितविशेषरूपेणापि ग्रहणमिति भावः ॥ ४५ ॥

(३)समाधानान्तरमाह।

**न प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्**

(१) इदं न्यायसूचीनिबन्धे वर्तते।

(२) इदमपि पूर्ववत्।

(३) अत्र न्यायसूत्रोद्धारे ग्रहणे हेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पादित्येकमधिकं सूत्रं दृश्यते। तन्न्यायसूचीनिबन्धे नास्ति। नापि वृत्तिकारैर्व्याख्यातम्।

CC-0. In Public Domain. Digitized by eGangotri

**तद्ग्रहणम्**[1] ॥ ४६ ॥

नाऽव्यक्तग्रहणं यथा प्रदीपार्चिषां सन्तन्यमानानामनवस्थायित्वे ऽपि अभिव्यक्तग्रहणं तथान्यत्रापि स्यात् । विद्युत्सम्पातस्थले या बुद्धिरुत्पन्ना सा स्वविषये व्यक्तैवेति भावः ॥ ४६ ॥

समाप्तं बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥

उत्पन्नापवर्गित्वं स्वोत्तरोत्पन्ननाश्यत्वम् ॥

बुद्धेः शरीरगुणत्वाभावस्य प्राङ्निर्धारितत्वे ऽपि विशेषार्थमाह ।

**द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः**[2] ॥ ४७ ॥

द्रव्ये पृथिव्यात्मकचन्दनादौ स्वगुणस्य रूपादेः परगुणस्य परस्य जलस्य सम्पर्केण तद्गुणस्य शीतस्पर्शादेश्चोपलब्धेः । एवं पृथिव्यात्मकशरीररूपादेस्तेजःसम्पर्केणोष्णस्पर्शादेश्चोपलब्धेश्च शरीरे बुद्धिमत्त्वसंशयः गौरोऽहं जानामीत्यादिप्रतीत्यात्मत्वेन भासमाने गौरे शरीरे परगुणस्य बुद्धेर्भानं किं वा स्वगुणस्य तस्येतिसंशयेन शरीरं बुद्धिमन्न वेति संशय इति भावः ॥ ४७ ॥

सिद्धान्तमाह ।

**यावच्छरीरभावित्वाद् रूपादीनाम्**[3] ॥ ४८ ॥

---

(१) इदमपि न्यायसूचीनिबन्धे वर्त्तते । तत्र न प्रदीपार्चिष इति पाठः । न्यायसूत्रोद्धारे तु नकाररहितः पाठः ।

(२) द्रव्ये स्वगुणपरगुणोपलब्धेः संशय इति । उक्तार्थं सूत्रमिति वार्त्तिकम् । ननु तद्गुणत्वं तत्रोपलब्ध्या सिध्यतीति वार्त्तिकं द्रव्ये स्वगुणपरगुणोपलब्धेः संशय इतिसूत्रविरुद्धमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

(३) न शरीरगुणश्चेतना यावद्द्रव्यभावित्वाद्रूपादीनाम् । दृष्टान्तसूत्रमिति वार्त्तिकम् । तत्र चायमेव पाठः । न्यायसूचीनिबन्धे ऽपि यावद्द्रव्येति पाठः । तच्च सिद्धान्तसूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

रूपादिविशेषगुणानां स्पर्शवद्विशेषगुणानामिति यावत् । यावच्छरीरभावित्वाद् यावत्स्वाश्रयवृत्तित्वनियमादित्यर्थः । स्वाश्रयकालीनध्वंसाप्रतियोगित्वादिति यावत् । एवं च बुद्धिर्न स्पर्शवतां शरीराणां विशेषगुणः स्वाश्रयत्वाभिमतकालीनध्वंसप्रतियोगित्वाच्छब्दवत् । व्यतिरेकेण रूपादिवदित्यनुमाने तात्पर्यम् । बुद्ध्यादिकं यदि शरीरविशेषगुणः स्याद् यावच्छरीरवृत्ति स्यादित्यादिर्विपर्ययपरिशोधकस्तर्कोऽपीति ज्ञेयम् ॥ ४८ ॥

पिठरपाकवादिमतेन शङ्कते ।

**न पाकजगुणान्तरोत्पत्तेः**[1] ॥ ४९ ॥

घटादौ पाकाधीनरूपनाशमादाय व्यभिचारान्नोक्तनियम इति भावः ॥ ४९ ॥

सिद्धान्तमाह ।

**प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः**[2] ॥ ५० ॥

अप्रतिषेधो नोक्तनियमप्रतिषेधः । पाकजानां रूपादीनां प्रतिद्वन्द्विसिद्धेः प्रतिद्वन्द्विनोऽग्निसंयोगादितः सिद्धेः । तथा चाग्निसंयोगाद्यजन्यत्वं निरुक्तहेतुघटकीभूतनाशविशेषणमिति भावः । पीलुपाकवादिमतेनोत्तरयति । प्रतिद्वन्द्वीति । प्रतिद्वन्द्विनोऽवयव्यन्तरस्य सिद्धेरित्यर्थ इत्यपि कश्चित् । केचित्तु अयावच्छरीरभावित्वमेव शरीविशेषगुणत्वाभावसाधकम् । तत्रैवाशङ्कितं द्वितीयसूत्रेण । समाधत्ते । प्रतिद्वन्द्वीत्यादिसूत्रेण । तदर्थस्तु पाकजानां प्रतिद्वन्द्विनि पूर्वशरीरनाशेन जाते शरीरे सिद्धेः । घटा-

(१) परे तु सिद्धान्तसूत्रमेवेदमिति वृत्तिकृतः । न्यायसूचीनिबन्धे ऽपीदं वर्तते ।
(२) इदं न्यायसूचीनिबन्धे वर्तते । सिद्धान्तसूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

दीनां पाकजरूपोत्पादसम्भवेऽपि शरीरे न तत्सम्भवः । शरीरावयवानां चर्मादीनामग्निसंयोगविशेषेण नाशावश्यकत्वादिति भावः । अन्ये तु न पाकजगुणान्तरोत्पत्तेरिति सूत्रमपि सिद्धान्तरूपं पूर्वपक्षश्च मनस्यभिप्रेतस्तथा च पाकजगुणनाशमादाय न व्यभिचारः पाकजगुणान्तरोत्पत्तेः पाकेन पूर्वरूपनाशानन्तरमेव रूपान्तरोत्पत्तेः स्वसमानाधिकरणस्वसमानजातीयसमानकालीनत्वमयावद्द्रव्यभावित्वरूपहेतौ विशेषणं देयं तच्च पाकनाश्यरूपादौ नास्तीति न व्यभिचारः । नन्वेतद्विशेषणमेव शरीरविशेषगुणत्वाभावसाधकमस्तु किमधिकेनेत्यतस्तथैवाह । प्रतिद्वन्द्वीति । पाकजानां प्रतिद्वन्द्विसिद्धेः विरोधिसिद्धेः । एकस्मिन् रूपे विद्यमाने रूपान्तराभावात् प्रकृते त्वेकस्मिन् ज्ञाने सत्यपि द्वितीयक्षणे ज्ञानान्तरोत्पत्तेर्ज्ञानादिकं न शरीरविशेषगुण इत्यर्थ इत्याहुः ॥ ५० ॥

हेत्वन्तरमाह ।

**शरीरव्यापित्वात्**(१) ॥ ५१ ॥

रूपादीनामिति शेषः । शरीरव्यापित्वं च सर्वावयवावच्छेदेन वर्तमानत्वम् । तथा च शरीराव्यापकत्वेन ज्ञानसुखादेः शरीरविशेषगुणत्वाभावः साध्यते शरीराव्यापकत्वं च तेषां हृदयाद्यवयवविशेषावच्छेदेनैवानुभवादिति भावः ॥ ५१ ॥

शङ्कते ।

**न केशनखादिष्वनुपलब्धेः**(२) ॥ ५२ ॥

(१) शरीरव्यापित्वादित्येतस्य सूत्रस्य स्पष्टत्वाद् भाष्यकारादिभिरुपेक्षित इति न्यायवर्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । शरीरव्यापित्वादितिसूत्रमन्यथा व्याचष्ट इति न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायाः ।

(२) न शरीरावयवाश्चेतनाः केशनखादिष्वनुपलब्धेरिति दृष्टान्तसूत्रमिति



CC-0. In Public Domain. Digitized by eGangotri

रूपादीनामपि न शरीरव्यापकत्वं केशनखादिष्वनुपलब्धेरिति ॥ ५२ ॥

शङ्कां निरस्यति ।

**त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः**[1] **॥ ५३ ॥**

केशनखादिषु शरीरत्वाभावेन शरीररूपस्पर्शादीनामप्रसङ्गेऽपि न शरीराव्यापकत्वमित्यर्थः । अन्ये तु चैतन्यादिकं न शरीरगुणः शरीरव्यापित्वात् शरीरे तदवयवे चैकेन सम्बन्धेन सत्त्वात् शरीरगुणस्तु न स्वावयववृत्तिः । शङ्कते । न केशेति । अप्रसङ्गः चैतन्यानुपलब्धेः । समाधत्ते । त्वगितीत्याहुः ॥ ५३ ॥

हेत्वन्तरमाह ।

**शरीरगुणवैधर्म्यात्**[2] **॥ ५४ ॥**

बुद्धिर्न शरीरगुणः शरीरगुणवैधर्म्यं बहिरिन्द्रियावेद्यत्वे सति वेद्यत्वम् ॥ ५४ ॥

आशङ्कते ।

**न रूपादीनामितरेतरवैधर्म्यात्**[3] **॥ ५५ ॥**

नोक्तं युक्तं परस्परवैधर्म्यात् विभिन्नेन्द्रियग्राह्यत्वात् । तथा च त्वद्रीत्या स्पर्शादीनां शरीरगुणत्वं न स्यादचाक्षुषत्वात् । तथा चाप्रयोजकं त्वदुक्तमिति भावः ॥ ५५ ॥

---

वार्त्तिकम् । दृष्टान्तसूत्रमिति । न करचरणादयश्चेतना शरीरावयवत्वात् केशनखादिवदिति दृष्टान्तार्थं सूत्रमित्यर्थ इति तात्पर्यटीका ।

(१) अन्यथा त्वक्पर्यन्तत्वाच्छरीरस्येतिसूत्रव्याघातादिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

(२) इदं न्यायसूचीनिबन्धे वर्तते ।

(३) इदमपि पूर्ववत् ।

CC-0. In Public Domain. Digitized by eGangotri

शङ्कां निरस्यति ।

**ऐन्द्रियकत्वाद् रूपादीनामप्रतिषेधः[१] ॥ ५६ ॥**

न रूपादीनां शरीरगुणत्वप्रतिषेध ऐन्द्रियकत्वात् । तत्तदिन्द्रियाग्राह्यत्वलक्षणतत्तद्गुणवैधर्म्यसत्त्वेऽपि शरीरगुणत्वावच्छिन्नवैधर्म्यस्य बहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वस्याभावात् बुद्धौ च तत्सत्त्वादिति भावः । यद्वा ऐन्द्रियकत्वाच्छरीरे प्रत्यक्षसिद्धत्वात् । तथा च परस्परवैधर्म्यं प्रत्यक्षेण बाधितम् । शरीरगुणवैधर्म्येण साधने न किमपि बाधकम् । न च गौरोऽहं जानामीत्यादिप्रत्यक्षमेव बाधकमिति वाच्यम् । तादृशप्रत्यक्षस्य सन्दिग्धप्रामाण्यकत्वात् पूर्वोक्तयुक्तेः ॥ ५६ ॥

समाप्तं बुद्धेः शरीरगुणभेदपरीक्षाप्रकरणम् ॥

पूर्वं प्रसङ्गतो मनसः परीक्षणेऽपि विशेषार्थं क्रमप्राप्तं मनः परीक्षयति ।

**ज्ञानायौगपद्यादेकं मनः[२] ॥ ५७ ॥**

ज्ञानानां चाक्षुषादिप्रत्यक्षाणामेकदानुत्पादान्मनः स्वीकार्यम् । तच्च लाघवात् ज्ञानायौगपद्यानुपपत्तेश्चैकं कल्प्यते । तथाहि विषये चक्षुर्घ्राणादिसन्निकर्षे चाक्षुषं घ्राणजादिकं वैकं ज्ञानं जायते न तु सर्वमित्यनुभवस्तत्सम्पत्तिश्च चक्षुःसन्निकर्षादिघटितचाक्षुषसामग्रीकालीनश्चाक्षुषाभावः किञ्चित्कारणाभावप्रयुक्तः कार्याभावत्वादित्यनुमानेन तादृशसामग्रीकालीनाभावप्रतियोगित्वेन चाक्षुषादौ चक्षुःसंयोगाद्यतिरिक्तकारणकत्वानुमानेन चा-

---

(१) ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः । द्वये शरीरगुणा भवन्तीत्युक्तः सूत्रार्थ इति वार्त्तिकम् ।

(२) इदं न्यायसूचीनिबन्धे वर्तते । सिद्धान्तसूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

क्षुषादिकारणतया यत्किञ्चिद्वस्तुसिद्धिः । तच्च वस्तु चक्षुर्मनोयोगादि तेन मनसोऽपि सिद्धिः तत्र चाक्षुषकारणतावच्छेदकतया एकस्य घ्राणजादिकारणतावच्छेदकतया ऽन्येषां कल्पने गौरवं कदाचित् तेषामेकदैव चक्षुरादौ संयोगसम्भवेन ज्ञानायौगपद्यावारणं चेति प्रतिपुरुषमेकं मनः कल्प्यते तेनैव मनसात्मसंयोगस्य ज्ञानाद्यसमवायिकारणताप्युपपन्ना तत्संयोगस्य जन्यज्ञानसामान्ये ऽसमवायिकारणत्वे मनसोऽपि जन्यज्ञानसामान्ये कारणत्वं व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावात् तेन ज्ञानार्थकमनधातुनिष्पन्नं मन इति पदम् । एवं च चाक्षुषत्वाद्यवच्छिन्नं प्रति मनस्त्वेन न कारणता सुषुप्त्यनुरोधेन त्वङ्मनोयोगस्य जन्यज्ञानसामान्यहेतुत्वात् त्वाचं प्रति त्वङ्मनोयोगस्य न हेतुत्वान्तरं तत्स्वीकारे ऽपि चाक्षुषादिसामग्र्याः त्वाचप्रत्यक्षप्रतिबन्धकतावश्यकत्वादन्यथा त्वचा विषयसम्बन्धे चाक्षुषादिकं कदापि न स्यादिति । मनसोऽद्रव्यत्वे चक्षुरादौ समवायादिरेव तत्सम्बन्धः कल्प्यस्तस्य च नियततया न तेन यौगपद्यवारणमिति परिशेषान्मनसो द्रव्यत्वं चक्षुरादिना तत्संयोगानां च हेतुत्वं सिद्धम् । विषयेण मनोयोगस्य हेतुतायाः प्रागेव निरासात् । इत्थं चात्मा मनसा मन इन्द्रियेणेन्द्रियं विषयेण संयुज्यते ततो ज्ञानमिति सिद्धान्तः सर्वसम्मतः । श्रुतिरपि तथा प्रतिपादयति ॥ ५७ ॥

दीर्घशष्कुलीभोजनादौ ज्ञानयौगपद्यदर्शनात् कथं तदयौगपद्येन मनः कल्पनीयमित्याशङ्कते ।

**न युगपदनेकक्रियोपलब्धेः(१) ॥ ५८ ॥**

(१) न युगपदनेकक्रियोपलब्धेरिति । शेषं भाष्य इति वार्त्तिकम् । इदं न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

न मनःकल्पनमनेकक्रियाणामनेकज्ञानानामुपलब्धेरित्यर्थः ॥ ५८ ॥

समाधत्ते ।

**अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारात्**[1] ॥ ५९ ॥

अलातचक्रे वेगातिशयेन भ्राम्यमाणे क्रियासन्तानस्यैक्यग्रहणवत् तदुपलब्धिः क्रमिकेऽपि चाक्षुषघ्राणजादौ युगपदुत्पाददर्शनम् । आशुसञ्चारान्मनसोऽतिवेगवत्तया शीघ्रं चक्षुरादिना क्रमिकमनःसंयोगजननात् । एवं चात्र यौगपद्यभ्रमे शीघ्रतरमनःसंयोगस्य दोषतया हेतुत्वं बोध्यम् ॥ ५९ ॥

ननु मनसा चक्षुरादिनानेन्द्रियसंयोगानां युगपदुत्पाद एव कथं न भवतीत्यत आह ।

**यथोक्तहेतुत्वाच्चाणु**[2] ॥ ६० ॥

मन इति शेषः । यथोक्तहेतुत्वात् ज्ञानायौगपद्यरूपहेतुबलादित्यर्थः । तथा च मनसोऽणुतया न युगपन्नानेन्द्रियसंयोगसम्भव इति भावः ॥ ६० ॥

समाप्तं मनःपरीक्षाप्रकरणम् ॥

ननु कदाचिच्चक्षुर्मनोयोगेन चाक्षुषादिकं जायत इत्यत्र किं नियामकमित्याकाङ्क्षायामाह ।

**पूर्वकृतफलानुबन्धात् तदुत्पत्तिः**[3] ॥ ६१ ॥

(१) अस्योत्तरद्वारकं सूत्रम् । अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारादिति वार्त्तिकम् ।

(२) यथोक्तहेतुत्वाच्चाण्विति सूत्रं यथोक्तस्य ज्ञानायौगपद्यस्यैवाणुत्वे हेत्वन्तरमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

(३) इदं न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

पूर्वकृतस्य यागहिंसादेः फलं धर्माधर्मरूपं तदनुबन्धात् तद्विशेषात् तत्कृतनियमाच्चेत्यर्थः । तदुत्पत्तिः चक्षुर्मनोयोगादिनियमेन चाक्षुषाद्युत्पत्तिः ॥ ६१ ॥

शङ्कते ।

**भूतेभ्यो मूर्त्युपादानवत् तदुपादानम्**[1] ॥६२॥

भूतेभ्य इति सावधारणम् । तथा चादृष्टनिरपेक्षैर्भूतैः कदाचित् परस्परयुक्तैर्यथा शरीरादिकं जन्यते तथा चक्षुरादिमनसोः कदाचित् संयोगेन चाक्षुषाद्युत्पत्तिरिति समुदितार्थः ॥ ६२ ॥

समाधत्ते ।

**न साध्यसमत्वात्**[2] ॥ ६३ ॥

नोक्तं युक्तं दृष्टान्तस्य शरीरादेः साध्यसमत्वाददृष्टाधीनभूतसंयोगजन्यत्वेन पक्षसमत्वादित्यर्थः ॥ ६३ ॥

शरीरस्यादृष्टाधीनत्वं वक्तुं सूत्रद्वयमाह ।

**नोत्पत्तिनिमित्तत्वान्मातापित्रोः**[3] ॥ ६४ ॥

**तथाहारस्य**[4] ॥ ६५ ॥

---

(१) अत्र नास्तिक एवमाह भूतेभ्यो मूर्त्युपादानवत् तदुपादानम् । यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्तयः सिकताशर्करागैरिकाञ्जनप्रभृतयः पुरुषार्थक्रियाकारकत्वादुपादीयन्ते तथा शरीरसर्गोऽपीति पुरुषार्थक्रियासामर्थ्यादित्येतस्य हेतोरनैकान्तिकद्वारकं सूत्रमिति वार्त्तिकम् । न्यायसूचीनिबन्धेऽपीदं वर्तते ।

(२) इदमपि न्यायसूचीनिबन्धे वर्तते ।

(३) ननु मातापित्रोश्चोत्पत्तिनिमित्तत्वादित्येतत्सूत्रविपरीतार्थमिदं प्राप्तौ चानियमादिति सूत्रमित्यत आह तस्मादित्तीति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

(४) तथाहारस्य । उत्पत्तिनिमित्तत्वादिति प्रकृतमिति वार्त्तिकम् । पूर्वसूत्रप्रतीकेन पूरयति । उत्पत्तिनिमित्तत्वादिति प्रकृतमिति तात्पर्यटीका । इदं न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

शरीरस्यादृष्टाधीनोत्पत्तिः । हेतुमाह । मातापित्रोः शरीरोत्पत्तिनिमित्तत्वात् । शरीरे निमित्तहेतुत्वात् । मातापित्रोर्हेतुत्वे द्वारमाह । तथाहारस्य । आहारजन्यशुक्रशोनितादेर्हेतुत्वादित्यर्थः । केचित्तु आहारस्य पितामहपिण्डभोजनादेरदृष्टद्वारा पुत्रजनकत्वादित्यर्थः ॥ ६४ ॥ ६५ ॥

ननु तावता कथमदृष्टसापेक्षतेत्यत आह ।

**प्राप्तौ चानियमात्[1] ॥ ६६ ॥**

प्राप्तौ च प्राप्तावपि दम्पत्योः सम्प्रयोगे ऽपि गर्भस्य यतो न नियमस्ततोऽदृष्टस्य सहकारित्वमावश्यकमिति भावः ॥ ६६ ॥

उपसंहरति ।

**शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म[2] ॥ ६७ ॥**

कर्म कर्मजन्यादृष्टविशेषः । यथा शरीरोत्पत्तिनिमित्तं तथा चक्षुर्मनःसंयोगाद्युत्पत्तिनिमित्तमित्यर्थः । यद्वा नन्वात्मनो विभुतया सर्वस्मिन्नेव शरीरे सर्वात्मसंयोगसत्त्वेन सर्वशरीरावच्छेदेन सर्वस्य भोगः स्यात् । न च तत्तच्छरीरस्वभाव एव तत्तदात्मभोगावच्छेदकत्वनियामक इति वाच्यम् । तथा सति जगत एव स्वाभाविक-

---

(१) पूर्वपूर्वसूत्रस्य टिप्पणी द्रष्टव्या । पूर्वसूत्रेण मातापित्रोः कारणत्वमुक्तं प्राप्तौ चानियमादितिसूत्रेण व्यभिचाराद् दूष्यत इति न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायाः ।

(२) अस्योत्तरद्वारकं सूत्रम् । शरीरोत्पत्तिनिमित्तवत् संयोगनिमित्तं कर्मेति वार्त्तिकम् । तत्र चायमेव पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

त्वापत्तेः। न च तददृष्टजन्यत्वमेव तत्पुरुषीयज्ञानाद्यवच्छेदकत्वे नियामकमिति वाच्यम्। मृतशरीरेऽपि ज्ञानाद्यवच्छेदकत्वापत्तेरिति चेदत्राह। शरीरोत्पत्तीति। शरीरोत्पत्तौ यथा तत्तत्पुरुषादृष्टविशेषो निमित्तं तथा तत्तच्छरीरतत्तदात्मसंयोगेऽपि स एवादृष्टविशेषो निमित्तमित्यर्थः। तथा च तददृष्टविशेषजन्यतावच्छेदकः शरीरात्मसंयोगविशेषगतवैजात्यविशेषः तादृशवैजात्यावच्छिन्नसंयोगसम्बन्धेनैव शरीरस्य तत्पुरुषीयज्ञानाद्यवच्छेदकतया मृतशरीरे परशरीरे तादृशविजातीयसंयोगाभावान्नातिप्रसङ्ग इति भावः। शरीरतदात्मसंयोगौ विना भोगाद्यनुपपत्त्या संसारिणां शरीरनियम इति च भावान्तरमित्ति॥ ६७॥

सर्वत्रादृष्टस्य हेतुत्वे युक्त्यन्तरमाह।

**एतेनानियमः प्रत्युक्तः**[१] ॥ ६८ ॥

एतेनादृष्टविशेषहेतुकत्वव्यवस्थापनेनानियमः कदाचिन्मनुष्यशरीरसम्बन्धः कदाचिदन्यादृशशरीरसम्बन्धः कदाचित् सकलावयवसम्पन्नं शरीरं कदाचिच्च विकलावयवमित्यादिनियामकालाभः प्रत्युक्तः समाहित इत्यर्थः। अदृष्टविशेषेणैव तन्नियमोपपत्तेः। न चादृष्ट एव किं नियामकमिति वाच्यम्। तत्राप्यदृष्टान्तरस्य नियामकत्वात्। अनादित्वेन चानवस्थानवकाशादिति जन्यमात्रं प्रत्येवादृष्टस्य हेतुत्वमुक्तं कथमन्यथा पदार्थानां क्रमिकत्वं वैचित्र्यं च सङ्गतं स्यात् स्वभावस्य सर्वदैव समानत्वात् पर-

(१) नन्वेतेनानियमः प्रत्युक्त इति सूत्रं विपरीताभिधायकं परदर्शने व्यवस्था प्रत्युक्तेतीति विवेचितमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः।

CC-0. In Public Domain. Digitized by eGangotri

मेश्वरस्य सांख्योक्तप्रकृतेश्च सर्वान् प्रत्यविशेषाच्चेति दिक् । ननु शरीरतत्सम्बन्धादेरदृष्टाधीनत्वे कथं तद्विनाश इत्यत आह भाष्यकारः । तद्वियोगश्च कर्मक्षयोपपत्तेः[1] ॥ कर्मणा अदृष्टेन क्षयोपपत्तेरित्यर्थः । यद्वा भोगजनकादृष्टक्षयेणोपपत्तेरित्यर्थः । वस्तुतस्तु शरीरसम्बन्धस्यादृष्टाधीनत्व एव मोक्षोपपत्तिरित्याह । तद्वियोगश्चेति । तदत्यन्तविमोक्षश्च कर्मक्षयोपपत्तेः । अशेषकर्मणां क्षयेणैवोपपत्तेः । कारणाभावात् कार्यानुत्पत्तेरिति भावः ॥ ६८ ॥

यदि च भूतैरेव स्वभावतो देहादिकं जन्यते तदैव मोक्षानुपपत्तिरित्याह ।

पुनस्तत्प्रसङ्गोऽपवर्गे[2] ॥ ६९ ॥

तत्प्रसङ्गः शरीरसम्बन्धप्रसङ्गः । अपवर्गे मोक्षदशायामपि । तदानीमपि भूतस्वभावादेर्दुरपह्नवत्वात् । न च भूतनिष्ठमेवादृष्टं कल्प्यतां किमात्मनिष्ठत्वेनेति वाच्यम् । भूतानामनेकत्वेन तत्कल्पने गौरवात् । वैयधिकरण्येनात्मनिष्ठभोगजनकत्वासम्भवात् सम्बन्धान्तरकल्पने गौरवात् भूतानां सर्वान् प्रत्यविशेषेणादृष्टाकृष्टैरपि तैर्भोग्यैरात्मविशेषभोगनियमानुपपत्तेश्च ॥ ६९ ॥

मनोनिष्ठमदृष्टं केचन मन्यन्ते तन्मतं दूषयति ।

मनःकर्मनिमित्तत्वाच्च संयोगाव्युच्छेदः[3] ॥७०॥

---

(१) भाष्ये तु उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेरिति पाठः ।

(२) न्यायसूचीनिबन्धादिषु तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे इति पाठः । शङ्कते । तददृष्टकारितमिति चेदितीति तात्पर्यटीका ।

(३) इदं न्यायसूचीनिबन्धे वर्तते । तत्र च संयोगाद्यनुच्छेद इति पाठः । क्वचित् संयोगानुच्छेद इति पाठः । आदर्शपुस्तके तु संयोगाव्यवच्छेद इति पाठः परं तु व्याख्याने ज्ञानादिकारणस्याव्युच्छेद इति दृश्यते ।

CC-0. In Public Domain. Digitized by eGangotri

संयोगस्य शरीरारम्भकादेर्ज्ञानादिकारणस्याव्युच्छेदोऽविरलधारा स्यात् कुतो मनःकर्मनिमित्तत्वात्। मनसो नित्यतया तत्स्वाभाविकस्य कर्मणोऽदृष्टस्यापि नित्यतया तन्निमित्तत्वेन तादृशसंयोगस्य नियतोत्पत्तिसम्भवादिति भावः ॥ ७० ॥

नन्वेकसंयोगस्यापरसंयोगविरोधित्वान्न तद्धाराप्रसङ्ग इत्यत आह।

**नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः**(१) ॥ ७१॥

नित्यत्वप्रसङ्गः शरीरादेरविनाशित्वप्रसङ्गः। प्रायणस्य मरणस्यानुपपत्तेरित्यर्थः। भोगजनकादृष्टक्षये सत्येव मरणादिकं स्यात् तादृशादृष्टस्य च मनःस्वभावात्मकत्वेनाविनाशात् तन्न स्यादिति भावः। न च पुरुषकर्मणा भोगजनकमदृष्टं मनसि जायते तस्यानित्यत्वान्न मरणाद्यनुपपत्तिरिति वाच्यम्। वैयधिकरण्येन पुरुषकर्मणो मनस्यदृष्टजननासम्भवात् तददृष्टेन पुरुषभोगजननासम्भवाच्चेति ॥ ७१ ॥

शङ्कते।

**अणुश्यामतानित्यत्ववदेतत् स्यात्**(२) ॥७२॥

यथा परमाणुश्यामताया नित्यत्वेऽपि स्वाभाविकत्वेऽपि निवृत्तिस्तथा मनसोऽदृष्टस्यापि फलबलात् कल्प्यत इति न मरणाद्यनुपपत्तिरिति ॥ ७२ ॥

---

(१) इदमपि न्यायसूचीनिबन्धे वर्तते।

(२) इदमपि पूर्ववत्।

CC-0. In Public Domain. Digitized by eGangotri

समाधत्ते ।

**नाकृताभ्यागमप्रसङ्गात्**[1] ॥ ७३ ॥

मनोनिष्ठादृष्टस्याजन्यत्वेऽविनाशोऽनादिभावस्य नित्यत्वस्यैव कल्पनादिति तज्जन्यं वाच्यं तत्र पुरुषकर्मजन्यत्वं प्रागेव निरस्तमित्यकृतस्याकस्मिकस्यादृष्टस्याभ्यागमप्रसङ्गात् स्वीकारप्रसङ्गान्नोक्ताशङ्कनमित्यर्थः । निरुक्तदृष्टान्तेऽप्येवमिति दृष्टान्तासिद्धिरपि बोध्या ॥ ७३ ॥

समाप्तमदृष्टनिष्पाद्यताप्रकरणम् ॥

इति तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥

इति न्यायसूत्रे तृतीयोऽध्यायः ॥

इति न्यायसूत्रविवरणे तृतीयाध्यायविवरणम् ॥



(१) सिद्धान्तसूत्रमिति वृत्तिकृतः । एतच्च न अकृताभ्यागमप्रसङ्गादिति । अनुपपन्नप्रमाणस्याभ्युपगमोऽकृताभ्यागम इति सूत्रार्थ इति यथाश्रुति वा सूत्रार्थ इति च वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

# न्यायसूत्रविवरणे

## चतुर्थोऽध्यायः ।

यद्यपि पूर्वमुद्देशलक्षणेनैव परीक्षितौ प्रवृत्तिदोषौ तथापि प्रतिज्ञातायां प्रमेयपरीक्षायां क्रमप्राप्तयोस्तयोरपि परीक्षाकाङ्क्षोदयात् तदर्थं पूर्वोक्तमनुवदति सूत्रद्वयेन । तथा चार्थभेदेन प्रकरणभेदस्य समुचितत्वे ऽपि लाघवेन परस्परसाकाङ्क्ष्यथातथाशब्दाभ्यामेकप्रकरणतया प्रवृत्ति-दोषौ परीक्षिताविति ।

**प्रवृत्तिर्यथोक्ता**(१) ॥ १ ॥

**तथा दोषाः**(२) ॥ २ ॥

प्रवृत्तिर्यथोक्ता प्रागेव परीक्षिता तथा दोषा अपि परीक्षिता इत्यर्थः । तत्र शरीरे चेष्टादिकार्यलिङ्गेन सिद्धा प्रवृत्तिः सा च द्वेधा नित्या अनित्या च । तत्राद्या पर-मेश्वरनिष्ठा तदन्यनिष्ठा द्वितीया प्रवृत्तोऽस्मीत्यादिप्रत्य-क्षसिद्धापीयम् । रागजन्यतावच्छेदकप्रवृत्तित्वस्येश्वरकृ-तिनिष्ठत्वाभावे कृतिरेवात्राभिहिता कृतित्वमपि करो-मीत्यादिप्रत्यक्षसिद्धमिति । दोषा अपि प्रत्यक्षेण प्रवृ-

---

(१) प्रवृत्तिपरीक्षायामाकाङ्क्षितायां सूत्रमिति वृत्तिकृतः । प्रवृत्तिर्यथोक्ता तथा परीक्षितेत्यर्थः सूत्रस्येति वार्त्तिकम् । प्रवृत्तिः परीक्षितुं युक्ता सा कस्मान्न परीक्ष्यत इति-शङ्कानिराकरणाय सूत्रमित्याह । मनसोऽनन्तरमितीति तात्पर्यटीका ।

(२) प्रथमसूत्रव्याख्यावसरे अग्रिमसूत्रस्थतथाशब्देनान्वयो युक्त इत्युक्तं वृत्ति-कारैः । प्रवृत्तिदोषसूत्राभ्यामिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

त्यादिलिङ्गेन च सिद्धा वेदितव्या । दोषत्वं च संसारमूलत्वेनैषामिति ॥ १ ॥ २ ॥

समाप्तं प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥

प्रकरणान्तरेण दोषविशेषान् परीक्षयति ।

**तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्**[1] ॥ ३ ॥

तेषां दोषाणां त्रयो राशयः पक्षा यस्य तत्त्वं दोषविभाजकोपाधित्रयं दोषवृत्तीति यावत् । रागद्वेषमोहानामर्थान्तरभेदात् परस्परभेदसत्त्वादित्यर्थः । रागत्वद्वेषत्वमोहत्वानां विभाजकत्वमिति भावः । कामादीनामत्रैवान्तर्भावान्न विभागव्याघातः । रागत्वमत्रेच्छात्वमेव । तेन काममत्सरतृष्णामायादम्भद्रोहाणां रागपदेन ग्रहणम् । कामो रिरंसा रमणं च संसर्गविशेषः । उत्कटरिरंसा रतिः । मत्सरः स्वप्रयोजनानुसन्धानं विना पराभिमतनिराकरणेच्छा । तृष्णा धनलाभेच्छा । अपरद्रव्येच्छा लोभः । यद्वा धनादिलाभेच्छा लोभः । उत्कटधनादिलाभेच्छा तृष्णा । परवञ्चनेच्छा माया । स्वोत्कर्षज्ञापनेच्छा दम्भः । द्रोहो जिघांसा[2] । क्रोधेर्षासूयामर्षाभिमानादीनां द्वेषपदेन ग्रहणम् । तत्र क्रोधो नेत्रलौहित्यादिहेतुर्द्वेषविशेषः । ईर्षा साधारणवस्तुनि परस्वत्वात् तद्ग्रहीतरि द्वेषः । असूया परगुणादौ द्वेषः । अमर्षः कृतापराधे ऽसमर्थस्य द्वेषः । अभिमानोऽपकारिण्यकिञ्चित्करस्यात्मनि द्वेषः । विपर्ययसंशयतर्कमानप्रमादभयशोकादीनां मोहान्तर्गतत्वम् । तेन मोहत्वमत्र स्वविशेष्यावृत्तिप्रकारकस्वरूपभ्रमत्वम् । विपर्ययोऽयथार्थनिश्चयः । संशय उक्त एव । तर्क आपत्तिः । मानोऽविद्यमानगुणारोपेणात्मन्युत्कर्षबुद्धिः । प्रमादः पूर्वं

(१) तत्र सिद्धान्तसूत्रमिति वृत्तिकृतः ।

(२) वृत्तिकारैस्तु द्रोहो नाशाय द्वेष इति द्वेषपक्षे निक्षिप्य व्याख्यातम् ।

CC-0. In Public Domain. Digitized by eGangotri

कर्तव्यतया निश्चिते ऽकर्तव्यताधीः । एवमकर्तव्ये कर्तव्यताधीः । भयमनिष्टशङ्का । शोक इष्टवियोगे तल्लाभानर्हताज्ञानम् । मिथ्याज्ञानं देहादावात्मबुद्धिरिति ॥ ३ ॥

शङ्कते ।

**नैकप्रत्यनीकभावात्**(१) ॥ ४ ॥

रागादीनां न भेद एकप्रत्यनीकभावादेकविरोधादेकेन तत्त्वज्ञानेन विनाऽनिवर्त्यत्वादिति यावत् ॥ ४ ॥

समाधत्ते ।

**व्यभिचारादहेतुः**(२) ॥ ५ ॥

एकनिवर्त्यत्वमेकनाश्यत्वं नाभेदसाधकं व्यभिचारादेकघटनाशनाश्यत्वे ऽपि तदाश्रितरूपरसादीनां भेदात् । एकेन विपरीतदर्शनेन प्रत्यक्षानुमित्यादीनां निवर्त्यत्वे ऽपि भेदाच्च ॥ ५ ॥

सामाधानान्तरमाह ।

**तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः**(३) ॥ ६ ॥

यद्यपि बहूनां निर्धारणे इष्ठस्य तमस्य वा विधानात् पापिष्ठः पापतम इत्यस्य वक्तुमुचितत्वात् पापीयानित्यसङ्गतिः । न च द्वौद्वावधिकृत्य निर्धारणं द्वयोर्निर्धारणे ईयसुविधानात् तेन रागमोहयोर्मोहद्वेषयोर्मोहः पापीयाननर्थमूलं बलवद्द्वेष्य इति यावदिति वाच्यम् । तेषामित्यनेन द्वित्वेन बोधयितुमशक्यत्वात् । न च तौ च तौ

(१) इदं न्यायसूचीनिबन्धे वर्तते ।
(२) इदमपि पूर्ववत् ।
(३) इदमपि तथा ।

CC-0. In Public Domain. Digitized by eGangotri

चेत्येकशेषकरणात् तथालाभ इति वाच्यम् । भिन्नार्थकस्वरूपैकशेषानभ्युपगमात् । तथाप्येकरूपेणोपस्थितानां बहूनां निर्धारणे ऽपि कदाचिदीयसुप्रत्ययोपगमात् तेषां दोषाणामित्यर्थः । वस्तुतोऽत्र षष्ठ्यैव निर्धारणं बोध्यते ईयसुप्रत्ययेनातिशयमात्रं बोध्यत इति । हेतुमाह । अमूढस्य मोहरहितस्य नेतरोत्पत्तेः रागद्वेषोत्पत्त्यभावात् । व्युत्पत्तिवैचित्र्येण पञ्चमीप्रकृतेरुत्पत्तेः प्रतियोगितया नञर्थाभावे तस्य च पञ्चम्यर्थे ऽन्वयात् । तथा च तत्त्वज्ञाननिवर्त्यत्वं मोहस्यैव रागद्वेषयोस्तु मोहनिवृत्तावेव निवृत्तिरित्येकनिवर्त्यत्वमपि नास्तीति भावः । न च तत्त्वज्ञानिनो हिताहितविषयकप्रवृत्त्या रागाद्यस्त्येवेति कुतो मोहनिवृत्तिनिवर्त्यत्वं तत्त्वज्ञाननिवर्त्यत्वं वा रागादेरिति वाच्यम् । तादृशरागद्वेषयोर्धर्माधर्मानुपधायकत्वेनादोषत्वात् । दोषरूपयोरेव तयोर्मोहनिवृत्तिनिवर्त्यत्वात् । धर्माधर्महेतुत्वं च विजातीयरागत्वादिनेत्युक्तमेव तादृशवैजात्यं च मोहजन्यतावच्छेदकतया सिद्धं मिथ्याज्ञानस्य तज्जन्यवासनाया वा धर्माधर्महेतुत्वं तद्विरहादेव तत्त्वज्ञानिनां रागादिमत्त्वे ऽपि न धर्माद्युत्पत्तिरिति तु नव्याः । अत एव श्रीभागवते । मुक्तस्तावद्विभूयात् स्वदेहमारब्धमश्नन्नभिमानशून्यः । मुक्तस्तत्त्वज्ञानी अभिमानशून्यो देहात्मबुद्धिरूपमिथ्याज्ञानशून्य इति ॥ ६ ॥

शङ्कते ।

**प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः[१] ॥ ७ ॥**

(१) प्राप्तस्तर्हीत्यंशस्तु न सूत्रं किं तु भाष्यकृतः पूरणमित्यपि वदन्तीतिवृत्तिलेखदर्शनादवगम्यते ऽवशिष्टांशस्य सूत्रत्वे विवादाभाव इति । न्यायसूचीनिबन्धादौ प्राप्तस्तर्हीत्यंशो नास्ति ।

CC-0. In Public Domain. Digitized by eGangotri

निमित्तं मोहः नैमित्तिकौ रागद्वेषाविति । दोषेभ्योऽर्थान्तरभावोऽर्थान्तरत्वं दोषभिन्नत्वमिति यावत् । मोहस्य प्राप्तः दोषहेतूनामपि दोषत्वे तद्धेतूनामपि तत् स्यादिति भावः । दोषेभ्य इति बहुवचनं रागद्वेषयोरवान्तरभेदापेक्षयेति । प्राप्तस्तर्हीति भाष्यकृतः पूरणमिति केचित् ॥ ७ ॥

शङ्कां निरस्यति ।

न दोषलक्षणावरोधान्मोहस्य[१] ॥ ८ ॥

नोक्तदोषः मोहस्य दोषलक्षणाक्रान्तत्वादवान्तरकार्यकारणभावस्तु न तत्र बाधकोऽन्यथा रागविशेषे ऽपि रागविशेषस्य हेतुतया तत्रापि दोषत्वं रागत्वं च न स्यादिति भावः ॥ ८ ॥

नन्वेकजातीयानां कथं कार्यकारणभाव इत्यत आह ।

निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः[२] ॥ ९ ॥

एकजातीययोरपि अवान्तरवैलक्षण्येन हेतुहेतुमद्भावसम्भवान्न तत्प्रतिषेध इत्यर्थः । तथा च द्रव्यत्वाविशेषे ऽपि कपालादीनां दण्डादीनां च घटादिहेतुत्वं गुणत्वाविशेषे ऽपि ज्ञानादिकं प्रति चक्षुर्मनोयोगादीनां हेतुत्वं तथा दोषत्वाविशेषे ऽपि रागादिकं प्रति मोहस्य हेतुत्वसम्भव इति भावः ॥ ९ ॥

समाप्तं दोषपरीक्षाप्रकरणम् ॥

दोषपरीक्षा दोषविशेषपरीक्षेत्यर्थः ॥

(१) इदं न्यायसूचीनिबन्धे वर्तते ।
(२) इदमपि पूर्ववत् ।

CC-0. In Public Domain. Digitized by eGangotri

क्रमप्राप्तं प्रेत्यभावं परीक्षयति ।

**आत्मनित्यत्वे प्रेत्यभावसिद्धिः(१) ॥ १० ॥**

मृतस्य पुनरुत्पादः प्रेत्यभावः स च शरीरादेर्न सम्भवति पुनरुत्पादाभावात् न चात्मनः स तस्य नित्यत्वेन मरणाभावादिति तदप्रसिद्धिरितिपूर्वपक्षे समाधानमिदम् । आत्मनित्यत्वे आत्मनो नित्यत्वेऽपि तस्य प्रेत्यभावसिद्धिः प्रेत्यभावशब्दार्थसिद्धिः । अयमभिप्रायः । विजातीयात्मशरीरसंयोगो मरणमेकजातीयशरीराद्यसंयोग उत्पत्तिः तयोर्नित्येऽप्यात्मनि सम्भवः । अथवा शरीरस्योत्पत्तिविनाशावादाय शरीरविशिष्टस्य तथा व्यपदेश इति भावः । सूत्रे पुनःपदेन तयोरनादिधारा ज्ञापिता तज्ज्ञानं च वैराग्यद्वारा मोक्षोपयोगीति तत्परीक्षणम् ॥ १० ॥

नन्वात्मनो निरुक्तोत्पत्तिमरणे अपि शरीरोत्पत्तिं विना न सम्भवतः सा च नास्तीत्यत आह ।

**व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात्(२) ॥ ११ ॥**

अत्रोत्पत्तिः पञ्चम्या अर्थः । प्रयोज्यत्वं संसर्गः । तेन व्यक्तप्रयोज्योत्पत्तिमद्व्यक्तानां प्रत्यक्षप्रामाण्यात् प्रत्यक्षसिद्धत्वादित्यर्थः । न च व्यक्तानामेवावयवानामवयविहेतुत्वे व्यक्तानामपकृष्टमहत्त्वेन सावयवत्वाद् घटादीनामवयवधाराप्रसङ्गान्मेरुसर्षपाद्योरविशेषप्रसङ्ग इति वाच्यम् । घटादिकं परम्परया निरवयवद्रव्यारब्धमपकृष्ट-

(१) अत्र सिद्धान्तसूत्रमिति वृत्तिकृतः । न्यायसूचीनिबन्धे ऽपीदं वर्तते ।

(२) नायमेकान्तो रूपादिमद्भ्यो रूपादिमदुत्पत्तिरिति अरूपादपि संयोगाद् रूपादिमदुत्पद्यमानं घटादि गवादि दृष्टमिति । न । सूत्रार्थापरिज्ञानात् नायं सूत्रार्थो रूपादिमत एव रूपादिमदुत्पद्यत इति अपि तु रूपादिमत्सामग्रीपूर्वकं गवादि व्यक्तमिति सूत्रार्थ इत्येतद्व्याख्यानावसरे वार्त्तिकम् । तत्र न्यायसूचीनिबन्धे च व्यक्ताव्यक्तानामिति पाठः ।



CC-0. In Public Domain. Digitized by eGangotri

परिमाणत्वादित्यादिव्यतिरेकिणानुमानेनाव्यक्तस्यापि हेतुत्वाद् व्यक्तानां हेतुत्वस्य प्रत्यक्षतः सुलभतयोक्तत्वात्। यद्वा त्र्यसरेणुः सावयवोऽपकृष्टमहत्त्वादित्यनुमानेन द्व्यणुकसिद्धः द्व्यणुकं सावयवं महदवयवत्वादित्यनुमानेन परमाणुसिद्धिः। परमाणुर्निरवयवो जन्यपरिमाणानधिकरणत्वादित्यनेन परमाणोर्निरवयवत्वसिद्धिः। तस्य नित्यत्वमपि निरवयवद्रव्यत्वेनैवेति जन्यद्रव्याणां परमाणौ विश्रामान्न मेरुसर्षपयोरविशेषप्रसङ्ग इति। एवं च शरीरस्यापि व्यक्ततया उत्पत्तिसिद्धिरिति सूचितम्॥ ११॥

तटस्थः शङ्कते।

**न घटाद् घटानिष्पत्तेः[(१)] ॥ १२ ॥**

न व्यक्ताद् व्यक्तमुत्पद्यते तथा सति घटस्यापि व्यक्ततया ततोऽपि घटोत्पत्तिप्रसङ्ग इति भावः॥ १२॥

उत्तरयति।

**व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः[(२)] ॥ १३ ॥**

व्यक्तात् कपालादेरेव घटोत्पत्तेः समान्यतो न व्यभिचारः। समवायेन जन्यसत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेनैव सामान्यकार्यकारणभावात्। विशेषकार्यकारणभावस्तु विशेषतोऽन्वयव्यतिरेकतो ग्राह्यः। यथा घटकपालाद्योरिति॥ १३॥

समाप्तं प्रेत्यभावपरीक्षाप्रकरणम्॥

अथ व्यक्ताद् व्यक्तानामित्यसङ्गतं शून्यताया एव व्यक्तोपादानत्वादिति सहेतुकमाशङ्कते।

---

(१) इदं न्यायसूचीनिबन्धे वर्तते।
(२) इदमपि न्यायसूचीनिबन्धे वर्तते।

CC-0. In Public Domain. Digitized by eGangotri

**अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्[1] ॥ १४ ॥**

नानुपमृद्य प्रादुर्भावात् । अनुपमृद्य बीजादिकमविनाश्य अङ्कुरादेः प्रादुर्भावाभावादुत्पत्त्यभावादित्यर्थः । तथा च बीजादिविनाशोऽङ्कुरोपादानमेवमन्यत्रापि कल्प्यते लाघवादिति ॥ १४ ॥

उत्तरयति ।

**व्याघातादप्रयोगः[2] ॥ १५ ॥**

उपमृद्य प्रादुर्भवतीति प्रयोगो न व्याघातात् । अङ्कुरादेर्बीजोपमर्दकत्वादङ्कुरादेर्बीजनाशहेतुत्वं बीजनाशस्य चाङ्कुरादिहेतुत्वमित्यन्योन्याश्रयादिति भावः ॥ १५ ॥

पूर्वपक्षी पुनराशङ्कते ।

**नातीतानागतयोः कारकशब्दप्रयोगात्[3] ॥ १६ ॥**

नोक्तप्रयोगानुपपत्तिः अतीतेऽनागते च कारकशब्दप्रयोगात् कर्त्रादिबोधकशब्दप्रयोगात् । तादृशप्रयोगश्च जनिष्यते पुत्रः भावी देवदत्तो घटं करिष्यति मृतो देवदत्तो घटं कृतवानित्यादिरूपः । तथा चोक्तान्योन्याश्रयो न दोषायेत्यभिमानः ॥ १६ ॥

समाधत्ते ।

**न विनष्टेभ्योऽनिष्पत्तेः[4] ॥ १७ ॥**

---

(१) तत्र पूर्वपक्षसूत्रमिति वृत्तिकृतः । इदमपि पूर्ववत् ।

(२) इदं न्यायसूचीनिबन्धे वर्तते ।

(३) इदमपि पूर्ववत् ।

(४) अस्य चार्थस्य ज्ञापनार्थं सूत्रम् । न विनष्टेभ्योऽनिष्पत्तेरिति । न हि बीजविनाशोऽङ्कुरस्य कारणमपि तु बीजावयवाः पूर्वव्यूहपरित्यागेनेत्यर्थः सूत्रस्येति वार्त्तिकम् । अत्रैवार्थे सूत्रं योजयति अस्य चार्थस्येतीति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

बहुवचननिर्देशाद् भाविनो ग्रहः । तेन भूतभावि-भ्योऽनिष्पत्तेः कार्यानुत्पत्तेः । पूर्वक्षणवृत्तिसामग्र्या एव कार्योत्पत्तिप्रयोजकत्वात् । नियतपूर्ववर्तित्वरूपकारणत्वस्य विनष्टादावसम्भवाच्च । न च बीजोपमर्दकत्वं न बीज-नाशकारणत्वं येन भाविनस्तन्न स्यात् किं तु बीजनाशक-र्तृत्वमिति वाच्यम् । नाशकर्तृत्वं नाशानुकूलव्यापारवत्त्वं भाविव्यापारश्च न प्रागजातनाशानुकूल इत्युक्तत्वात् । जनिष्यत इत्यादौ भविष्यत्क्रियाकर्तृत्वं बोध्यते तस्या-बाधान्न प्रयोगानुपपत्तिरिति ॥ १७ ॥

ननु बीजोपमर्दकत्वमङ्कुरादेर्नोच्यते किं तु भूसंयो-गादेः । क्त्वाप्रत्ययस्यैककर्तृकत्वानियमेन निरुक्तसूत्रात् तल्लाभः । एवं च बीजस्य विनष्टतया उपादानत्वायोगस्य न विनष्टेभ्योऽनिष्पत्तेरितिसूत्रेण भवतैवोक्तत्वात् परिशे-षेण तन्नाशस्यैवोपादानत्वं वक्तव्यमित्यत आह ।

## क्रमनिर्देशादप्रतिषेधः(१) ॥ १८ ॥

क्रमनिर्देशाद् बीजनाशानन्तरमेवाङ्कुरोत्पाददर्शनात् बीजनाशस्य न हेतुतासामान्यप्रतिषेधः प्रतिबन्धकाभाव-त्वेन तस्याङ्कुरहेतुतोपगमादिति भावः । यद्वा क्रमनिर्दे-शादेकस्मिन्नवयवे द्रव्योत्पत्तौ तन्नाशानन्तरमेव द्रव्यान्त-रोत्पादात् द्रव्यं प्रति द्रव्यस्य प्रतिबन्धकत्वेन तदभावत्वे-नैव तन्नाशस्य हेतुत्वात् । अप्रतिषेधो न तेन द्रव्यस्य द्रव्यो-पादानताप्रतिषेधः । बीजावयवानामेवाङ्कुरोपादानत्वाज्ज-लसंसिक्तभूसंयोगादीनां तत्र निमित्ततेति न तैर्विनो-

(१) क्रमनिर्देशादप्रतिषेधः । पूर्वं बीजविनाशः पश्चादङ्कुरोत्पत्तिरिति सूत्रार्थ इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

त्पत्तिः । अभावमात्रस्य कारणत्वे चूर्णीकृते ऽपि बीजे ऽङ्कुरोत्पत्तिः स्यादिति भावः ॥ १८ ॥

समाप्तं शून्यतोपादानतानिराकरणप्रकरणम् ॥

शून्यता अभावः । उपादानता समवायिकारणता॥

नन्वस्त्वीश्वर एवोपादानकारणमित्याशङ्कते ।

**ईश्वरः कारणं पुरुषकर्मफलादर्शनात्**(१) ॥१९॥

पुरुषकर्मणोऽपि कदाचिद् वैफल्यदर्शनात् सहकार्यन्तरमवश्यं वाच्यं यत्सत्त्वासत्त्वाभ्यां कार्योत्पादानुत्पादयोरुपपत्तः। स च सहकारी ईश्वरः। न च तस्य समत्वेनाव्यावर्तकत्वं तदिच्छाया एव व्यावर्तकत्वात्। तथा चेश्वरस्य कारणतयावश्यकत्वे तस्यैवोपादानतास्तु किं व्यक्तानामुपादानतास्वीकारेणेति भावः ॥ १९ ॥

ब्रह्मोपादानतावादी द्विविधः कश्चिद् ब्रह्मपरिणामो विश्वमिति वदति । कश्चिद् ब्रह्मविवर्तो विश्वमिति वदति । अत्र च परिणामवाद उपादानसमसत्ताककार्यवादः । तथाहि ब्रह्मैव नामरूपप्रपञ्चभेदेन परिणमते मृत्तिकेवोदञ्चनादिभावेन । अत एव प्रपञ्चेषु ब्रह्मधर्मस्य सत्त्वस्यापरित्याग उदञ्चनादाविव मृत्तिकात्वस्येति। अत्र च मते घटादिप्रपञ्चस्य चैतन्यापत्तिः परिणामिस्वभावस्य परिणामे ऽपि सत्त्वादनिर्विकारित्वबोधकश्रुतिविरोधश्चेति विवर्तवाद एव वेदान्तिभिरादृतः। तच्च मतमनाद्यनिर्वचनीयाविद्यया निमित्तभूतलोकादृष्टसहकृतया ब्रह्मण्यधिष्ठाने मिथ्याभूतोऽपि प्रपञ्च आरोप्यते रज्जौ सर्पवदि-

---

(१) पुरुषकर्माफल्यदर्शनादिति पाठो ऽन्यत्र । सूत्रयति ईश्वर इतीति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

ति प्रपञ्चस्याधिष्ठानसत्तयैव सत्त्वप्रतीतिर्ब्रह्मण एव प्रपञ्चतया स्फुरणात्। अथवा व्यावहारिकसत्त्वान्तरं प्रपञ्चेषु स्वीक्रियत इति। अविद्याया अपि तत्त्वविचारेऽनिर्वृतेर्मिथ्यात्वमित्यद्वैतसिद्धिरित्यत्राह।

**न पुरुषकर्माभावे फलानिष्पत्तेः[१] ॥ २० ॥**

पुरुषकर्मेति दृष्टकारणोपलक्षणम्। तथा च पुरुषव्यापारदण्डचक्रसलिलसूत्रकपालादिविरहे घटाद्यनिष्पत्तेः तत्सत्त्वे च तदुत्पत्तेर्घटादौ तेषां हेतुत्वमावश्यकम्। तत्र च पुरुषकृत्यादेः कार्यान्तरेऽपि दर्शनात् कार्यमात्रं प्रति तद्धेतुत्वमन्येषां च विशेषत एव। इत्थं चेश्वरस्य नोपादानता घटादौ कपालादेरेव तत्त्वेन क्लृप्तत्वादीश्वरस्य तत्त्वमानाभावात्। एवमीश्वरस्यैकत्वेन कार्यविशेषनियमानुपपत्तिः। न च तस्येच्छाविशेष एव कार्यविशेषनियामक इति वाच्यम्। तन्मते तदिच्छाया अतिरिक्ताया अनभ्युपगमात् अभ्युपगमे द्वैतापत्तिः। न च जीवादृष्टविशेषसहकारिणा कालविशेषेण मायायामेव सङ्कल्पादिरूपा वृत्तिभेदा जायन्ते ते चेश्वरे भासिताः तेन निर्गुणस्यापि ब्रह्मणः सगुणत्वप्रतीत्या परमेश्वरपदवाच्यता उक्तं च कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इतीति वाच्यम्। अर्थक्रियाकारितया सत्त्वेन प्रत्यक्षसिद्धतया च घटादेः सत्यत्वावगतेः परमाणुभ्यो द्व्यणुकादिक्रमेणैव कार्योत्पादस्य दृष्टत्वाच्च। ननु परमाणोः किमुपादानमिति चेन्न नित्यत्वात् किमपीति भावः। केचित्तु प्रसङ्गत ईश्वरः कारणमितिसूत्रेण केवलेश्वरस्य कारणताशङ्कनं न तूपादानताशङ्कनं द्वितीयसूत्रमतिरिक्तकारणताप्रदर्शनेन समाधानमित्याहुः॥ २०॥

(१) सिद्धान्तसूत्रमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः।

CC-0. In Public Domain. Digitized by eGangotri

ननु पुरुषव्यापारादिसत्त्वेऽपि क्वचित् फलानुत्पत्त्या व्यभिचार इत्यत आह ।

तत्कारितत्वादहेतुः[1] ॥ २१ ॥

क्वचित् फलाभावस्य तत्कारितत्वात् पुरुषकर्मकारितत्वात् पुरुषदुरितविशेषप्रतिरुद्धत्वात् पुरुषव्यापारोऽहेतुः फलानुपधायक इत्यर्थः । ननु तदा किमर्थमीश्वर इत्याशङ्कावारणाय भाष्यम् । गुणविशिष्टमात्मान्तरमीश्वरः । आत्मान्तरं जीवभिन्नं जगदनुकूलज्ञानेच्छादिविशिष्टं किमपि वस्तु ईश्वर इत्यर्थः । आत्मान्तरमिति जीवस्य क्षित्यादिकर्तृत्वासम्भवप्रदर्शनाय । गुणवत्त्वेन कथनं मतान्तरनिराकरणाय तद्रूपेणैव सप्रमाणकत्वसूचनाय च । तथा च क्षित्यादिकमुपादानगोचरसाक्षात्कारचिकीर्षाकृतिमज्जन्यं कार्यत्वादित्यनुमानेन लाघवज्ञानसहकारिणा नित्यैकज्ञानेच्छाकृतिविशिष्टनित्यैकवस्तुसिद्धिरिति धर्मिग्राहकमानेनैव तस्य गुणवत्त्वसिद्धेरिति भावः । एवं गुणवत्तया द्रव्यत्वलाभात् द्रव्यसामान्यगुणसंयोगादिमत्त्वलाभः । आत्मपदवाच्यता च तस्यात्मपदगर्भश्रुतिबलादेवेति । वस्तुतस्तु ईश्वरस्य प्रसङ्गतः कारणत्वेन सिद्ध्यर्थमाह । ईश्वरः कारणमिति । क्षित्यादेरिति शेषः । तत्रानुमानप्रकारश्चोक्त एव । ननु जीवविशेष एव क्षितिकर्तास्तु किमीश्वरेणेत्यत आह । पुरुषकर्मफलादर्शनादिति । पुरुषकर्मफलत्वादर्शनात् पुरुषकर्मफलत्वासम्भवादिति यावत् । पुरुषव्यापारो हि उपादानगोचरप्रत्यक्षादिसहकृतः कार्यं जनयति क्षितिद्व्यणुकाद्युपादानस्य परमाण्वादेर्जीवप्रत्यक्षागो-

(१) तत्र सूत्रं योजयति तत्कारितत्वादिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

चरतया जीवान्न द्व्यणुकादिसम्भव ईश्वरस्य तु द्व्यणुकाद्युपादानगोचरप्रत्यक्षाश्रयतया सिद्धा अतीन्द्रियदर्शित्वम् । सर्वविषयकत्वं तज्ज्ञानस्य नित्यतया विनिगमनाविरहेणेति समुदितभावार्थः । केचित्तु पुरुषकर्मफलादर्शनादित्यनेन विफले कर्मणि प्रवर्तमानत्वादसर्वज्ञतया अतीन्द्रियादर्शित्वेन जीवस्य क्षितिकर्तृत्वासम्भव इति सूचितम् । ननु जीवादृष्टमेव क्षितिकारणमस्तु जीवोपभोगसाधनत्वादित्याशङ्कते । न पुरुषेति । पुरुषादृष्टाभावे फलस्य क्षित्यादेरनुत्पत्तेरदृष्टहेतुतावश्यकत्वेन नेश्वरस्य कर्तृत्वमिति भावः । समाधत्ते । तत्कारितत्वादहेतुः । तत्कारितत्वादीश्वराधिष्ठिततया कार्यजनकत्वाददृष्टमात्रं न हेतुः अचेतनस्य चेतनसहकारेणैव कार्यजनकत्वादिति भावः । इदमुपलक्षणम् । अदृष्टहेतुत्वसिद्धावपि उपादानगोचरप्रत्यक्षादिमत्त्वेनेश्वरस्य क्षित्यादिकर्तृत्वं दुरपह्नवं जीवे तद्बाधादिति ध्येयम् ॥ २१ ॥

समाप्तमीश्वरोपादानतानिराकरणप्रकरणम् ॥

नन्वकस्मादेव कार्यमुत्पद्यते किमुपादानगवेषणयेत्याशङ्कते ।

**अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्**(१) **॥ २२ ॥**

अनिमित्ततो निमित्तभिन्नात् स्वस्मादलीकाद्वा भावोत्पत्तिः । यद्वा अनिमित्ततोऽनिमित्ता प्रथमार्थे तसिल् स्वाभाविकीत्यर्थः । तथा च घटादिकमलीकहेतुकं

(१) अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् । यथा कण्टकतैक्ष्ण्यादि निर्निमित्तमुपादानवच्च तथा शरीरादिसर्गोऽपि तदिदं दृष्टान्तसूत्रमिति वार्त्तिकम् । तत्र पूर्वपक्षसूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

स्वहेतुकं वा भावत्वात् कण्टकतैक्ष्ण्यवत् । यद्वा घटाद्युत्पत्तिः स्वाभाविकी उत्पत्तित्वात् कण्टकतैक्ष्ण्योत्पत्तिवदित्यनुमाने तात्पर्यम् । तैक्ष्ण्यं संस्थानविशेषः । आदिना मयूरचित्रादिपरिग्रहः ॥ २२ ॥

तत्रालीकहेतुकत्वं दूषयति ।

**अनिमित्तनिमित्ततो नानिमित्ततः**[(१)] **॥ २३ ॥**

अनिमित्तरूपमलीकात्मकं यन्निमित्तं ततः कार्योत्पादे कुतः कार्यस्य निमित्तभिन्नादुत्पत्तिः अलीकस्यैव निमित्तत्वात् । न चानिमित्तत्वेनालीकस्य निमित्तत्वं नोच्यते किं त्वलीकत्वेनेति न वदतो व्याघात इति वाच्यम् । अलीकस्य सर्वदा समत्वात् कार्यस्य क्रमो वैचित्र्यं च न स्यादिति । एतेन द्वितीयमपि दूषितम् ॥ २३ ॥

द्वितीयतृतीययोराह ।

**निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः**[(२)] **॥ २४ ॥**

निमित्तस्य हेतोरनिमित्तस्य कार्यस्यार्थान्तरभावादर्थान्तरत्वात् । तथा च नियताव्यवहितपूर्ववर्तित्वरूपकारणत्वस्य कार्ये ऽभावादकस्मान्नोत्पत्तिः । यद्वा निमित्तं कारणाधीनं निमित्तपदस्य कार्ये उपचारादनि-

(१) अन्यत्र अनिमित्तनिमित्तत्वादिति पाठः । नव्यास्तु सूत्रद्वयीमेवं व्याचक्षते । समाधत्ते । अनिमित्तेति । दोषान्तरमाह । निमित्तेति । इत्यतेत्सूत्रपरसूत्रयोर्व्याख्याने वृत्तिकृद्भिरवतरणं दत्तम् । वर्तते चेदं न्यायसूचीनिबन्धे ।

(२) पूर्वसूत्रटिप्पणी द्रष्टव्या । इदं न्यायसूचीनिबन्धे वर्तते । अप्रतिषेध इत्यादर्शपुस्तके नास्ति ।

CC-0. In Public Domain. Digitized by eGangotri

मित्तं निमित्तानधीनं तयोरर्थान्तरभावादर्थविशेषवत्त्वात्। कारणाधीने कादाचित्कत्वरूपार्थवत्त्वात् तदनधीने सार्वदिकत्वरूपार्थवत्त्वात्। तथा च कार्यस्य कादाचित्कत्वेन सहेतुकत्वं न तु स्वाभाविकत्वमिति भावः। कण्टकतैक्ष्ण्यादिकं चानिमित्तकं न तत्राऽदृष्टविशेषसहकृतपरमाणूनां हेतुत्वात्। केचित्तु अनिमित्तस्यानिमित्तसाधकस्य निमित्तत्वादनिमित्तत इति व्याहतम्। अनिमित्तसाधकानभ्युपगमे अनिमित्तत्वमेव न सिध्यतीति भावः। समाधानान्तरमाह। निमित्तेति। इदमत्र निमित्तमिदमनिमित्तमितिप्रतीत्या तयोर्भेदसिद्धेर्निमित्तप्रतिषेधो न युक्तोऽन्यथा सार्वलौकिकी प्रतीतिर्नोपपद्येतेति भाव इत्याहुः ॥ २४ ॥

समाप्तमाकस्मिकत्वनिराकरणप्रकरणम् ॥

आकस्मिकमकस्माज्जातम्। अकस्मादित्यत्र किंशब्दो निमित्तपरस्तदन्यस्मादलोकात् स्वस्माद्वा जातमिति पर्यवसितम्। यद्वा कस्मादपि न जातं स्वाभाविकमित्यर्थः ॥

सर्वस्यैवानित्यत्वे परमाण्वादेरपि तत्त्वादवयवानां धाराया अविच्छेदः स्यादित्यतः सर्वानित्यत्वं निराकरोति। तत्र सर्वमनित्यं न वेति संशयः। अनित्यत्वं सर्वत्वावच्छेदेन नित्यत्वं च सामानाधिकरण्येन कोटिरिति बोध्यम्। यद्वा प्रमेयत्वमनित्यत्वव्याप्यं न वेति संशयः। तत्र पूर्वपक्षः।

**सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात्[१] ॥ २५ ॥**

(१) तस्मात् सर्वमनित्यमितिसूत्रस्य दृष्टान्तार्थत्वादित्येतत्सूत्रव्याख्यावसरे वार्त्तिकम्। पूर्वपक्षसूत्रमिति वृत्तिकृतः।

CC-0. In Public Domain. Digitized by eGangotri

गगनादेरुत्पत्त्यादिमत्त्वं तस्माद्वा एतस्मादाकाशः सम्भूत इत्यादिश्रुतिबलात् प्रमेयत्वहेतुकानुमानाच्च बोध्यम् । तेन न भागासिद्धिरिति । तत्र ध्वंसे व्यभिचारवारणाय विनाशधर्मकत्वं प्रागभावे तद्वारणायोत्पत्तिमत्त्वमुक्तम् । अनित्यत्वं ध्वंसप्रागभावप्रतियोगित्वम् । यद्वा उत्पत्तिविनाशसहचरितभावत्वादिमत्त्वमेव हेतुरिति पर्यवसितम् । अथवा उत्पत्तिविनाशधर्मकत्वादुत्पत्तिविनाशधर्मकाणां मानसिद्धत्वात् तदन्येषामसिद्धत्वमिति । उत्पत्तिमत्त्वाद् विनाशित्वादिति हेतुद्वये तात्पर्यम् । अनित्यत्वं च कादाचित्कत्वमिति च कश्चित् ॥ २५ ॥

दूषयति ।

**नानित्यतानित्यत्वात्**[1] ॥ २६ ॥

न पदार्थमात्रस्यानित्यत्वमनित्यताया अनित्यधर्मस्य अनुगतप्रतीतिसिद्धघटत्वादेर्नित्यत्वात् । तथा चांशतो बाध इति भावः ॥ २६ ॥

शङ्कते ।

**तदनित्यत्वमग्नेर्दाह्यविनाश्यानुविनाशवत्**[2] ॥ २७ ॥

तस्या घटादेरनित्याताया अनित्यत्वं विनाशित्वं यथाग्नेर्दाह्यस्याश्रयस्येन्धनादेर्विनाशादनु पश्चादग्नेर्विनाशस्तथाश्रयस्य निखिलघटादेर्विनाशे घटत्वादिविनाश इति । अन्ये तु सर्वमनित्यमिति सूत्रस्य सर्वमनित्यं विनाशि उत्पत्ति-

---

(१) इदं न्यायसूचीनिबन्धे वर्त्तते ।

(२) दाह्यं विनाश्यानुविनाशवदिति पाठो न्यायसूचीनिबन्धादिषु । तदनित्यत्वमित्यादि सूत्रमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

मतो विनाशधर्मत्वादित्यर्थः । नानित्यतेतिसूत्रस्य अनित्यताया ध्वंसस्य नित्यत्वादविनाशित्वात् । तथा चोत्पत्तिमत्त्वं ध्वंसे व्यभिचारीति भावार्थः । तदनित्यत्वमित्यस्य च तस्या अनित्यताया अपि अनित्यत्वं यथाग्नेर्दाह्यस्येन्धनादेर्विनाशानन्तरं स्वयमपि नश्यति न च दाह्योन्मज्जनं तथा घटादेर्नाशोऽपि नश्यति न च घटाद्युन्मज्जनं ध्वंसध्वंसस्यापि प्रतियोगिध्वंसत्वात् ध्वंसप्रागभावानाधारकालस्य प्रतियोग्याधारत्वनियमाभावाच्चेति समुदितार्थ इत्याहुः ॥ २७ ॥

समाधत्ते ।

**नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात्**(१) ॥ २८ ॥

नित्यस्य नित्यत्वविशिष्टस्य नित्यत्वस्येति यावत् । यथोपलब्धि उपलब्धिमनतिक्रम्य । तथा च धर्मिग्राहकमानेन लाघवादितर्कसहकृतेनाकाशादेर्नित्यत्वव्यवस्थापनात् । आत्मन आकाशः सम्भूत इतिश्रुतौ सम्भूत इत्यस्य तस्याचेतनत्वे ऽपि परमेश्वरसहकारेण कार्यायोन्मुख इत्यर्थ इति ॥ २८ ॥

समाप्तं सर्वानित्यत्वनिराकरणप्रकरणम् ॥

सर्वनित्यत्वे प्रेत्यभावासिद्धिरित्यतस्तन्निराकरणमाह ।

**सर्वं नित्यं पञ्चभूतनित्यत्वात्**(२) ॥ २९ ॥

(१) इदं न्यायसूचीनिबन्धे वर्तते ।

(२) सर्वनित्यत्वे न प्रेत्यभावादिसिद्धिरतस्तन्निराकरणप्रकरणम् । तत्राक्षेपसूत्रमिति वृत्तिकृतः । न्यायसूचीनिबन्धे चेदं वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

सर्वं नित्यं मेयत्वात् । तत्र दृष्टान्तप्रदर्शनायाह । पञ्चभूतनित्यत्वात् । तेन परमाण्वाकाशादिर्दृष्टान्त इति। न च घटादीनां नित्यत्वे कथं परमाणुस्वीकार इति दृष्टान्तासिद्धिरिति वाच्यम् । तन्मते व्यक्तानां घटादीनां परमाणौ तन्मात्राख्ये प्रवेशस्वीकारादन्यथा सर्वदैव घटादेः प्रत्यक्षापत्तेः यथा कूर्माङ्गे तत्करचरणादिकं प्रविशति बहिर्निःसरति च तथा घटादिकमव्यक्ते प्रविशति ततो निःसरति चेति भावः ॥ २९ ॥

समाधत्ते ।

**नोत्पत्तिविनाशकारणोपलब्धेः**[1] ॥ ३० ॥

सर्वनित्यत्वं न युक्तमन्वयव्यतिरेकादिना घटादिकारणदण्डचक्रकपालादितद्विनाशकारणमुद्गरपातादीनां तत्त्वेनोपलब्धेरित्यर्थः ॥ ३० ॥

पुनः सांख्य आह ।

**तल्लक्षणावरोधादप्रतिषेधः**[2] ॥ ३१ ॥

घटादीनां नित्यत्वप्रतिषेधो न तस्य नित्यत्वस्य यल्लक्षणं ज्ञापकं भूतत्वादि घटादौ तदवरोधात् तत्सत्त्वात् तथा चोत्पादादिप्रत्ययो भ्रम इति भावः । वस्तुतस्तु तल्लक्षणेन घटादिव्यञ्जककपालादिसमाधानेन तिरोधायकेन मुद्गरपातादिना चावरोधात् घटाभिव्यक्तितत्तिरोधानसम्भवादित्यर्थः । उत्पत्तिविनाशतया ग्रहश्च भ्रमरूप एवेति भावः ॥ ३१ ॥

---

(१) इदं न्यायसूचीनिबन्धे वर्तते ।

(२) इदमपि पूर्ववत् ।

CC-0. In Public Domain. Digitized by eGangotri

दूषयति ।

**नोत्पत्तितत्कारणोपलब्धेः**(१) ॥ ३२ ॥

न घटादीनां नित्यत्वमुत्पत्तितत्कारणोपलब्धेः भवताप्यभिव्यक्तितत्कारणस्वीकारात् । तथा च तदभिव्यक्तिकारणत्वमपेक्ष्य तत्कारणत्वस्य लाघवेन कल्पनौचित्यादिति भावः । एतेनोत्पत्तिविनाशेतिसूत्रेण न पौनरुक्त्यम् ॥ ३२॥

ननु घटादेरनित्यत्वे ऽनन्तघटतन्नाशादिस्वीकारे गौरवात् कार्यकारणभावे किञ्चिद् गौरवमकिञ्चित्करमित्यत आह ।

**व्यवस्थानुपपत्तेः**(२) ॥ ३३ ॥

घटादीनामसिद्ध्यापत्तेः । तथा च दण्डाद् घटो जातो मुद्गरपाताद् घटो विनष्ट इत्यादिप्रत्ययसिद्धोत्पत्तिविनाशापलापे घटादीनामप्यपलापेन सर्वशून्यतामतप्रवेशः स्यादिति । प्रत्यक्षादिसिद्धवस्तूनामपह्नोतुमशक्यत्वमिति भावः ॥ ३३ ॥

समाप्तं सर्वनित्यत्वनिराकरणप्रकरणम् ॥

प्रसङ्गात् सर्वपृथक्त्वमतनिराकरणायाह ।

**सर्वं पृथग् भावलक्षणपृथक्त्वात्**(३) ॥ ३४ ॥

सर्वमवयवि घटादिकं पृथक् । स्वस्मादपीत्यादि । भावलक्षणानां भावानां रूपरसादिधर्माणां लक्षणानां च तत्तदवयवादीनां पृथक्त्वात् । तथा च रूपरसादीनां

(१) सूत्रमपि पूर्वपूर्ववत् ।

(२) न व्यवस्थानुपपत्तेरिति पाठो न्यायसूचीनिबन्धादिषु । न व्यवस्थानुपपत्तेरिति । शेषं भाष्य इति वार्त्तिकम् ।

(३) अथ प्रसङ्गात् सर्वपृथक्त्वप्रकरणम् । तत्र पूर्वपक्षसूत्रमिति वृत्तिकृतः । न्यायसूचीनिबन्धे ऽपीदं वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

विभिन्नेन्द्रियग्राह्यतालक्षणविभिन्नस्वभावत्वेन विरुद्धतथाश्रयभेदकत्वादवयवानां च मिथो भिन्नत्वात् घटादीनां तत्तदवयवाभिन्नत्वाच्चेति भावः । केचित्तु सर्वं वस्तु पृथक् नानेत्यर्थः । लक्ष्यते ऽनेनेति लक्षणं समाख्या तस्याः पृथक्त्वं पृथगर्थकत्वं । तथा चायं प्रयोगः । घटादिः समूहरूपः वाच्यत्वात् सेनावद् वनवच्चेति । अतीन्द्रिये गगनादौ मानाभावादात्मनः शरीराननतिरेकात् गुणकर्मणोराश्रयाभेदात् विशेषसमवाययोर्मानाभावादभावस्य तुच्छत्वान्न व्यभिचार इति व्याचक्षुः । तच्चिन्त्यम् । परमाणौ व्यभिचारादिति ॥ ३४ ॥

समाधत्ते ।

नानेकलक्षणैरेकभावनिष्पत्तेः[1] ॥ ३५ ॥

अनेकलक्षणैरनेकैरवयवादिभिरेकस्य नानागुणविशिष्टस्य भावस्य निष्पत्तेरुत्पत्तेरित्यर्थः । तथा चावयवावयविनोरभेदो नाङ्गीक्रियते रूपरसादीनां च न मिथो विरुद्धत्वं न चाश्रयस्वरूपत्वं मानाभावादिति भावः ॥ ३५ ॥

ननु किमर्थमेकभावस्वीकार इत्यत आह ।

लक्षणाव्यवस्थानादेवाप्रतिषेधः[2] ॥ ३६ ॥

लक्षणेन प्रमाणेन व्यवस्थानात् सिद्धत्वादेकस्यावयविनो न प्रतिषेध इत्यर्थः । तथा चायमेको घटो नीलोऽयं घटः शीतस्पर्शवानित्यादिप्रत्यक्षसिद्धस्य घटादेरैक्यं दुरपह्नवम् । एवं कपालाद् घटो जातो न तु कपालमित्यादिप्रतीत्या तयोर्भेद इति भावः । अथ घटत्वं नाना

(१) इदं न्यायसूचीनिबन्धे वर्तते ।

(२) इदमपि पूर्ववत् ।

CC-0. In Public Domain. Digitized by eGangotri

घटत्ववत्त्वेनानुगतं तच्च प्रत्येकं तत्तदवयवसमुदायपर्याप्तं तदवच्छिन्ने चैकत्वादिव्यवहारो नानुपपन्न एका सेना एकं वनमित्यादिदर्शनादिति चेत् । न । घटादिवत् कपालादेरपि नानात्वात् परमाणुपुञ्ज एव घटादिरिति वक्तव्यम् । तच्च मतं प्रकरणान्तरेणाग्रे निरसनीयमिति ॥ ३६ ॥

समाप्तं सर्वपृथक्त्वनिराकरणप्रकरणम् ॥

अथ जगदेव शून्यं कुतोऽयमुपादानोपादेयविचार इत्याशङ्क्य सर्वशून्यतामतनिराकरणाय पूर्वपक्षयति ।

## सर्वमभावो भावेष्वितरेतराभावसिद्धेः(१) ॥ ३७ ॥

सर्वं ज्ञेयमभावस्तुच्छो ज्ञेयत्वावच्छेदेनाभावत्वस्यात्र साध्यता अभावत्वेनानुभवो हेतुरिति । तादृशहेतुं दर्शयति । भावेष्विति । भावत्वाभिमतघटादिषु इतरेतराभावसिद्धेः परस्परभेदसिद्धेः किञ्चिदभावसिद्धेरिति यावत् । अभावस्य चाधिकरणरूपतया अभावत्वेनैव सिद्धेरिति पर्यवसितम् । प्रतीतिश्च घटः पटो न घटे पटो नास्तीत्यादिरूपा ॥ ३७ ॥

सिद्धान्तयति ।

## न स्वभावसिद्धेर्भावानाम्(२) ॥ ३८ ॥

भावानां पृथिव्यादीनां स्वभावस्य गन्धादेर्गुणस्य सत्त्वादेश्च सिद्धेः । तथा च चन्दनं सुरभि घटो रूपवान् घटः सन्नित्यादिप्रतीत्या अभावो न गन्धवान् न सत्तावांश्चेतिप्रतीत्या च भावः सिध्यतीति भावः ॥ ३८ ॥

(१) ज्ञानविषयत्वमभावत्वव्याप्यं न वेतिसंशये पूर्वपक्षसूत्रमिति वृत्तिकृतः ।

(२) सिद्धान्तसूत्रमिति वृत्तिकृतः । न स्वभावसिद्धेर्भावानामिति । स्वेन भावेन भावा भवन्तीति सूत्रार्थः । किं पुनरनेन सूत्रेण क्रियते पूर्वसूत्रविरोधश्चोद्यत इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

पुनराशङ्कते ।

न स्वभावसिद्धेरापेक्षिकत्वात्(१) ॥ ३९ ॥

आपेक्षिकत्वादारोपितत्वात् । तथा च न हि भ्रमाद् वस्तुसिद्धिरिति भावः ॥ ३९ ॥

समाधत्ते ।

व्याहतत्वादयुक्तम्(२) ॥ ४० ॥

घटादौ रूपादेरारोपितत्वे रूपादेरप्रसिद्ध्यारोपस्यैव व्याघातादयुक्तमिदम् । आरोपो हि अन्यत्र प्रसिद्धस्य प्रसिद्धे वस्तुनि सम्भवति । रूपादेः कुत्रचित् प्रसिद्धत्वे तत्रैव भावत्वसिद्धेर्न सर्वशून्यता । एवं सत्त्वप्रतीतेरारोपरूपत्वे व्यवहारस्यैव व्याघातो भवति न हि तुच्छेन जलाद्याहरणादिव्यवहारो भवति अन्यथा रज्जुसर्पादितोऽपि व्यवहारापत्तिरिति भावः । केचित्तु सूत्रद्वयमेवं व्याचक्रुः । न स्वभावेति । न हि सर्वेषां भावानामेकः स्वभावः सम्भवति आपेक्षिकत्वाद् भिन्नत्वात् । भिन्नस्य स्वस्वभावत्वे स्वस्मादपि भेदापत्तेः । तथा च स्वभावस्याननुगमान्न भावत्वनियामकत्वमिति । यद्वा इतरसापेक्षत्वादेतदपेक्षयाऽयं नीलतर एतदपेक्षयायं ह्रस्व इतिप्रतीतेः । यच्च सापेक्षं तदवस्तु यथा जवासापेक्षं स्फटिकलौहित्यमिति । समाधत्ते । व्याहतत्वादयुक्तम् । सापेक्षत्वस्य तुच्छत्वव्याप्तिव्याहतत्वादसिद्धत्वात् न वा घटादेः सापेक्षत्वं सम्भवति ह्रस्वपरिमाणादेरेव तत्त्वात् । किं च सापेक्षत्वं यदि सापेक्षं तदा तस्यापि तुच्छत्वान्न साधकत्वं यदि च

(१) सूत्रं न्यायसूचीनिबन्धे वर्तते ।

(२) सूत्रमपि पूर्ववत् ।



CC-0. In Public Domain. Digitized by eGangotri

तस्य निरपेक्षत्वं तदा तस्यैव सत्यत्वेन कुतः सर्वशून्यतेति भावः ॥ ४० ॥

समाप्तं सर्वशून्यतानिराकरणप्रकरणम् ॥

अत्र भाष्यम् । अथेमे संख्यैकान्तवादाः । सर्वमेकं सदविशेषात् । सर्वं द्वेधा नित्यानित्यभेदात् । सर्वं त्रेधा ज्ञाता ज्ञेयं ज्ञानमिति । स्पष्टार्थम् । परे त्वेवं व्याचक्षते । एकमित्यद्वैतवादः । तथा च ब्रह्मैकं निर्विशेषं सत्यं सर्वमन्यन्मिथ्या । यद्वा सर्वं प्रपञ्चजातमेकं द्वैतशून्यं सदविशेषात् घटः सन् पटः सन्निति प्रतीतेः घटाभिन्नसदभिन्नपटस्य घटाभेदसिद्धेः । श्रुतिरपि । एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेत्यादि । अन्येऽपीत्यनेन रूपसंज्ञासंस्कारवेदनानुभवाः पञ्चस्कन्धा इति सौत्रान्तिक इत्यादिसमुच्चयः । नित्यानित्यभेदादिति । यद्यपि स्वमतेऽपि पदार्थो द्विविधो नित्यानित्यभेदाद् वक्ष्यमाणकारणानुपपत्त्या दूषणदानासङ्गतिश्च तथापि एकं नित्यं ब्रह्मैव अनित्यं च मायामयमेकं तस्यैव घटपटाद्या अवयवा न तदन्या अवयवावयविनोरभेदादित्याशङ्कितुरभिप्रायः । त्रेधेति । ज्ञाता आत्मा । ज्ञेयमिति । प्रमेयत्वेनैकं प्रपञ्चजातमित्यर्थः । यद्वा ज्ञेयपदं प्रमाणातिरिक्तं दृश्यवस्तुपरमिति एतेषु पूर्वपक्षेषु सिद्धान्तमाह ।

**संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम्**[१] ॥ ४१ ॥

---

(१) अथेमे संख्यैकान्तवादाः सर्वमेकं सदविशेषादित्येवमादि भाष्ये । तेषां प्रतिषेधद्वारकं सूत्रम् । संख्यैकान्तासिद्धिरित्यादि वार्त्तिकम् । एतेष्वाक्षेपेषु सिद्धान्तसूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

संख्यैकान्तासिद्धिः एतादृशपदार्थसंख्यानियमासिद्धिः । कारणस्य प्रमाणस्यानुपपत्तेः चक्षुरादेर्मिथ्यात्वेन प्रमाणत्वासम्भवादिति । उपपत्तौ वा न संख्यैकान्तः साधनस्यातिरिक्तस्यापेक्षितत्वात् ॥ ४१ ॥

आक्षिपति ।

**न कारणावयवभावात्**[1] ॥ ४२ ॥

न संख्यैकान्तासिद्धिः कारणस्य प्रमाणस्यावयवभावादुक्तस्यैकदेशत्वादवयवावयविनोश्च भेदाभावादिति भावः ॥ ४२ ॥

दूषयति ।

**निरवयवत्वादहेतुः**[2] ॥ ४३ ॥

उक्तो हेतुर्न युक्तः सर्वस्यैव पक्षत्वेन पक्षैकदेशस्य हेतुत्वासम्भवादिति भावः । वस्तुतः कारणानुपपत्त्युपपत्तिभ्यामित्यस्य प्रपञ्चस्य मिथ्यात्वे कारणानुपपत्तिः कपालघटाद्योः कार्यकारणभावानुपपत्तिः । असतः कारणत्वायोगात् कार्यकारणभावस्वीकारे च न प्रपञ्चमिथ्यात्वम् । यदि च कार्यकारणभावोऽपि मिथ्येति तथापि प्रपञ्चारोपे किं निमित्तमित्यनुपपत्तिः लोकादृष्टादिसहकृता मायेतिकारणोपपत्तावनादित्वेन मायापि नित्या पदार्थान्तरं चेति द्वैतसिद्धिः । द्वितीयतृतीयमतेऽनित्यपदार्थानामेकत्वे कारणानुपपत्तिः तदतिरिक्ताभावात् कारणोपपत्तौ कारणस्यैव पदार्थान्तरतेति । न कारणावयवभावात् । कारणस्यावयवभावादेकदेशत्वादेकदेशस्यैव कार-

(१) न कारणावयवभावात् । कारणस्य साध्यावयवत्वादित्ययं (एकान्तो ह्ययं) सूत्रार्थ इति वार्त्तिकम् ।

(२) इदं न्यायसूचीनिबन्धे वर्त्तते ।

णत्वादिति। अद्वैतमते कारणस्य मायाया अवयवभावात् प्रपञ्चभावान्मिथ्यात्वादिति यावत्। समाधत्ते। निरवयवत्वादहेतुः। घटादीनां दण्डाद्यवयवित्वाभावाद् घटादौ दण्डादिकं हेतुर्न स्यादिति भावः। एवमविद्यावादिमते मायाया निरवयवत्वात् स्थूलरूपेण परिणामासम्भवात् तस्या अपि मिथ्यात्वे सुतरां न कारणतासम्भव इति भावः ॥ ४३ ॥

समाप्तं संख्यैकान्तवादनिराकरणप्रकरणम् ॥

अथावसरतः फलपरीक्षणाय संशयमाह।

**सद्यः कालान्तरे च फलनिष्पत्तेः संशयः**[(१)] **॥ ४४ ॥**

भोजनादिक्रियायाः सद्यःफलकत्वदर्शनात् कृष्यादेः कालान्तरीयफलकत्वदर्शनात्। यादृच्छिकजलताडनादेर्निष्फलत्वदर्शनाच्चेति शेषः। यागहिंसादिकं सफलं न वेति संशयः ॥ ४४ ॥

अत्र पूर्वपक्षी वदति।

**न सद्यः फलं कालान्तरोपभोग्यत्वात्**[(२)] **॥ ४५ ॥**

कालान्तरोपभोग्यफलकत्वश्रवणात्। तथाहि यागादेः स्वर्गादि फलं हिंसादेश्च नरकादिकं फलं श्रुतमस्ति

(१) इदं न्यायसूचीनिबन्धे वर्तते। एतेन फलतः प्राङ्निष्पत्तेर्वृक्षफलवत् स्यादित्यत्र तत एव कालान्तरेणानिष्पत्तिर्हेतुविनाशादित्यत्र अत एव न सद्यः कालान्तरोपभोग्यत्वादित्यत्र तत एव सद्यः कालान्तरे च फलनिष्पत्तेः संशय इत्यत्र सूत्रत्वं दर्शितमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः।

(२) तत्रैहिककीर्त्त्यकीर्त्त्यादीनामेव फलत्वसम्भवे नादृष्टादिकल्पनमितिपूर्वपक्षे सिद्धान्तसूत्रमिति वृत्तिकृतः। पूर्वसूत्रस्य टिप्पणी द्रष्टव्या। परं त्विदं न्यायसूचीनिबन्धे नास्ति। अन्यत्र फलमिति नास्ति।

CC-0. In Public Domain. Digitized by eGangotri

तच्च सद्यो न भवति स्वर्गस्य दुःखासम्भिन्नसुखरूपस्य दुःखानवच्छेदकीभूतशरीरनिष्पाद्यतया नरकस्य सुखानवच्छेदकशरीरनिष्पाद्यतया तादृशशरीरस्येहादर्शनादिति ॥ ४५ ॥

ननु तर्हि कालान्तरीयमेव फलमस्त्वित्याशङ्क्य पूर्वपक्षी पुनराह ।

**न कालान्तरे निष्पत्तिर्हेतुनाशात्**(१) ॥ ४६ ॥

न कालान्तरेऽपि फलोत्पत्तिः हेतुत्वाभिमतयागहिंसादिकर्मनाशादित्यर्थः ॥ ४६ ॥

तथा च यागहिंसादिकं निष्फलमेव तत्तद्वेदोऽप्यप्रमाण एवेति । न चैहिककीर्त्तिदुष्कीर्त्त्यादिकमेव फलमस्तु तत्फलस्याश्रुतत्वात् निभृतैरपि कर्माचरणाच्चेतिपूर्वपक्षे सिद्धान्तयति ।

**प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात्**(२) ॥४७॥

केचित्तु पाकादिक्रियायाः सद्यःफलकत्वस्य कृष्यादेः कालान्तरफलकत्वस्य दर्शनादग्निहोत्रहवनादेर्हिंसादेर्वा फलं कालान्तरीयं न वेति संशयः । तत्रैहिककीर्त्त्यकीर्त्त्यादिफलकत्वसम्भवेन नादृष्टादिकल्पनमितिपूर्वपक्षे सिद्धान्तसूत्रम् । न सद्यः फलमिति । अर्थस्तु पूर्ववत् । शङ्कते । न कालान्तरे निष्पत्तिर्हेतुनाशात् । अर्थस्तूक्त एव । समाधत्ते । प्राङ्निष्पत्तेरितीति प्राहुः । निष्पत्तेः स्वर्गादिफलोत्पत्तेः प्राक् तत् यागादि स्यात् द्वारसम्बन्धेन वर्तते ।

(१) कालान्तरेणानिष्पत्तिर्हेतुविनाशादिति पाठो न्यायसूचीनिबन्धादिषु । पूर्वपूर्वसूत्रस्य टिप्पणी द्रष्टव्या ।

(२) इदं न्यायसूचीनिबन्धे वर्तते । ४४ सूत्रस्य टिप्पणी द्रष्टव्या ।

CC-0. In Public Domain. Digitized by eGangotri

द्वारं चादृष्टम् । द्वारसम्बन्धेन सतः कारणत्वे दृष्टान्तमाह । वृक्षफलवदिति । वृक्षफलादिवेत्यर्थः । यथा वृक्षफलात् प्राक् मूलसेकादिविनाशेऽपि द्वारसम्बन्धेन सत्त्वेन तद्धेतुत्वं तथेहापीत्यर्थः । वृक्षफले च द्वारमवयवोपचयादि ॥ ४७ ॥

ननु फलस्योत्पादसम्भव एव कार्यकारणभावसम्भवः कुत्रापि फलोत्पादासम्भवात् कथमेतदित्याशङ्कते ।

**न सन्नासन्न सदसत् सदसतोर्वैधर्म्यात्**[१] **॥ ४८ ॥**

प्राङ्निष्पत्तेः फलमित्यादि । तथा चोत्पत्तेः पूर्वं फलं न सदुत्पत्त्यनुपपत्तेः नाप्यसदसत उत्पत्तौ खपुष्पादिकमप्युत्पद्येत तथा सिकतादावपि तैलं स्यात् । अत एव न सदसत् सदसतोः सत्त्वासत्त्वलक्षणवैधर्म्येणैकत्वायोगादित्यर्थः ॥ ४८ ॥

समाधत्ते ।

**प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात्**[२] **॥ ४९ ॥**

उत्पत्तिधर्मकं पटादिकमुत्पत्तेः पूर्वं न सदित्यद्धा तत्त्वम् । उत्पादव्ययदर्शनादुत्पन्नत्वेन नाशप्रतियोगित्वेन च

(१) प्रथमद्वितीययोर्विकल्पयोस्तु सूत्रमेवं योजनीयं सदसतोर्वैधर्म्यादित्यादि नासच्च सच्च सदसत् सदसतोर्वैधर्म्यादित्यत्र च सूत्रत्वे सिद्ध इति च न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । नासच्च सदित्यन्यत्रापि पाठः ।

(२) नासच्च सच्च सदसत् सदसतोर्वैधर्म्यादित्यत्र च सूत्रत्वे सिद्धे प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात् बुद्धिसिद्धं तु तदसदित्यनयोरपि सिद्धं भवतीति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । न्यायसूचीनिबन्धे तु उत्पादव्ययदर्शनादित्येतन्मात्रं सूत्रपाठः ।

CC-0. In Public Domain. Digitized by eGangotri

प्रमितत्वात् । तथा चाद्यक्षणसम्बन्ध उत्पत्तिः । आद्यत्वं स्वाधिकरणसमयध्वंसानधिकरणत्वं कार्यस्य पूर्वं सत्त्वे तत्कालध्वंसाधिकरणत्वसत्त्वेनाद्यत्वासिद्धिः । सत्त्वस्य कालसम्बन्धरूपत्वात् तस्य चाव्याप्यवृत्तितया सत्त्वासत्त्वयोः कालभेदेन सम्भवात् । एवमनुत्पन्नभावस्य नाशायोगान्नाशप्रतियोगित्वे ऽपि उत्पत्तिसाधकतयोत्पादस्य पूर्वासत्त्वसाधकत्वमिति भावः ॥ ४९ ॥

ननु तदा कथं खपुष्पादिकं नोत्पद्यत इत्यत आह ।

**बुद्धिसिद्धं तु तदसत्** (१) ॥ ५० ॥

तत् कार्यमसत् पूर्वमसद् बुद्धिसिद्धम् । खपुष्पादिकं तु न बुद्धिसिद्धमिति तस्य नोत्पादः । तथा च यत्र तन्तुतुरीवेमादिसमवधानं तत्र पटो जायत इति ज्ञात्वा कुविन्दस्तत्समवधानेन पटोत्पादार्थं प्रवर्तते खपुष्पादेः कुत्राप्युत्पादादर्शनान्नैतद्धेतुकल्पनं न कोऽपि प्रवर्तते च तत्र । एवमन्वयव्यतिरेकाभ्यां तिलादेस्तैलादिसाधनत्वमवधार्य तैलार्थी तिलादौ प्रवर्तते न तु सिकतादौ तथान्वयव्यतिरेकादर्शनादिति कार्यकारणभावोऽनुभवसिद्ध इति भावः ॥ ५० ॥

ननु तथापि स्वर्गादिकाले यागाद्यवच्छेदकशरीरविरहात् कथं यागादेस्तद्धेतुता वैयधिकरण्यादित्याशङ्कते ।

**आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः** (२) ॥ ५१ ॥

(१) पूर्वसूत्रटिप्पणी द्रष्टव्या ।

(२) इदं न्यायसूचीनिबन्धे वर्तते । आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः प्रीतेरात्माश्रयत्वादप्रतिषेधः न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचार इत्यत्र सूत्रं भाष्यविप्रतिपत्तिं निवारयिष्यन्नाहेति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः ।

CC-0. In Public Domain. Digitized by eGangotri

वृक्षफलोत्पत्तिवदिति प्रतियोगिनि दृष्टान्तः । तथा च वृक्षफले यथा मूलसेकादिर्हेतुस्तथात्र न सम्भवति आश्रयव्यतिरेकादिति । न च मूलसेकादेरप्यवयवसम्बन्धेन वृक्षान्तरोत्पादनेनैव फलजननात् तत्रापि वैयधिकरण्यमस्तीति वाच्यम् । तत्र वृक्षान्तरस्य पूर्ववृक्षसजातीयस्यैव जननात् तादृशसाजात्यघटितपरम्परया प्रयोजकत्वसम्भवादित्यभिप्रायः ॥ ५१ ॥

समाधत्ते ।

**प्रीतेरात्माश्रयत्वादप्रतिषेधः[1] ॥ ५२ ॥**

प्रीतेः स्वर्गादिसुखस्यात्माश्रयत्वादात्मवृत्तित्वादप्रतिषेधो वैयधिकरण्येन यागादिजन्यत्वप्रतिषेधो नेत्यर्थः । एवं च समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुहेतुमद्भावो नावच्छेदकत्वघटितसामानाधिकरण्यप्रत्यासत्त्येति भावः ॥ ५२ ॥

फलविशेषेषु वैयधिकरण्यमाशङ्कते ।

**न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात्[2] ॥ ५३ ॥**

एषु वैयधिकरण्येन यागादेर्न हेतुतासम्भव इति तत्तद्वेदस्याप्रामाण्यमिति भावः ॥ ५३ ॥

---

(१) प्रीतेरात्माश्रयत्वादप्रतिषेध इति । आश्रयव्यतिरेकोऽसिद्ध इति सूत्रार्थः । यत्रैव कर्म तत्रैव कर्मफलमिति वार्त्तिकम् । पूर्वसूत्रस्य टिप्पणी द्रष्टव्या ।

(२) देशयति । न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् । परिहरति । तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः । इति सूत्रद्वयं धृत्वा व्याख्यावसरे तस्मात् पुत्रादिसम्बन्धात् तदुत्पत्तेः सुखोत्पत्तेः तेषु यथा फलशब्दप्रयोगः तथा तेषु पुत्रादिष्वित्यर्थः । सूत्रार्थकथनेनैव भाष्यवार्त्तिके व्याख्याते इति तात्पर्यटीकायामुक्तम् । न्यायसूचीनिबन्धे चेदं वर्तते । पूर्वपूर्वसूत्रटिप्पणी द्रष्टव्या । पुत्रपशुस्त्रीपरिजनेति आदर्शपुस्तके पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

समाधत्ते ।

**तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः[1] ॥ ५४ ॥**

तत्सम्बन्धात् पुत्रादिसम्बन्धात् । फलनिष्पत्तेः प्रीत्युत्पत्तेः । तेषु पुत्रादिषु । फलवदुपचारः फलत्वव्यपदेश आयुर्घृतमितिवत् । तथा चान्येच्छानधीनेच्छाविषयस्य स्वतः पुरुषार्थस्य सुखस्य सामानाधिकरण्यमस्तीति सुखेच्छाधीनेच्छाविषयस्य पुत्रादेर्मुख्यफलत्वाभावेन तत्र वैयधिकरण्ये ऽपि न क्षतिरिति भावः । वस्तुतो यः पुत्रकाम इत्यादिना पुत्रादेरेव दर्शपौर्णमासफलत्वश्रवणात् तादृशवेदप्रामाण्याय तेष्वपि सामानाधिकरण्यं दर्शयितुमाह । तत्सम्बन्धादिति । तेषां पितृत्वादिसम्बन्धस्यात्मनि सत्त्वेन तेन सम्बन्धेन पुत्रादिकं प्रति यागस्य हेतुत्वमुपपन्नमिति सूचितम् । पुत्रादेः पुरुषार्थतां सम्पादयितुं तत्सम्बन्धात् फलनिष्पत्तेरित्याद्युक्तमिति । अत्रैहिकसुखादेः प्रत्यक्षसिद्धतया तदीयसामग्रीणामपि तथाविधतया तत्र प्रमाणाकाङ्क्षाविरहेण यागादिफलमेव कालान्तरीयं परीक्षितमिति बोध्यम् ॥ ५४ ॥

समाप्तं फलपरीक्षाप्रकरणम् ॥

फलं सुखं मुख्यं तदन्यद् गौणमित्यर्थः ॥

क्रमप्राप्तं दुःखं परीक्षयति ।

**विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः[2] ॥ ५५ ॥**

(१) ५१ सूत्रस्य टिप्पणी द्रष्टव्या । इदमपि न्यायसूचीनिबन्धे वर्तते ।

(२) एतद्व्याख्यावसरे विविधा च बाधना हीना मध्यमोत्कृष्टा चेति । शेषं भाष्य इति वार्त्तिकम् । न्यायसूचीनिबन्धे चेदं वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

यद्यपि फलपरीक्षणेनैव दुःखपरीक्षापि जाता तथापि बलवद्द्वेषविषयत्वेन तत् परीक्षणीयम्। तथाहि जन्मयोगाच्छरीरं जन्म उत्पत्तिस्तदात्मसम्बन्धः। स च विविधबाधनायोगाद् विविधदुःखसाधनत्वाद् दुःखमेव दुःखमिव बलवद्द्वेषविषय इत्यर्थः। तथा च दुःखस्य द्वेषविषयत्वं नैसर्गिकमिति भावः। शरीरसम्बन्धस्य द्वेष्यत्वकीर्तनं वैराग्यार्थं बोध्यमिति ॥ ५५ ॥

शङ्कते।

**न सुखस्याप्यन्तरालनिष्पत्तेः[१] ॥ ५६ ॥**

न शरीरसम्बन्धो बलवद्द्वेष्यः सुखस्यापि दुःखमध्ये जननादित्यर्थः ॥ ५६ ॥

समाधत्ते।

**बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः[२] ॥ ५७ ॥**

बाधनानिवृत्तेर्बाधनाया अनिवृत्तेः। वेदयतः दुःखातिशयसाधनताविदुषः। पर्येषणदोषादिष्टसाधने ऽप्यप्रवृत्तेः। अप्रतिषेधः शरीरसम्बन्धे बलवद्द्वेष्यत्वप्रतिषेधो नेत्यर्थः। बलवद्द्वेषविषयदुःखसाधनत्वज्ञानस्यैव प्रवृत्तिविरोधित्वादिति भावः ॥ ५७ ॥

ननु प्रतिषिद्धहिंसापरदारसम्भोगादौ कथं प्रवृत्तिरित्यत आह।

**दुःखविकल्पे सुखाभिमानाच्च[३] ॥ ५८ ॥**

---

(१) इदं न्यायसूचीनिबन्धे वर्तते।

(२) इदमपि पूर्ववत्।

(३) इदमपि पूर्वपूर्ववत्।

CC-0. In Public Domain. Digitized by eGangotri

दुःखस्य विविधः कल्पो यत्र तादृशहिंसादौ । सुखाभिमानाद् बलवद्द्वेषविषयदुःखासाधनत्वविशिष्टेष्टसाधनत्वभ्रमात् प्रवृत्तिरिति । तथा च विशेषदर्शिनां बलवद्द्वेषविषयदुःखसाधनत्वग्रहान्न तत्र प्रवृत्तिरिति भावः ॥ ५८ ॥

समाप्तं दुःखपरीक्षाप्रकरणम् ॥

क्रमप्राप्तमपवर्गं परीक्षयितुं पूर्वपक्षयति ।

**ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः**(१) ॥५९॥

ऋणक्लेशानां प्रवृत्त्यनुबन्धात् प्रवृत्तिनैयत्यादपवर्गार्थप्रवृत्तिकालाभावादपवर्गाभावः । तथा च जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इतिश्रुतिवाक्येन ऋषिभ्य ऋष्यृणेभ्यो ब्रह्मचर्येण मुच्यते देवेभ्यो देवर्णेभ्यो यज्ञेन मुच्यते पितृभ्यः पितृणेभ्यः प्रजया अपत्येन मुच्यत इत्यर्थकेन ऋणत्रयापाकरणार्थं नियतकर्मानुष्ठानेनैव जीवनापाये कुतोऽपवर्गवार्ता । श्रूयते च । सत्रं यदग्निहोत्रं दर्शपौर्णमासौ च जरया ह वा एतस्माद्विमुच्यते मृत्युना वेति । न च मोक्षार्थिनां ऋणापाकरणानावश्यकतेति वाच्यम् ।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥

इतिस्मृत्या तदावश्यकत्वकीर्तनात् । एवं क्लेशेन रागादिना प्रवृत्त्यनुबन्धादपि अपवर्गाभावः रागादेस्तदधीनकर्मणश्चापरिहार्यत्वादिति भावः । यद्वा ऋणैः क्लेशैः प्रवृत्तिभिश्चानुबन्धात् प्रतिबन्धादपवर्गाभावः । अथवा

(१) ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभाव इत्यनेन सूत्रेण ऋणानुबन्धाचास्त्यपवर्गः शेषं भाष्य इति वार्त्तिकम् ।

CC-0. In Public Domain. Digitized by eGangotri

प्रतिबन्धकीभूतानामृणादीनामनुबन्धान्नियतसत्त्वादपवर्गाभावः। तत्र ऋणानि ब्रह्मचर्यादिविनाश्यदुरदृष्टविशेषाः। क्लेशाः क्लेशहेतुरागादयः। प्रवृत्तिर्धर्माधर्मतद्धेतुयत्नविशेषाः। तत्र ऋणानि व्याख्यातानीति॥ ५९॥

समाधत्ते।

**प्रधानशब्दानुपपत्तेर्गुणशब्देनार्थवादो निन्दाप्रशंसोपपत्तेः[1] ॥ ६०॥**

प्रधानशब्दानुपपत्तेर्मुख्यशब्दत्वानुपपत्तेर्मुख्यार्थपरत्वानुपपत्तेरिति यावत्। गुणवादेन लक्ष्यार्थपरत्वेनार्थवादः। जायमान इत्यादिशब्दः श्रुत्यामभिहित इति शेषः। तेनैव निन्दाप्रशंसोपपत्तेरित्यर्थः। तथा च जायमानस्य कर्मण्यधिकारो न सम्भवति। तथोक्तं भाष्ये। यदा तु मातृतो जातः कुमारो न तदा कर्मभिरधिक्रियते ऽर्थिनः शक्तस्य चाधिकारादिति। अर्थिनः कामिनः। ननु तदा जायमानशब्दः किंपर इत्यत आह भाष्ये। जायमान इति गुणशब्दो विपर्यये ऽनधिकारादिति। तथा च श्रुत्यन्तरप्रतिपादितो ब्रह्मचर्याधिकारी। उपनीतोऽग्निहोत्राद्यधिकारी गृहस्थश्च जायमानशब्देन लक्ष्यते। एवं च उपनयनानन्तरं प्रव्रज्यादौ न दोषः। एवं श्रुतिरपि। यदहरेव विरज्येत तदहरेव प्रव्रजेदित्यादिः। एवमृणशब्दोऽपि न मुख्यः न ह्यत्र प्रत्यादेयं कश्चन ददाति परं तु ऋणापाकरणवदावश्यकत्वख्यापनाय सः। तथोक्तं निन्दाप्रशंसोपपत्तेरिति। ऋणापाकरणानपाकरणाभ्यामिवाग्निहोत्रकरणाकरणाभ्यां निन्दाप्रशंसयोरुपपत्तेरिति तदर्थः। ननु गृहस्थस्य न कदापि मोक्षः स्यादिति चेदायुषश्चतुर्थभागे

(१) इदं न्यायसूचीनिबन्धे वर्तते। तत्र च गुणशब्देनानुवाद इति पाठः।

CC-0. In Public Domain. Digitized by eGangotri

मोक्षाधिकारश्रवणात् । अत एव सत्रं यदग्निहोत्रमित्यादिश्रुतौ जराशब्द आयुषश्चतुर्थभागपर इत्युक्तम् । न च तत्र जराशब्दोऽशक्तिपरः अन्तेवासी वा जुहुयात् स हि ब्रह्मणा परिक्रीत इतिश्रुत्या अशक्तस्यापि प्रतिनिधिविधानात् । मृत्युना वेति मोक्षविमुखकामिपरम् । अनपाकृत्य मोक्षं त्विति स्मृतिरपि विरक्तेतरपरं यदहरेव विरज्येतेत्यादिश्रुतेरिति नानुपपन्नं मोक्षानुकूलानुष्ठानम् । क्वचिद् गृहस्थस्यापि मोक्षाधिकारः श्रूयते । तथाहि । कर्मणैव हि संसिद्धिमास्थिता जनकादय इति भगवद्वाक्यम् ।

न्यायापन्नधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥
इत्याचार्यधृता स्मृतिरपीति ॥ ६० ॥(१)

ननु यदि कर्ममात्रस्य त्यागस्तदा यावज्जीवमग्निहोत्रं जुहोतीतिश्रुतेरसङ्गतिरित्यत आह ।

**समारोपादात्मन्यप्रतिषेधः(२) ॥ ६१ ॥**

आत्मनि समारोपादग्नीनामात्मनि समारोपविधानान्न मोक्षप्रतिषेधः । श्रूयते हि । प्राजापत्यामिष्टिं निरूप्य तस्यां सर्ववेदसं दत्त्वा आत्मन्यग्नीन् समारोप्य ब्राह्मणः परिव्रजेदिति ॥ ६१ ॥

---

(१) अत्र वार्त्तिके अन्यत्र च अधिकाराच्च विधानं विद्यान्तरवदित्येकं सूत्रमधिकं दृश्यते । तच्च न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च नास्ति ।

(२) फलार्थिनश्चेदं ब्राह्मणं जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति । कथम् । समारोपणादात्मन्यप्रतिषेध इति भाष्यधृतपाठः । फलार्थिनश्चेति । पृष्ट्वा सूत्रं पठति । कथम् । समारोपणादात्मन्यप्रतिषेध इति तात्पर्यटीका । ननु समारोपणादात्मन्यप्रतिषेध इत्यनेन सूत्रेण प्रव्रज्याया विधानं दर्शयतानवसरदोषो निराकृत इति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । न्यायसूचीनिबन्धे ऽपि समारोपणादिति पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

नन्वग्निहोत्रादिपरित्यागेऽपि पूर्वकृततत्फलस्वर्गादिरेव मोक्षप्रतिबन्धक इति चेत् तत्राह ।

**पात्रचयान्तानुपपत्तेश्च फलाभावः[1] ॥६२॥**

भिक्षोः स्वर्गादिफलस्याभावः । अग्निहोत्रं हि पात्रचयान्तं पात्राणि अग्निहोत्रपात्राणि तेषां चयः प्रमृतस्य यजमानस्याङ्गेषु विन्यासः मुखे घृतपूर्णां स्रुवमितिक्रमेण । भिक्षोस्तदनुपपत्तेः तेन तत्परित्यागादिति । नन्वग्निहोत्रस्यासाङ्गत्वेन समग्रफलाभावेऽपि न्यूनफलं भवत्येव । एवं ज्योतिष्टोमगङ्गास्नानादिपुण्यकर्महिंसादिपापकर्मफलं च स्यादेव कुतो मोक्ष इति चेत् । न । चकारेण कर्मफलनाशस्तत्त्वज्ञानेनेतिसमुच्चयात् । तथा च श्रुतिः । विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । एवं क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर इति । ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन इति भगवद्वचनं च । एतच्च प्रारब्धेतरकर्मनाशपरं प्रारब्धस्य तु भोगादेव क्षयात् । माभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीतिवचनादिति ॥ ६२ ॥

रागादिनिबन्धनप्रवृत्तिं वारयति । यद्वा रागादिकं वारयति ।

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः[2] ॥ ६३ ॥**

(१) यस्मान्निवृत्तेऽर्थित्वे प्रव्रजितानां पात्रचयान्तानि कर्माणि न क्रियन्ते यदि चेदं ब्राह्मणमविशेषेण प्रवर्तते न सर्वत्र पात्रचयान्तानि प्रसज्यन्त इति शेषं भाष्य इति वार्तिकम् । समारोपणादात्मन्यप्रतिषेध इत्यनेन सूत्रेण प्रव्रज्याया विधानं दर्शयतानवसरदोषो निराकृतः । पात्रचयान्तानुपपत्तेश्च फलाभाव इत्यनेनापि स एवेति पौनरुक्त्यमिति न्यायवार्त्तिकतात्पर्यपरिशुद्धावुदयनाचार्याः । न्यायसूचीनिबन्धेऽपीदं वर्तते ।

(२) इदं न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

यथा सुषुप्तस्य स्वप्नादर्शनकाले हेतुविरहेण क्लेशाद्यभावो दुःखाद्यभावस्तथा रागादिविरहेण प्रवृत्त्यनुपपत्त्या धर्माद्यभावेनापवर्ग इत्यर्थः । यद्वा क्लेशाद्यभाववत् रागाद्यभाववदपवर्गसाधनस्य क्लेशाद्यभावस्य सङ्गतिः तत्त्वज्ञानिनां क्लेशादिहेतुमिथ्याज्ञाननिरासादिति भावः ॥ ६३ ॥

रागादिरहितस्य तत्त्वज्ञानिनोऽपि विहिताविहितप्रवृत्तिदर्शनात् कुतोऽपवर्ग इत्यत आह ।

**न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य**(१) ॥६४॥

निवृत्तरागादेः प्रवृत्तिर्न प्रतिसन्धानायादृष्टायेत्यर्थः । प्रतिसन्धीयते शरीरमनेनेति प्रतिसन्धानपदस्यादृष्टपरत्वादिति ॥ ६४ ॥

शङ्कते ।

**न क्लेशसन्ततेः स्वाभाविकत्वात्**(२) ॥ ६५ ॥

न रागाद्युच्छेदस्तस्य स्वाभाविकत्वाच्छरीरनियतत्वादित्यर्थः । यद्वा स्वाभाविकत्वात् स्वसमानाधिकरणरागादिप्रागभावासमानकालीननाशप्रतियोगित्वादित्यर्थः । तेन सुषुप्तौ रागाद्यसत्त्वेऽपि न क्षतिः । वस्तुतस्तु स्वाभाविकत्वादाश्रयोत्पत्तिद्वितीयक्षणे आवश्यकतया तत्र स्थितत्वात् । आश्रयत्वं चात्रावच्छेदकत्वाख्यसम्बन्धेन तेन शरीरलाभ इति ॥ ६५ ॥

केषाञ्चित् समाधानमाह ।

**प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम्**(३) ॥ ६६ ॥

(१) इदमपि पूर्ववत् ।
(२) इदमपि तथा ।
(३) इदमपि तथा ।

CC-0. In Public Domain. Digitized by eGangotri

अणुश्यामतानित्यत्ववद्वा[1] ॥ ६७ ॥

प्रागित्यस्य व्युत्पत्तिवैचित्र्येणाभावेत्यनेनान्वयः। तेनोत्पत्तेः कार्यस्य प्रागभावानित्यत्ववदित्यर्थः। प्रागभावस्य प्रतियोगिसमवायिदेशोत्पत्तिमारभ्य तत्र स्थितत्वेऽपि यथा तद्विरोधिप्रतियोगिसामग्र्या तन्नाशस्तथा रागादिहेतुभूतमिथ्याज्ञानविरोधितत्त्वज्ञानेन रागाद्युच्छेद इत्यर्थः। दृष्टान्तान्तरमाह। अणुश्यामतानित्यत्ववद्वेति। परमाणोः श्यामताया विनाशवदित्यर्थः॥ ६६ ॥ ६७ ॥

अत्र न दृष्टान्ततुल्यता प्रागभावस्य प्रतियोगिनाश्यता श्यामतायाश्च पाकादिनाश्यतास्तु मिथ्याज्ञानाधीनरागसन्ततेस्तु न तत्त्वज्ञाननाश्यता स्वोत्तरोत्पन्नविशेषगुणेन रागादिनाशस्य सर्वैः स्वीकारात्। तेन तत्सन्ततेरुच्छेदो न सम्भवतीति। एवं स्वाभाविकभावस्य नित्यतानियमे प्रागभावव्यभिचारो न दोष इति। एवं द्वितीयदृष्टान्ते श्यामतायाः स्वाभाविकत्वमपि नास्तीति वैषम्यात् स्वयं सिद्धान्तमाह।

न सङ्कल्पनिमित्तत्वाच्च रागादीनाम्[2] ॥६८॥

न रागादिसन्ततिनियमः। रागादीनामित्यस्यादृष्टहेतूनामित्यादि। तेन तत्त्वज्ञानिनामपि प्रवृत्त्यन्यथानुपपत्त्या रागविशेषादिस्वीकारेऽपि न क्षतिः। सङ्कल्पनिमित्तत्वाद् रूपादावुपादेयत्वग्रहहेतुकत्वात्। यद्वा मिथ्याज्ञानहेतुकत्वात् मिथ्याज्ञाने तत्त्वज्ञानेन निरस्ते कारणविरहेण विलक्षणरागाद्यनुत्पादादुत्पन्नस्य च स्वोत्तरं ज्ञाना-

---

(१) इदमपि तथा।

(२) इदमपि तथा।

CC-0. In Public Domain. Digitized by eGangotri

दिना नाशादिति सन्तत्युच्छेदः यथा तैलवर्त्यादिनाशेन दीपसन्तत्युच्छेद इति भावः ॥ ६८ ॥

समाप्तमपवर्गपरीक्षाप्रकरणम् ॥

इति न्यायसूत्रे चतुर्थाध्यायस्याद्यमाह्निकम् ॥





CC-0. In Public Domain. Digitized by eGangotri

अथ स्वतः प्रयोजनं सुखं दुःखाभावश्च । तत्र सुखमपि बहुतरदुःखानुबिद्धं चेद्धेयं दुःखाभावोऽपि कादाचित्कस्तथेत्यात्यन्तिकदुःखनिवृत्तिरूपापवर्गः परमपुरुषार्थ इति तल्लक्षितं परीक्षितं च तद्धेतुतया पदार्थतत्त्वज्ञानमप्युक्तम् । तत्र कीदृशतत्त्वज्ञानस्य साक्षान्मिथ्याज्ञाननिरसनद्वारापवर्गसाधनत्वमित्याकाङ्क्षोदयात् तदेव तत्त्वं परीक्षयति ।

**दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः[१] ॥ १ ॥**

अहङ्कारः स्थूलोऽहमित्यादिरूपः शरीरात्मग्रहः । तदेव मिथ्याज्ञानाज्ञानादिपदेनोच्यते । यद्बलात् रञ्जनीयेषु रज्यति कोपनीयेषु कुप्यति । दोषनिमित्तानां रूपादिविषयाणां शरीरादीनां च तत्त्वज्ञानादित्यर्थः । तत्र च शरीरादावनात्मत्वरूपतत्त्वज्ञानं विरोधिविषयकतया साक्षान्मिथ्याज्ञाननिवर्तकम् । तच्च ज्ञानं साक्षात्काररूपम् । तत्र च श्रवणमनननिदिध्यासनानि साधनानि । रूपादीनामनित्यसुखोपधायकत्वदुःखोदर्कत्वादिनिबन्धनहेयत्वरूपतत्त्वभावनं तथा भोग्यकामिन्यादिशरीरे मांसासृगस्थिनिर्मितत्वपूयपूरितत्वादिनिबन्धनहेयत्वभावनं रञ्जनीयेषु वैराग्यद्वारा सहकारि । एवं कोपनीयेषु

मांसासृक्कीकसमयो देहः किं मेऽपराध्यति ।
एतस्मादपरः कर्ता कर्तनीयः कथं मया ॥

इत्यादिभावनमपि तथैव सहकारि । वैराग्यं च रूपा-

(१) अर्थगतिं परिशोध्यात्रार्थे सूत्रं पठति । दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरिति तात्पर्यटीका । तत्र सिद्धान्तसूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

दावुपादेयत्वग्रहविरहेण तदभिलाषशून्यता । उपादेयत्वं च बलवदनिष्टाननुबन्धीष्टसाधनतेति ॥ १ ॥

दोषनिमित्तं विवृणोति ।

**दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः[(१)] ॥ २ ॥**

रूपादीत्यनेन गन्धादयस्तदाश्रयशरीरादीनि च गृह्यन्ते । सङ्कल्पकृता इदमुत्तमं रूपमेतद्दर्शनमिष्टमियं सुन्दरी ममोपभोगकरीत्यादिज्ञानरूपसङ्कल्पविषयीभूताः । तथा च तत्तत्सङ्कल्पादिना तत्रतत्र रागो जायते । एवं द्विष्टसाधनताबुद्ध्या क्वचिद् द्वेषो जायत इति ॥ २ ॥

सङ्कल्पे च को हेतुरित्याकाङ्क्षायामाह ।

**तन्निमित्तं त्ववयव्यभिमानः[(२)] ॥ ३ ॥**

तन्निमित्तं सङ्कल्पहेतुः । अवयविनि शरीरे ऽभिमान आत्मग्रहः । केचित्तु दोषनिमित्तानामितिसूत्रस्य देहादावनात्मत्वज्ञानं मिथ्याज्ञाननिवर्तकमित्यर्थः । ननु केषु रञ्जनीयेषु रज्यन् संसरतीति विवेकाय तानुपदिशति । दोषनिमित्ता इति द्वितीयसूत्रम् । तत्र सङ्कल्पः समीचीनत्वेन भावनम् । तद्विषयीकृता रूपादयो दोषस्य रागादेर्निमित्तम् । सुन्दरीयमिति जानन् रज्यति शत्रुरयमिति जानन् द्वेष्टि ते रूपादयो हेयत्वेन भावनीयाः प्रथमं ततः शरीरात्मविवेक इति । ननु सौन्दर्यादिकं पश्यतो रागादिर्ब्रह्मणोऽपि दुष्परिहर इति तन्निवृत्त्युपायं दर्शयिष्यन्नाह ।

(१) सूत्रम् । दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृता इति तात्पर्यटीका ।

(२) सूत्रम् । तन्निमित्तं त्ववयव्यभिमान इति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

तन्निमित्तमिति तृतीयसूत्रम् । तत्रावयविनि तरुण्यादिशरीरे ऽभिमानः परिष्कारबुद्धिः तन्निमित्तं रागादिनिमित्तम् । तथा च सा बुद्धिर्हेया । अत एव भाष्यादौ परिष्कारबुद्धिरनुरञ्जनसंज्ञा सा हेया दोषदर्शनमशुभसंज्ञा सा भावनीयेति वदन्ति ॥ ३ ॥

समाप्तं तत्त्वज्ञानोत्पत्तिप्रकरणम् ॥

अथावयव्येव नास्ति कुतस्तदभिमानस्य दोषनिमित्तता । न चावयविनो द्वितीयाध्याये व्यवस्थापितत्वमेवेति किं पुनराशङ्कनमिति वाच्यम् । पूर्वोक्तव्यवस्थापकयुक्तौ दोषाभिधानतन्निराकरणार्थं पुनः स्थापनारम्भात् । न च किमर्थमवयविव्यवस्थापनं परमाणुपुञ्ज एवाभिमानस्य दोषनिमित्ततासम्भवादिति वाच्यम् । तथापि वस्तुगतिमनुरुध्यैव प्रसङ्गतस्तद्व्यवस्थापनादिति । तत्र संशयं प्रदर्शयति ।

विद्याविद्याद्वैविध्यात् संशयः[1] ॥ ४ ॥

संशय इत्यस्यावयवीनीत्यादि । परमाणुर्द्रव्यसमवायी न वेत्याकारको द्रव्यं समवेतं न वेत्याकारको वा संशयः । तत्र द्रव्यत्वावच्छेदेन समवेतत्वाभावः सौगतस्य कोटिर्द्रव्यत्वसामानाधिकरण्येन समवेतत्वं नैयायिकानां कोटिरिति । हेतुमाह । विद्येति । विद्या यथार्थज्ञानमविद्या तदन्या तयोर्भेदेन ज्ञानद्वैविध्यादित्यर्थः । तथा चावयविप्रत्यक्षादौ प्रमात्वतदभावसहचरितज्ञानत्वलक्षणसाधारणधर्मदर्शनादिना प्रामाण्यसंशयेनावयविनि सन्देह इति भावः ॥ ४ ॥

(१) तत्र संशयप्रदर्शनाय सूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

समाधत्ते ।

**तदसंशयः पूर्वहेतुप्रसिद्धत्वात्**[1] ॥ ५ ॥

तस्यावयविनो न संशयः पूर्वहेतुप्रसिद्धत्वात् प्रकर्षेण निर्णीतत्वादित्यर्थः ॥ ५ ॥

बाधकमाशङ्कते ।

**वृत्त्यनुपपत्तेरपि संशयानुपपत्तिः**[2] ॥ ६ ॥

वृत्त्यनुपपत्तेरिति । वृत्त्यनुपपत्तेरेवावयविस्वीकाराभावादवयविविरहनिर्णयादिति यावत् । संशयानुपपत्तिः संशयानुत्पादः स्यात् न त्ववयविनिर्णयादिति भावः । यद्वा वृत्त्यनुपपत्तेः समवेतत्वानुपपत्तेः समवेतत्वविरहनिर्णयादिति यावत् । अन्यत् पूर्ववत् । वृत्त्यनुपपत्तिं विवृणोति भाष्यकारः । कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः[3] । अवयवी हि एकैकावयवे कात्स्न्र्येन एकदेशेन वा वर्तते । तत्र नाद्यः । विषमपरिमाणत्वात् । अन्त्येऽपि तेनैवावयवेन अन्येन वा । नाद्यः । स्वस्मिन् स्ववृत्तिविरोधात् । नान्त्यः । अवयवान्तरस्यावयवान्तरावृत्तेरिति । ननु विशेषवृत्तित्वविरहेऽपि सामान्यवृत्तितायां बाधकाभाव इत्यत आह तत्रैव । तेषु चावृत्तेरवयव्यभावः[4] । इदं सूत्रमिति केचित् । तेषु अवयवेषु

(१) इदं न्यायसूचीनिबन्धे वर्तते ।

(२) न्यायसूचीनिबन्धादिषु तु वृत्त्यनुपपत्तेरपि न संशय इति पाठः ।

(३) इदं न्यायसूचीनिबन्धे सूत्रत्वेन धृतम् । विश्वनाथपञ्चाननैस्तु वृत्त्यनुपपत्तिं विवृणोति भाष्यकार इत्यवतरणं दत्तम् ।

(४) इदमपि न्यायसूचीनिबन्धे सूत्रत्वेन धृतम् । विश्वनाथपञ्चाननास्तु तथापि कथमवयव्यभाव इत्यत्र भाष्यम् । तेष्वित्यादि धृत्वा व्याख्याय सूत्रमेवेदमित्यपि वदन्तीति प्राहुः ।

CC-0. In Public Domain. Digitized by eGangotri

अवृत्तेः । विशेषाभावकूटस्य सामान्याभावसाधनत्वादिति भावः ॥ ६ ॥

नन्वतिरिक्तोऽवयवी समुदितावयववृत्तिरित्याशङ्क्य पूर्वपक्षी आह ।

**पृथक् चावयवेभ्योऽवृत्तेः**[(१)] ॥ ७ ॥

अवयवेभ्यः पृथगप्यवयवी नास्तीति शेषः । अवृत्तेः प्रत्येकवृत्तित्वस्य निरुक्तयुक्त्या असम्भवेन समुदायवृत्तित्वस्यासम्भवात् । प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वनियमादिति भावः । न चावयविनोऽवृत्तित्वे क्षतिविरह इति वाच्यम् । तथा सति नित्यत्वप्रसङ्गात् ॥ ७ ॥

अथावयवी अवयवान्नातिरिच्यत इति तादात्म्येनैवावयवी अवयवे वर्तत इत्यत आह ।

**न चावयव्यवयवाः**[(२)] ॥ ८ ॥

अवयवा नावयवीत्यर्थः । अन्यथा तन्तुः पट इत्यादिप्रतीतिः स्यात् न स्याच्च तन्तुर्न पट इत्यादिप्रतीतिरिति भावः ॥ ८ ॥

सिद्धान्तयति ।

**एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः**[(३)] ॥ ९ ॥

एकस्मिन्नवयविनि । भेदाभावात् कात्स्न्र्यादिविशेषाभावात् । एकदेशेन न वर्तते कात्स्न्र्येन न वर्तत इत्यादिप्रयोगानुपपत्तेः । अप्रश्नः किं कात्स्न्र्येन वर्तते किमेकदेशेनेति

---

(१) नन्वास्तामवृत्तिरेवावयवीतिशङ्कायां पूर्वपक्षिसूत्रमिति वृत्तिकृतः ।

(२) इदं न्यायसूचीनिबन्धे वर्तते ।

(३) सिद्धान्तसूत्रमिति वृत्तिकृतः । इदमपि न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

प्रश्नो नेत्यर्थः । कार्त्स्न्यं हि अनेकाशेषत्वमेकदेशत्वं च समुदायत्वाश्रयैकव्यक्तिमात्रत्वं तदुभयमप्येकस्य न सम्भवतीति भावः ॥ ९ ॥

इतश्च वृत्तिविकल्पो न युक्त इत्याह ।

**अवयवान्तराभावे ऽप्यवृत्तेरहेतुः**[1] **॥ १० ॥**

एकस्मिन्नवयवे ऽवयवान्तरस्याभावे ऽपि समुदितवृत्तेरवयविनोऽवृत्तितायां न हेतुः कपालत्वादिवदवयविनोऽवयवसमवेतत्वसम्भवादिति भावः ॥ १० ॥

तदसंशयः पूर्वहेतुप्रसिद्धत्वादित्यनेन स्मारितायाः सर्वाग्रहणमवयव्यसिद्धेरिति प्रागुक्तयुक्तेर्दूषणमुपक्रमते।

**केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः**[2] **॥ ११ ॥**

तिमिरत्ववदनुपलम्भकेन दोषविशेषेण युक्तं तैमिरिकं चक्षुस्तेनोपलब्धिवत् तदुपलब्धिः परमाणुपुञ्जात्मकघटाद्युपलब्धिरित्यर्थः । तथा च यथा दोषविशेषशालिना चक्षुषा केशसमूहस्य प्रत्येकमगृह्णता समुदाय एकत्वेन गृह्यते तथा परमाणूनां प्रत्येकमगृह्णता तेन तत्समुदायात्मको घट एकत्वेन गृह्यत इति भावः ॥ ११ ॥

समाधत्ते ।

**स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः**[3] **॥ १२ ॥**

(१) इदमपि न्यायसूचीनिबन्धे वर्तते ।

(२) केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिरिति सूत्रभाष्यवार्त्तिकानि पूर्वपक्षसिद्धान्तयोरतिरोहितार्थानीति तात्पर्यटीका । इदं न्यायसूचीनिबन्धे वर्तते ।

(३) पूर्वसूत्रटिप्पणी द्रष्टव्या । इदमपि न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

स्वमिन्द्रियम् । तथा च स्वविषयानतिक्रमेण स्वविषय एवेन्द्रियाणां पाटवे विषयग्रहणस्य पाटवं याथार्थ्यमिन्द्रियाणां मन्दभावे च सदोषत्वे च विषयग्रहणस्य मान्द्यमयाथार्थ्यम् । एवकारव्यावर्त्यमाह । नाविषय इति । अविषये तत्तदिन्द्रियायोग्ये प्रवृत्तिः तत्तदिन्द्रियप्रवृत्तिरित्यर्थः । अयं भावः । केशस्य चक्षुर्योग्यत्वेन तत्समूहस्यापि चक्षुषा ग्रहणम् । परमाणोश्च चक्षुराद्ययोग्यतया तत्समूहस्यापि तदयोग्यत्वाद् घटादेः पुञ्जत्वे तत्प्रत्यक्षं न स्यात् पुञ्जस्य प्रत्येकानतिरेकात् प्रत्यक्षप्रयोजकस्य महत्त्वस्य तत्राभावात् । न च महान् धान्यराशिरितिवद् घटो महानित्यादिप्रतीतिबलात् प्रत्येकावृत्तेर्महत्त्वस्य समुदाये स्वीकार इति वाच्यम् । महान् धान्यराशिरित्यादिप्रयोगस्याधिकसंख्यकधान्यनिबन्धनस्य भाक्तत्वात् अत्रापि तथाप्रयोगस्वीकारे प्रत्यक्षानुपपत्तिरेवेति ॥ १२ ॥

दोषाभिधानाय सूत्रम् ।

**अवयवावयविप्रसङ्गश्चैवमाप्रलयात्**(१) ॥ १३ ॥

एवमवयवावयविप्रसङ्गोऽवयवावयविप्रवाहस्त्वया आप्रलयात् प्रलयपर्यन्तं स्वीकार्यः । अन्यथा प्रलयव्याघातः स्यात् जन्यद्रव्यानधिकरणस्यैव तत्त्वात् । तथा च प्रलयानन्तरं पुनः सर्गो न स्यात् समवायिकारणस्याभावादिति भावः ॥ १३ ॥

---

(१) एतद्व्याख्यानावसरे तत्र प्रथमद्वितीयविकल्पावाश्रित्येदं सूत्रमिति तात्पर्यटीका । दोषान्तराभिधानाय सूत्रमिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

समाधत्ते ।

न प्रलयोऽणुसद्भावात्[1] ॥ १४ ॥

न प्रलयो न सर्वावयवनाशोऽणुसद्भावात् । तथा च परमाणुभिरेव द्व्यणुकादिक्रमेण स्थूलः सर्गो भविष्यतीति भावः ॥ १४ ॥

परमाणुरेव क इत्यत्राह ।

परं वा त्रुटेः[2] ॥ १५ ॥

त्रुटेस्त्रसरेणोः परं यदतिसूक्ष्मं परमाणुरित्यर्थः । वाशब्दो विश्रामावधारणे । अथवा त्रुटेरवयवो द्व्यणुकं तदवयवो वा परमाणुरिति वाशब्दो विकल्पार्थ इति । यद्वा त्रुटेः परं सूक्ष्मं परमाणुस्त्रुटावेव वा विश्राम इति विकल्पोऽभिमतः । नव्यास्तु अणुसद्भावादित्यपेक्षया विकल्पः । तथा च त्रुटेर्हेतोः परं परसर्गीयं जन्यद्रव्यमित्यर्थः । त्रुटेः सावयवत्वसाधकप्रागुक्तहेतोरप्रयोजकत्वादिति भावः ॥ १५ ॥

समाप्तमवयवावयविप्रकरणम् ॥

अथ विश्वस्य शून्यत्वात् क्व परमाणुसम्भावनेत्याशङ्कते ।

आकाशव्यतिभेदात् तदनुपपत्तिः[3] ॥ १६ ॥

तस्य निरवयवस्य परमाणोरनुपपत्तिः कुत आकाशव्यतिभेदात् सर्वत्रैवान्तर्बहिश्चाकाशसंयोगात् । त्वन्मत

(१) इदं न्यायसूचीनिबन्धे वर्तते ।

(२) इदमपि तथा ।

(३) आकाशव्यक्तिभेदादित्यादर्शपुस्तके विवरणे च पाठः । अथ विश्वस्य शून्यत्वात् क्व परमाणुसम्भावनेतिमतनिराकरणाय निरवयवप्रकरणम् । तत्र पूर्वपक्षसूत्रमिति वृत्तिकृतः । न्यायसूचीनिबन्धे ऽपीदं वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

इत्यादि । तेन सर्वशून्यतावादिमते आकाशानभ्युपगमेऽपि न क्षतिः । तथा च सावयवत्वेन परमाणुरप्यनित्य इति सर्वशून्यतैव स्यादन्यथावयवधाराकल्पनेनानवस्था स्यादिति भावः ॥ १६ ॥

आकाशव्यतिभेदाभावे त्वाह ।

**आकाशासर्वगतत्वं वा**[1] **॥ १७ ॥**

स्यादिति शेषः ॥ १७ ॥

समाधत्ते ।

**अन्तर्बहिरिति कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः**[2] **॥ १८ ॥**

अन्तर्बहिःशब्दोऽवयवविशेषवाचकोऽवयवविशेषश्च कार्यद्रव्यस्य आकार्ये नित्ये परमाणौ तदभावोऽवयवाभाव इति तस्य नानित्यत्वं न चाकाशस्य सर्वगतत्वभङ्गः । अवयवाभावे हेतुमाह । कारणान्तरवचनात् । अवयवान्तरप्रसङ्गात् अवयवधाराप्रसङ्गेन मेरुसर्षपयोरविशेषप्रसङ्गादिति यावत् । यद्वा अन्तर्बहिरित्यत्र हेतुः कारणान्तरवचनादिति । कारणविशेषवचनात् कारणविशेषत्वेन कल्पनादिति यावत् ॥ १८ ॥

परमाणोर्निरवयवत्वेऽप्याकाशस्य सर्वगतत्वमुपपादयति ।

**शब्दसंयोगविभवाच्च सर्वगतम्**[3] **॥ १९ ॥**

---

(१) एतद्व्याख्यावसरे संयोगमात्रं चोत्तरसूत्रेणानूद्यत इति वार्त्तिकम् । इदमपि न्यायसूचीनिबन्धे वर्तते ।

(२) इदमपि न्यायसूचीनिबन्धे वर्तते । तत्रान्तर्बहिश्चेति पाठः ।

(३) परसूत्रव्याख्यावसरे यद्येते सूत्रे शून्यतावादिमते न सङ्गच्छेते इति वृत्तिकृतः । न्यायसूचीनिबन्धेऽपीदं वर्तते । वार्त्तिके तु सर्वसंयोगविभवाच्चेति पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

शब्दस्य संयोगस्य च विभवात् सर्वत्रोत्पादात् । सर्वगतम् सर्वगतत्वेन व्यपदिश्यते। गगनमिति शेषः । यद्वा शब्दसंयोगस्य शब्दानुमिततदनुकूलसंयोगस्य विभवादित्यर्थः । तथा च सर्वमूर्तसंयोगित्वमेव सर्वगतत्वं गगनस्येति भावः ॥ १९ ॥

ननु गगनस्य संयोगित्वे विष्टम्भादिकं स्यादित्यत आह ।

**अव्यूहनाविष्टम्भविभुत्वानि चाकाशधर्माः**[1] **॥ २० ॥**

व्यूहनं प्रतिहतस्य परावर्तनम् । विष्टम्भ उत्तरदेशगतिप्रतिबन्धः। आकाशे तयोरभावः निस्पर्शत्वात्। विभुत्वं सर्वगतत्वम्। एतत्कथनं चाविरोधित्वसूचनाय। यद्वा व्यूहनं क्रिया विष्टम्भ आधाराधेयभावः। आकाशे तयोरभाव इत्यर्थः । विभुत्वं परममहत्त्वम् । चकाराद्विभागादयो ज्ञेयाः ॥ २० ॥

पूर्वपक्षी शङ्कते ।

**मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः**[2] **॥ २१ ॥**

मूर्तिमतां च मूर्तिमतामेव सावयवानामेवेति यावत्। संस्थानोपपत्तेराकारविशेषोपपत्तेः। परमाणोः परिमण्डलाकारत्वश्रवणात् यद्यत् साकारं तत् सावयवमितिव्याप्त्या परमाणोरप्यवयवसद्भाव इत्यर्थः। यद्वा मूर्ति-

(१) पूर्वसूत्रटिप्पणी द्रष्टव्या । न्यायसूचीनिबन्धे ऽपीदं वर्तते । तत्र अव्यूहाविष्टम्भेति पाठः ।

(२) यद्यपि मूर्तिमतामिति सम्बन्धित्वमात्रेणोपात्तं सूत्र इति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

मत्त्वं मूर्तत्वं तेन संस्थानवत्त्वमनुमाय संस्थानवत्त्वेन सावयवत्वं परमाणोरपीति प्रागुक्तयुक्त्या सर्वशून्यतैवेति समुदितपर्यवसितार्थः। मूर्तत्वमपि सावयवत्वसाधकमितिसूचनाय चकार इति॥ २१॥

युक्त्यन्तरमाह।

**संयोगोपपत्तेश्च**[१] ॥ २२ ॥

सावयवानामेव संयोगोपपत्तेः संयोगवत्त्वात्। तथा च संयोगवत्त्वेन सावयवः स्यादन्यथा संयोगस्य किञ्चिदवच्छिन्नत्वनियमेन परमाणौ संयोगावच्छेदकदौर्लभ्यं स्यादिति भावः। एवं च संयोगवत्त्वेन गगनादेरप्यवयवप्रसक्त्या सर्वशून्यतैवेति॥ २२॥

सिद्धान्तमाह।

**अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः**[२] ॥ २३ ॥

अप्रतिषेधो न सर्वशून्यता। अनवस्थाकारित्वात् प्रत्यक्षसिद्धघटादीनामपलापप्रसङ्गात् भावानामभावोपादानकत्वासम्भवात्। यद्वा अनवस्थाकारित्वाद् घटादीनामर्थक्रियाकारित्वाभावप्रसङ्गादिति। ननु प्रागुक्तयुक्त्यावयवधाराप्रसङ्ग इत्यतो हेत्वन्तरमाह। अनवस्थानुपपत्तेः। अनवस्थानुपपादकत्वात् निरुक्तहेतूनामनवस्थासम्पादकस्य परमाणोः सावयवत्वस्यासाधकत्वादिति यावत्। तथा च परमाणोर्मूर्तत्वमवच्छिन्नपरिमाणवत्त्वम्।

---

(१) संयोगोपपत्तेश्च। सावयवत्वं संयोगित्वादिति सूत्रार्थः। नन्विदं सूत्रं संस्थानवत्त्वादित्यनेनैव चरितार्थमिति वार्त्तिकम्।

(२) इदं न्यायसूचीनिबन्धे वर्त्तते।

CC-0. In Public Domain. Digitized by eGangotri

परिमण्डलाकारश्च निरवयवत्वमेव । एवं परमाणौ संयोगस्य व्याप्यवृत्तितयाऽवच्छेदककल्पकत्वासम्भवात् सम्भवे वा दिग्विशेषाणामेव तत्कल्पनादिति भावः । केचित्तु पूर्वोक्तयुक्त्या परमाणोर्निरवयवत्वप्रतिषेधो न युक्तः कुतः अनवस्थाकारित्वात् । प्रामाणिकीयमनवस्था स्यादत आह । अनवस्थानुपपत्तेश्चेति । सर्वेषामनवस्थितावयवत्वे मेरुसर्षपयोस्तुल्यपरिमाणापत्तिरिति । न च तत्संयोगावच्छेदका दिग्विभागाः । न वा शून्यता युक्ता निष्प्रमाणकत्वात् । निष्प्रमाणकशून्यत्वाभ्युपगमे किमपराद्धं पूर्णतयेत्याहुः ॥ २३ ॥

समाप्तं निरवयवप्रकरणम् ॥

क्षणिकविज्ञानमेवात्मा वास्तवपदार्थः । तच्च ज्ञानं विषयोपरागशून्यं बाह्यार्थस्तत्रारोपितो न सत्यः किं तु मिथ्यैवातोऽवयवशालित्वतद्रहितत्वविचारो विफल इति सौगतमतमपाकर्तुं पूर्वपक्षयति ।

**बुद्ध्या विवेचनात्तु भावानां याथार्थ्यानुपलब्धिस्तन्त्वपकर्षणेन पटसद्भावानुपलब्धिवत्**[1] **॥ २४ ॥**

तुः प्रकरणविच्छेदार्थः । भावानां बुद्ध्या विवेचनादभेदोल्लेखात् । याथार्थ्यस्य भवदुक्तयाथार्थ्यस्य ज्ञानभेदलक्षणस्यानुपलब्धिरनुपपत्तिः । घट इति ज्ञानं जातमिति ह्यनुभूयते तत्र घट इति ज्ञानमित्यनेन घटज्ञानयोरभेद

(१) बाह्यार्थभङ्गनिराकरणमारभते प्रमेयत्वं ज्ञानत्वव्याप्यं न वेति संशयः तत्र पूर्वपक्षसूत्रमिति वृत्तिकृतः । न्यायसूचीनिबन्धे तु बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिरिति पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

उल्लिख्यते ततो न ज्ञानातिरिक्तो विषयः किं तु ज्ञानस्यैवाकारविशेषः। यथा पटे विविच्यमाने तन्तूनामेवापकर्षणादतिरिक्तं न वस्तु एवं तन्तुरपि नांशुव्यतिरिक्त इति। यद्वा बुद्ध्या उपादानभूताया विवेचनात् तत्तद्भावानां पूर्वं परतश्च सत्त्वेन प्रतीतेरन्तरालेऽपि तस्या एव सत्त्वात् तत्तद्भावानां याथार्थ्यानुपलब्धिः सत्यत्वाग्रहः मिथ्यात्वग्रह इति यावत्। यथा तन्तूनामुपादानभूतानां पूर्वापरीभावेनान्तरालेऽपि तेषामेव सत्त्वेन पटस्य सद्भावानुपलब्धिः सत्यत्वाग्रह इति। श्रुतिरपि। वाचारम्भनं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति ॥ २४ ॥

समाधत्ते।

**व्याहतत्वादहेतुः**(१) **॥ २५ ॥**

उक्तदृष्टान्तस्य व्याघातात् निरुक्तो बाह्यार्थभङ्गहेतुर्नेत्यर्थः। तथाहि न हि पटस्य तन्तुता तन्तुतः पटो जायते पटो न तन्तुः पटेन प्रावरणं न तु तन्तुभिरित्यादिप्रतीतेस्तन्तुपटयोर्भेदसिद्धेः। एवं ज्ञानेनापि स्वस्मिन् पटाभेदो नोल्लिख्यते स्वाविषयकत्वात् अनुव्यवसायेन तु पटविषयकत्वं व्यवसाये समुल्लिख्यत इति। यद्वा व्याहतत्वात् प्रमाणाभावेन ज्ञानस्योपादानताव्याघातादुपादानोपादेययोरभेदव्याघाताच्चेत्यर्थः। यथा सत्त्वेन प्रतीत्या तन्तोः सत्त्वं तथा सत्त्वेन प्रतीत्या पटस्यापि सत्त्वमन्यथा व्यवहारविलोपश्च स्यादिति भावः ॥ २५ ॥

ननु तन्तुपटयोर्भेदे पार्थक्येन ग्रहणं स्यादित्यत्राह।

**तदाश्रयत्वादपृथग्ग्रहणम्**(२) **॥ २६ ॥**

(१) इदं न्यायसूचीनिबन्धे वर्तते।

(२) इदमपि तथा।

CC-0. In Public Domain. Digitized by eGangotri

तदाश्रयत्वात् तत्समवेतत्वात् अपृथग्ग्रहणं तन्तुविषयकप्रत्यक्षेण पटाग्रहणमित्यर्थः । पटप्रत्यक्षसामग्र्यास्तन्तुप्रत्यक्षसामग्रीनियतत्वादिति भावः ॥ २६ ॥

ननु ज्ञानस्योभयवादिसिद्धत्वात् तेनैवोपपत्तौ कथमितरपदार्थकल्पनमित्यत आह ।

**प्रमाणतश्चार्थप्रतिपत्तेः**(१) ॥ २७ ॥

अर्थस्य घटादेः प्रतिपत्तेः सिद्धत्वात् । तथा च बाह्यवस्तूनां प्रत्यक्षसिद्धतयापह्नोतुमशक्यत्वादन्यथा ज्ञानमपि न सिध्येदिति भावः । चकाराद्बाधकविरहः समुच्चितः । न च घटादयो ज्ञानस्याकारविशेषा न पृथगिति वाच्यम् । आकारस्य विज्ञानातिरिक्तत्वे सिद्धमेव ज्ञानातिरिक्तं वस्तु विज्ञानस्वरूपत्वे च समूहालम्बने नीलाकारोऽपि पीताकारः स्यात् विज्ञानस्य स्वतोऽविशेषादिति । न चापोहरूपो नीलत्वादिर्विज्ञानधर्म इति वाच्यम् । नीलत्वादीनां विरुद्धानामेकस्मिन् समावेशासम्भवात् अन्यथा विरोधावधारणस्यैव दुरुपपादत्वात् । न च समूहालम्बनमेकं ज्ञानं न जायते किं तु शतपत्रवेधन्यायेन तत्र क्रमिकमेव जायत इति वाच्यम् । ज्ञानानन्त्यकल्पनापत्तेः । ज्ञातो घट इत्यादिप्रतीत्या ज्ञानघटयोर्भेदबोधनात् प्रत्यभिज्ञया घटादेः स्थैर्यसिद्धेश्च । एवं क्षणिकविज्ञानस्यात्मत्वे स्मरणासम्भव उत्तरस्मिन् संस्काराभावादित्युक्तप्रायम् ॥ २७ ॥

बाह्यार्थभङ्गे स्फुटतरव्याघातमाह ।

**प्रमाणानुपपत्त्युपपत्तिभ्याम्**(२) ॥ २८ ॥

(१) प्रमाणतश्चार्थप्रतिपत्तेः । यदस्ति तथा च यच्चास्ति यथा च तत् सर्वं प्रमाणत उपलब्ध्या सिध्यतीति । शेषं भाष्य इति वार्त्तिकम् । इदमपि न्यायसूचीनिबन्धे वर्तते । एतद्वृत्वा व्याख्यानन्तरं सुगमं भाष्यमिति तात्पर्यटीका ।

(२) इदं न्यायसूचीनिबन्धे वर्तते ।

CC-0. In Public Domain. Digitized by eGangotri

प्रमाणानां चक्षुरादीनामुपपत्तौ चक्षुरादय एव बाह्यार्थाः तेषां प्रमाणतया तत्सिद्धत्वात् घटादयोऽपि। यदि चक्षुरादीनामनुपपत्तिरस्वीकारः तदा ज्ञानमपि न सिध्येत् प्रमाणाभावात् तथा च शून्यमेव जगत् स्यात्। न चेष्टापत्तिर्व्यवहारश्चारोपादेवेति वाच्यम्। निरधिष्ठानारोपासम्भवादिति भावः॥ २८॥

ननु विज्ञानं स्वतः सिद्धं प्रमाणप्रमेयव्यवहारश्च न पारमार्थिक इत्याशङ्कते सूत्रद्वयेन।

**स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः**[१] ॥ २९ ॥

**मायागन्धर्वनगरमृगतृष्णिकावद्वा**[२] ॥ ३० ॥

प्रथमसूत्रे प्रकृत्यात्मकमायाया अस्वीकारः परसूत्रे तत्स्वीकार इति विशेषः। यद्वा स्वप्नजाग्रद्दशाभेदेन दृष्टान्तद्वयमाह सूत्रद्वयेनेति॥ २९॥ ३०॥

समाधत्ते।

**हेत्वभावादसिद्धिः**[३] ॥ ३१ ॥

तादृशाभिमानस्य हेत्वभावादसिद्धिः। भ्रमस्य दोषाधीनत्वाद् भवन्मते दोषाप्रसिद्धेः ज्ञानमात्रस्य सद्विषयकत्वाच्च। न चासद्विषयकप्रत्यये मायैव हेतुः तस्या अपि भवन्मते मिथ्यात्वादन्यथा तस्या एव बाह्यार्थस्य प्रस्तु-

(१) ननु प्रमाणप्रमेयव्यवहारो न पारमार्थिकः परं तु विज्ञानानि तत्तदाकारकाणि वासनापरिपाकवशादेव स्वाप्नप्रत्ययवदैन्द्रजालिकप्रतीतिवच्चाविर्भवन्तीत्याशयेन शङ्कते सूत्राभ्यामिति वृत्तिकृतः। इदमपि पूर्ववत्।

(२) पूर्वसूत्रटिप्पणी द्रष्टव्या। इदमपि न्यायसूचीनिबन्धे वर्तते।

(३) तदेतद् दूषयति। हेत्वभावादसिद्धिः। तद्व्याचष्टे भाष्यकार इति तात्पर्यटीका। इदं न्यायसूचीनिबन्धे वर्तते।

CC-0. In Public Domain. Digitized by eGangotri

तत्वात् । एवमेकस्या एव मायाया आरोपहेतुत्वे कार्यवैचित्र्यानुपपत्तिः तन्नियामकानामवयवविशेषाणां निमित्तहेतूनां दृष्टादृष्टानां च कल्पने मायास्वीकारस्यान्याय्यत्वादिति ॥ ३१ ॥

ननु हेत्वभावात् स्वप्नविषयाभिमानोऽपि न सिध्येदित्यत आह ।

**स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः पूर्वोपलब्धविषयः**(१) ॥ ३२ ॥

स्मृतौ सङ्कल्पे च यथा पूर्वोपलब्धिर्हेतुस्तथा स्वप्नप्रत्ययेऽपि स्वप्नप्रत्ययस्योपनीतभानरूपत्वादिति भावः । न च स्वप्ने स्वमपि खादति निजशिरःखण्डनमपि पश्यति न त्विदं पूर्वोपलब्धमिति वाच्यम् । स्वस्य खादनस्य निजशिरसः खण्डनस्य च खण्डशः पूर्वोपलब्धत्वात् । स्वप्नेऽपि प्रत्येकस्मृत्या दोषवशात् भ्रमरूपविशिष्टप्रत्ययजननात् । अथात्र को दोष इति चेत् तादृशस्मृत्युपधायकोद्बोधकादृष्टविशेषादेव दोषत्वात् । एवं मृगतृष्णादावपि दोषविशेष एव नियामक इति । एवं च न कोऽपि भ्रमोऽसद्विषयक इति दृष्टान्तासिद्धिरिति भावः ॥ ३२ ॥

ननु भ्रमस्य सतो वैशिष्ट्यावगाहित्वे कथं तत्प्रतिरोध इत्यत आह ।

**मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानविनाशवत् प्रतिबोधे**(२) ॥ ३३ ॥

---

(१) इदं न्यायसूचीनिबन्धे वर्तते । तत्र च पूर्वोपलब्धविषय इति नास्ति ।

(२) इदमपि तथा । तत्र च प्रणाशवत् प्रतिबोध इति पाठः ।



CC-0. In Public Domain. Digitized by eGangotri

मिथ्योपलब्धेर्मायागन्धर्वनगरादिज्ञानस्य। विनाशः प्रतिरोधः। तत्त्वज्ञानात् वास्तविकार्थसंसर्गज्ञानात्। प्रतिबोधे जाग्रद्दशायां स्वप्नविषयाभिमानप्रतिरोधवदित्यर्थः। तथा च स्वप्ने यथानुभवो जायते तथानुभवो जाग्रद्दशायां दोषरूपकारणविरहान्न भवति। तथा प्रतिबन्धकयथार्थज्ञानसत्त्वान्न भ्रमात्मकविशिष्टज्ञानं प्रतिबन्धकाभावस्यापि कारणत्वादिति भावः ॥ ३३ ॥

ननु कुतो यथार्थज्ञानमित्यत आह।

**बुद्धेश्चैवं निमित्तसद्भावोपलम्भात्**[1] ॥ ३४ ॥

एवं याथार्थ्यम्। निमित्तीभूतात् सतो भावस्योपलम्भात् सम्बन्धादित्यर्थः। तथा विशेष्यविशेषणसम्बन्धाधीनं ज्ञानं यथार्थमिति भावः। यद्वा बाह्यार्थस्येव ज्ञानस्याप्यसत्त्वं केचिद्वदन्ति तन्मतं निरस्यति। बुद्धेश्चैवमिति। एवं बाह्यार्थस्येव बुद्धेरपि सत्त्वं निमित्तसद्भावोपलम्भात् सहेतुकत्वेन प्रमितत्वात्। न ह्यलीकं सहेतुकमहेतुकत्वे च कादाचित्कत्ववैचित्र्ये न स्यातामिति भावः। केचित्तु भ्रमस्य सद्विषयत्वे प्रमात्वं स्यादित्यत आह। बुद्धेरिति। एवं प्रमात्वम्। निमित्तस्य प्रकारस्य सद्भावः सत्त्वं यत्र। तथा च शुक्तिरजतयोः सत्यत्वे ऽपि शुक्तौ रजततादात्म्याभावान्न तद्बुद्धेः प्रमात्वमिति भाव इत्याहुः। अत्र चोपलम्भपदमनतिप्रयोजनकं बोध्यमिति ॥ ३४ ॥

ननु मायागन्धर्वनगरादिभ्रमे ऽसन्मात्रविषयकत्वं मृगतृष्णादौ सति तेजसि सतो जलस्यावगाहनात् सद्विषयकत्वमिति भ्रमस्य द्वैविध्यं तत्राद्यदृष्टान्तेन प्रपञ्चग्रह-

(१) इदमपि न्यायसूचीनिबन्धे वर्तते।

स्यात्सन्मात्रविषयकत्वं साध्यम् । यदि च भ्रममात्रस्य सद्विषयकत्वं तदा कथं भ्रमस्य द्वैविध्यमित्यत आह ।

तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः[(१)] ॥ ३५ ॥

तत्त्वं भ्रमधर्मिगतविषयबाधादिरूपो धर्मः प्रधानं माया अविद्याविशेष इति यावत् । तयोर्भेदेनेत्यर्थः । यद्यपि ऐन्द्रजालिकाविद्यारूपदोषाधीनभ्रमोऽपि विषयबाधाधीनस्तथापि मायातदतिरिक्तदोषभेदेन भ्रमस्य द्वैविध्यव्यवहार इति भावः । यद्वा भ्रमस्य सद्विषयकत्वे प्रमात्वमपि स्वीकार्यं तत् कथमुपपद्यते प्रमात्वभ्रमत्वयोर्विरोधादित्यत आह । तत्त्वेति । तत्त्वं प्रकारीभूतो धर्मः प्रधानं विशेष्यीभूतो धर्मी तेषां भेदात् । द्वैविध्योपपत्तिः एकस्मिन् भ्रमत्वप्रमात्वयोरुपपत्तिः । तथा च विषयभेदान्न विरोध इति भावः । केचित्तु सर्वत्र विशिष्टबुद्धौ विशेष्ये विशेषणसम्बन्धो हेतुर्लाघवात् न तु प्रमामात्रे वैशिष्ट्यबुद्धित्वमपेक्ष्य प्रमात्वस्य गुरुत्वादिति । रज्जुसर्पादिस्थले रज्जूपादानकः सर्पो जन्यत इति कल्प्यते तत्सम्बन्धमादायैव भूतलमिदं सर्पवदिति प्रत्ययो जायते अयं सर्प इत्यभेदप्रत्ययश्च जायते। न चानन्तसर्पकल्पने गौरवं फलमुखगौरवस्यादोषत्वात् । एवं चाद्यन्तवत्त्वेन रज्जुसर्पादिवत् प्रपञ्चस्यापि मिथ्यात्वं मन्यत इत्यसद्विषयकत्वं भ्रमत्वं सन्मात्रविषयकत्वं प्रमात्वमिति वदन्ति । तन्न । भ्रमविशिष्टबुद्धेः क्लृप्तेनैवोपपत्तौ मिथ्यानन्तसर्पादिकल्पनायां मानाभावात् । न च तादृशकार्यकारणभाव एव मानं भ्रमस्थले व्यभिचारात् तादृश-

(१) इदमपि तथा ।

CC-0. In Public Domain. Digitized by eGangotri

कार्यकारणभावस्यैवासिद्धेः। तत्रार्थक्रियाकारित्वाभावेन सर्पादिबाधस्यावधारणात् यत्र च व्यभिचारः सन्दिग्ध-स्तत्रैव लाघवस्य कार्यकारणभावनियामकत्वात् फलमुख-गौरवस्यादोषत्वमपि तत्रैवेति। न च भ्रमस्य विशिष्टबुद्धित्वे किं मानमिति चेत् प्रवृत्तिजनकत्वस्यैव तत्र मानत्वात् लाघवेन तद्विशेष्यकतत्प्रकारकप्रवृत्तौ तादृशज्ञानत्वेनैव हेतुत्वात्। भ्रमस्य धर्मधर्मिविषयकत्वमात्रस्वीकारे समूहालम्बनादवैलक्षण्यापत्तेश्च तद्वैलक्षण्याय प्रकारान्तरकल्पने गौरवादिति दिक्॥ ३५॥

समाप्तं बाह्यार्थभङ्गनिराकरणप्रकरणम्॥

ननु शास्त्रात् तत्त्वज्ञानेऽपि मिथ्याज्ञानदर्शनात् तादृशतत्त्वज्ञानं न मिथ्याज्ञाननिवर्तनक्षममिति चेत् तादृशतत्त्वज्ञानस्य परम्परयोपयोगित्वमित्यभिप्रायेणाह।

## समाधिविशेषाभ्यासात्(१)॥ ३६॥

मिथ्याज्ञाननिवर्तनक्षमतत्त्वज्ञानोत्पत्तिरिति शेषः। स्वात्मनि सम्यक् चित्ताधानं समाधिः। सम्यक्पदं विषयान्तरव्यावर्तनाय। विशेषपदं च देहादिभिन्नत्वप्रकारकत्वलाभाय। अभ्यासः तद्वारा। श्रुतिरप्याह। आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति। निदिध्यासनपदेन समाधिरेवोच्यते सन्प्रत्ययार्थस्याविवक्षितत्वात्। अग्निहोत्रं जुहोति यवागूं पचतीत्यत्रेवार्थक्रमेण श्रवणाद्यनन्तरं दर्शनं बोध्यम्। श्रवणादित्रयाणां पाठक्रमो ज्ञेय इति॥ ३६॥

(१) अस्योत्तरं सूत्रम्। समाधितत्त्वाभ्यासादिति तात्पर्यटीका। तत्र चायमेव पाठः। न्यायसूचीनिबन्धे तु समाधिविशेषाभ्यासादिति पाठः।

ननु विषयान्तरसञ्चारतद्धेतुरागादिनैयत्यात् कथं समाधिसिद्धिरित्याशङ्कते सूत्राभ्याम् ।

**नार्थविशेषप्राबल्यात्**(१) ॥ ३७ ॥

**क्षुधादिभिः प्रवर्तनाच्च**(२) ॥ ३८ ॥

अर्थविशेषस्य स्त्रीपुत्रादेः प्राबल्यादुत्कटरागसन्तानात् । तथा च स्वकारणाधीनतदनुसन्धानमेव समाधिविरोधि । एवं क्षुत्तृष्णादिप्रवर्तितभोजनाद्यनुसन्धानमपीति भावः ॥ ३७ ॥ ३८ ॥

शङ्कां निरस्यति ।

**पूर्वकृतफलानुबन्धात् तदुत्पत्तिः**(३) ॥ ३९ ॥

पूर्वकृतस्य निष्कामकर्मणः श्रवणादेश्च फलमदृष्टविशेषस्तदनुबन्धात् तत्सहकृतश्रवणादितस्तदुत्पत्तिः समाध्युत्पत्तिरित्यर्थः । आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत इतिभगवद्वचनात् । अनेकजन्मसंसिद्धस्ततो याति परां गतिमितितदुक्तेश्च ॥ ३९ ॥

पुत्रादिस्नेहाद्यनुबन्धनिरासाय योगाभ्यासस्थानमाह ।

**अरण्यगुहापुलिनादिषु योगाभ्यासोपयोगः**(४) ॥ ४० ॥

---

(१) एतदाक्षेपसूत्रमवतारयति । यदुक्तं सति हि तस्मिन्निति । इन्द्रियविषयैरपहृतमनसो न धारणा । तथा च तदभ्यासाभावान्न तत्त्वसाक्षात्कार इति सूत्रार्थ इति तात्पर्यटीका । आक्षिपति सूत्राभ्यामिति वृत्तिकृतः ।

(२) पूर्वसूत्रटिप्पणी द्रष्टव्या । न्यायसूचीनिबन्धेऽपीदं वर्तते । तत्र क्षुदादिभिरिति पाठः ।

(३) सूत्रम् । पूर्वकृतफलानुबन्धात् तदुत्पत्तिः । पूर्वकृतः समाधिः तस्य फलं संस्कारः तस्यानुबन्धः स्थेमा तस्मादिति सूत्रार्थ इति तात्पर्यटीका ।

(४) योगाभ्यासोपदेश इति न्यायसूचीनिबन्धे पाठः । इदं न सूत्रं भाष्यमिति केचिदिति वृत्तिकृतः ।

CC-0. In Public Domain. Digitized by eGangotri

आदिना पवित्रनिर्जनस्थानपरिग्रहः। तत्र स्थिरचित्तता स्यादिति भावः। इदं भाष्यमिति केचित् ॥ ४० ॥

तटस्थः शङ्कते।

**अपवर्गेऽप्येवं प्रसङ्गः[1] ॥ ४१ ॥**

एवं प्रसङ्गोऽर्थविशेषप्राबल्याद् विषयभासप्रसङ्गः ॥ ४१ ॥

समाधत्ते।

**न निष्पन्नावश्यम्भावित्वात्[2] ॥ ४२ ॥**

मोक्षदशायां न विषयरागादिः निष्पन्नस्य शरीरस्य रागादौ हेतुत्वेनावश्यम्भावित्वादवश्यमपेक्षणीयत्वात्। तथा च तदानीं शरीरविरहेण न रागादिरिति भावः ॥ ४२ ॥

एतदेव स्पष्टयति।

**तदभावश्चापवर्गे[3] ॥ ४३ ॥**

तदभावः शरीरविरहः। ननु तदानीं कथं शरीरविरह इत्यतः समुच्चयार्थकश्चकारः। तेन शरीरपरिग्रहबीजादृष्टविरहलाभः। श्रुतिश्च। अशरीरं वावसन्तं प्रियाप्रिये न स्पृशत इति। वावेति सम्बोधनं वावसन्तमिति यङ्लुगन्तं वा। प्रियाप्रिये सुखदुःखे ॥ ४३ ॥

योगाङ्गान्याह।

**तदर्थं यमनियमाभ्यासात्मसंस्कारोपयोगाच्चाध्यात्मविध्युपायैः[4] ॥ ४४ ॥**

(१) इदं न्यायसूचीनिबन्धे वर्तते।

(२) सति शरीरे बाह्यविशेषयोर्ज्ञानोत्पत्तिकारणत्वं नान्यथेति सूत्रार्थ इति। वार्त्तिकम्। सिद्धान्तसूत्रम्। न निष्पन्नेत्यादि तात्पर्यटीका।

(३) इदं न्यायसूचीनिबन्धे वर्तते।

(४) न्यायसूचीनिबन्धे तु यमनियमाभ्यामात्मसंस्कारो योगाच्चेति पाठः।

CC-0. In Public Domain. Digitized by eGangotri

तदर्थमपवर्गार्थम् । यमानाह पातञ्जलसूत्रम् । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा[1] इति । तत्र वाङ्मनःकायैः परपीडावर्जनमहिंसा । सत्यं यथार्थभाषणम् । अस्तेयमदत्तादानरूपपरस्वहरणराहित्यम् । ब्रह्मचर्यमष्टाङ्गमैथुनवर्जनम् । तथा चोक्तम् ।

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यं तदेवाष्टाङ्गलक्षणम् ॥ इति ।

अपरिग्रहः शरीरधारणाद्यनुपयुक्तार्थासङ्ग्रहः । नियमानाह तत्रैव । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा[2] इति । तत्र शौचं बाह्यमाभ्यन्तरीयं चेति द्विविधम् । तदुक्तम् ।

शौचं तद् द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं शौचं भावशुद्धिस्तथान्तरम् ॥

सन्तोषो यदृच्छालाभसन्तोषोऽलाभे चाविषादः । तपः कामानशनम् । तपो नानशनात् परमितिस्मृतेः । अनशनं कामानशनम् । तपःपदेनात्र न चान्द्रायणादिपरिग्रहः तेषां समाधिविरोधित्वात् । स्वाध्यायो मन्त्रजपोपनिषद्ग्रन्थपाठः । ओमित्येव ध्येयं यथात्मानमुपनिषदमावर्तयेदितिश्रुतेः । ओमिति ब्रह्मपरमन्त्रोपलक्षणम् । ईश्वरप्रणिधानं परमेश्वरमानसोपचारपूजनश्रवणमननादिरूपम् । ईश्वरमुपासीतेतिश्रुतेः तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके-

(१) योगसूत्रम् २ पादे ३० सूत्रम् ।
(२) योगसूत्रम् २ पादे ३२ सूत्रम् ।

CC-0. In Public Domain. Digitized by eGangotri

नेत्यादिश्रुतेश्च। अनुवचनमनुमानम्। तेन वेदानुमानाभ्यामित्यर्थः। ध्यानधारणे अपि ईश्वरप्रणिधानान्तर्गते। तत्र धारणामाह पातञ्जलसूत्रम्। देशबन्धश्चित्तस्य धारणेति[१]। देशे हृदयाकाशादौ चित्तस्य बन्धो विषयान्तरपरित्यागेन प्रत्यवस्थानम्। ध्यानं च परमेश्वरपरमाविष्टचित्तता। ध्यानमेवातितरामीश्वरनिष्ठं समाधिः। एवं च श्रवणमनननिदिध्यासनानि जीवात्मपरमात्मनोर्द्वयोरेव विधेयानि। यद्वा धारणा प्रत्येकावयवध्यानं ध्यानं च युगपत् सर्वावयवध्यानमिति। अथवा अभ्यासः समाधिरुच्यते। चकारादासनप्राणायामप्रत्याहारा बोध्याः। तत्रासनं पद्मस्वस्तिकादि। प्राणायाम उक्तो योगशास्त्रे। तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेद[२] इति। तस्मिन् आसनस्थैर्ये। श्वासप्रश्वासपदेन प्राणवायोर्निर्गमप्रवेशरूपगतिविशेषौ बहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानं प्रत्याहारः। एवं च यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति सिद्धम्। एतैर्य आत्मसंस्कार आत्मशुद्धिस्तदुपयोगात्। आत्मविद्युपायैरिति तत्त्वं जानीयादिति शेषः। उपयोगादित्यत्र पञ्चम्यर्थः प्रयोज्यत्वम्। जानीयादित्यत्र ज्ञाने ऽन्वयः। यमादीनामात्मसंस्कारकत्वमाह योगशास्त्रे। योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेरिति[३]। अथवा यमादीनामात्मसंस्काराणां शमादीनामुपयोगात् सहकारादित्यर्थः। शमादयश्च शमदमोपरतितितिक्षासमाधानश्रद्धाः। तत्र शमो मनोनिग्रहः। दमो बाह्येन्द्रियनिग्रहः। एतेन कामादयो निरस्ताः। उपरतिः काम्यकर्म-

(१) योगसूत्रम् ३ पादे १ सूत्रम्।
(२) योगसूत्रम् २ पादे ४९ सूत्रम्।
(३) योगसूत्रम् २ पादे २८ सूत्रम्।

CC-0. In Public Domain. Digitized by eGangotri

त्याग ऐहिकामुष्मिकफलवैतृष्ण्यं च । तितिक्षा शीतोष्णादिसहिष्णुता । समाधानं निगृहीतस्य मनसः श्रवणादौ प्रवृत्तिः । श्रद्धा शास्त्रेषु गुरुवाक्ये च विश्वासः । तथा च श्रुतिः । शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदिति । आत्मनि हृदयादौ । आत्मविध्युपायैरित्यनेनात्मानात्मविवेकात्मश्रवणादिपरिग्रहः ॥ ४४ ॥

योगाङ्गेषु शास्त्रस्योपयोगमाह ।

**ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः**[1] ॥ ४५ ॥

ज्ञायते ऽनेनेति ज्ञानं शास्त्रं तद्ग्रहणं तदध्ययनम् । अभ्यासस्तदधीनदृढतरसंस्कारः । तद्विद्यैस्तत्त्वशास्त्रज्ञैः सह संवादः । स्वानुभवदार्ढ्याय कार्य इति शेषः । अयं च योगाङ्गानुगुणः ॥ ४५ ॥

संवादप्रकारमाह ।

**तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेयात्**[2] ॥ ४६ ॥

तं तत्त्वज्ञम् । सब्रह्मचारी सतीर्थः । विशिष्टः प्रकृष्टज्ञानवान् । श्रेयोऽर्थी मुमुक्षुः । विजिगीषुताव्यावृत्त्यर्थमनसूयुभिरिति ॥ ४६ ॥

प्रकारान्तरमाह ।

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे**[3] ॥ ४७ ॥

---

(१) इदमपि न्यायसूचीनिबन्धे वर्तते ।

(२) इदमपि तथा । क्वचिदनसूयिभिरिति पाठः ।

(३) तत्रेदं सूत्रमुपतिष्ठते । प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्व इति तात्पर्यटीका ।

CC-0. In Public Domain. Digitized by eGangotri

वाशब्दो निश्चयार्थः। अर्थित्वे तत्त्वबुभुत्सायां मुमुक्षायां वा सत्यां प्रयोजनार्थं तत्त्वनिर्णयार्थं प्रतिपक्षहीनं प्रतिकूलपक्षहीनं तथाऽभ्युपेयादित्यन्वयः। तथा च भाष्यम्। स्वपक्षसमवस्थापनाय स्वदर्शनं परिशोधयेदिति। तत्त्वनिर्णीषुतया न पक्षपात इति भावः॥ ४७॥

समाप्तं तत्त्वज्ञानविवृद्धिप्रकरणम्॥

ननु वादेनैव तद्विद्यैः सह संवाद इत्युक्तं तदा जल्पवितण्डयोः क उपयोग इत्यत आह।

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्**[१] ॥ ४८॥

तत्त्वाध्यवसायस्य तत्त्वनिर्णयस्य संरक्षणं परोक्तदूषणाहिताप्रामाण्यशङ्कानिरसनं तदर्थं जल्पवितण्डे पूर्वमुक्ते इत्यर्थः। तद्विद्यानां विरुद्धकोट्यनुपस्थापनात् तैः सहसंवादे वीतरागाणां मुमुक्षूणां जल्पवितण्डयोः कदाचिदुपयोगितामात्रं न तु तयोरावश्यकतेति भावः॥ ४८॥

विवादस्थल एव तयोरावश्यकतेत्याह।

**ताभ्यां विगृह्य कथनम्**[२] ॥ ४९॥

विगृह्य विग्रहं कृत्वा। ताभ्यां कथनं न्यायादिप्रयोग इत्यर्थः। तथा च त्रयीबाह्यैरेव विवादे जल्पवितण्डादरः। मुमुक्षूणां तु तादृशैर्न संवादः समुचित इति भावः॥ ४९॥

(१) तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति सूत्रमिति तात्पर्यटीका।

(२) ताभ्यां विगृह्य कथनमिति सूत्रमिति तात्पर्यटीका।

CC-0. In Public Domain. Digitized by eGangotri

ननु वेदज्ञा अपि नानाविधतत्त्वमाचक्षते तत्र किं समीचीनमित्यत आह ।

**तत्त्वं तु वादरायणात्** [1] ॥ ५० ॥

तुरवधारणे । वादरायणात् वादरायणाख्यव्यासप्रणीतशास्त्रादेव तत्त्वमवधार्यमित्यर्थः । अयमभिप्रायः । प्रत्यक्षस्य सदोषेन्द्रियजन्यत्वसम्भवेनाप्रामाण्यशङ्कासम्भवात् तथानुमानस्य दुष्टहेतुजन्यत्वशङ्कयाऽप्रामाण्यशङ्केति उपमानस्य शक्तिमात्रग्राहकतया च नादरातिशयः । यथार्थदर्शी भगवानेव वेदं प्रणीतवानिति वेदस्यैव प्रधानप्रामाणतया तेन स्वमुखत एवोक्तानां तत्त्वानां व्यासेन युक्तिभिर्दृढीकृततया तदुक्तानि तत्त्वान्यादरणीयानि । अस्माभिस्तु वेदविमुखे विवादनिरसनाय वेदाभिहितमन्यथापि व्याख्याय प्रत्यक्षानुमाने पुरस्कृत्य तत्त्वान्यभिहितानीति नात्रादरणमिति सूचितमिति । यद्वा तुः प्रधानार्थः । तेन प्रधानतत्त्वं परमेश्वरः व्यासप्रणीतशास्त्रादवसेयः । तेन तदवतारादिबाहुल्यं प्रणीतमिति भावः । अथवा तुः समुच्चयार्थः । तत्त्वं निरुक्तात्मतत्त्वं वादरायणात् वादरायणोक्तपरमेश्वरोपासनादितः साक्षात् कर्तव्यम् । तेन तदवतारतद्भजनतदङ्गनियमादीनां विशेषतः प्रणयनात् । अस्माभिस्तु बहिर्मुखनिरासाय पदार्थतत्त्वानि केवलं निरूपितानीति ॥ ५० ॥

समाप्तं तत्त्वज्ञानपरिपालनप्रकरणम् ॥

इति चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥

इति न्यायसूत्रे चतुर्थोऽध्यायः ॥

इति श्रीराधामोहनगोस्वामिभट्टाचार्यविरचिते न्यायसूत्रविवरणे चतुर्थाध्यायविवरणं समाप्तम् ॥

---

(१) इदं तु न्यायसूचीनिबन्धन्यायसूत्रोद्धारभाष्यवार्त्तिकतात्पर्यटीकाविश्वनाथवृत्तिप्रभृतिषु न दृश्यत इति न ज्ञायते कुतस्त्यमिदं सूत्रमिति ।

CC-0. In Public Domain. Digitized by eGangotri

# न्यायसूत्रविवरणे

## पञ्चमोऽध्यायः ।

अथावसरतः कर्तव्येषु जातिनिग्रहस्थानविभागतद्विशेषलक्षणतत्परीक्षणेषु प्रथमतः क्रमप्राप्तं जातिविभागमाह ।

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः**[1] ॥ १ ॥

अत्र च साधर्म्यादीनां कार्यान्तानां द्वन्द्वे तैः समा इत्यर्थात् साधर्म्यसमादयश्चतुर्विंशतिर्जातय इत्यर्थः । अत्र जातेर्विशेष्यत्वात् समाशब्दः स्त्रीलिङ्ग इति । अग्रिमसूत्रेषु समशब्दः पुंलिङ्ग इति तत्र प्रतिषेधो विशेष्य इति भाष्यादयः । केचित्तु तद्विकल्पादितिसूत्रस्थविकल्पस्यैव विशेष्यत्वम् । तथा चैते साधर्म्यसमादयो जातिविकल्पा जातिभेदा इत्यर्थः । एवमग्रिमसूत्रेष्वपीत्याहुः । समीकरणार्थं प्रयोगः सम इति वार्त्तिकम् । यद्यपि नैतावता समीकरणं तथापि समीकरणोद्देश्यकत्वमस्त्येव ॥ १ ॥

---

(१) जातेः संक्षेपेणोक्ताया विस्तरो वक्तव्य इतीदमारभ्यते साधर्म्यादिसूत्रमिति वार्त्तिकम् । प्रागुक्तजातिसामान्यलक्षणानन्तरं कियत्यस्ता असङ्कीर्णाः पाधिमत्य इतिजिज्ञासायां विशेषलक्षणावतारानुकूलजिज्ञासाप्रयोजकं विभागोद्देशसूत्रक्रम् साधर्म्यवैधर्म्येत्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

CC-0. In Public Domain. Digitized by eGangotri

साधर्म्यवैधर्म्यसमौ लक्षयति ।

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ(१) ॥ २ ॥**

साधर्म्यं साध्यत्वाभिमताधिकरणवृत्तिर्धर्मः वैधर्म्यं साध्यत्वाभिमतानधिकरणावृत्तिर्धर्मस्ताभ्यामन्वयिदृष्टान्तघटिते व्यतिरेकिदृष्टान्तघटिते वा उपसंहारे वादिना स्वसाध्यसाधनाय न्यायप्रयोगे कृते प्रतिवादिना तद्धर्माभ्यां व्याप्त्यनपेक्षसाधर्म्यवैधर्म्याभ्यां तद्विपरीतसाध्याधिकरणवृत्तितदनधिकरणावृत्तिधर्माभ्यामिति यावत्। विपर्ययस्य तद्विपरीतसाध्यस्योपपत्तिरापादनम्। तस्मात् साधर्म्यं समं यत्र जातौ सा साधर्म्यसमा साधर्म्यं समं यत्र प्रयोगे स साधर्म्यसम इति वा । एवं वैधर्म्यसमादौ व्युत्पत्तिर्बोध्या । यथा शब्दोऽनित्यः कृतकत्वाद् घटवद् व्यतिरेकिना व्योमवदित्युपसंहृते नैतदेवं यद्यनित्यघटसाधर्म्यात् नित्यव्योमवैधर्म्याद् वा कृतकत्वात् शब्दोऽनित्यः स्यात् तदा नित्याकाशसाधर्म्यादनित्यघटवैधर्म्याद्वा अमूर्तत्वात् नित्यः स्यात् शब्दः कोऽत्र विशेष इति । अत्र साधर्म्यवैधर्म्यावेव गमकतया वादिनोपन्यस्तावित्यभिमानेन प्रयोगः। सत्प्रतिपक्षदेशनाभासे चेमे। अनैकान्तिकदेशनाभासेति वार्त्तिकेऽनैकान्तिकपदं सत्प्रतिपक्षपरम्। एकान्ततः साध्यसाधकत्वविरहव्युत्पत्तेः ॥ २ ॥

---

(१) तत्र सर्वत्र प्रत्यवस्थानप्रकारेषु साधर्म्यवैधर्म्योपस्थितेवाकयकत्वात्? (आवश्यकत्वात्) तद्विशेषज्ञाने च तत्सामान्यज्ञानस्योपजीव्यत्वात् तत्रापि तद्व्यतिरेकगर्भत्वात् वैधर्म्यस्य पश्चाद्भावे तयोर्लक्षणाय सूत्रम् । साधर्म्यवैधर्म्याभ्यामित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

CC-0. In Public Domain. Digitized by eGangotri

अनयोरसदुत्तरत्वमाह ।

**गोत्वाद् गोसिद्धिवत् तत्सिद्धिः**[१] ॥ ३ ॥

लाघवेन गोत्वस्यैव गोपदशक्यतावच्छेदकतया गोत्वहेतुना यथा गोसिद्धिः गोपदव्यवहारविषयतासिद्धिर्गोत्वस्य गोपदव्यवहारविषयताव्याप्तिमत्त्वेनाधिकबलत्वात् तथा तत्सिद्धिः शब्दे कृतकत्वेनानित्यत्वव्याप्येनानित्यत्वसिद्धिः। न त्वमूर्तत्वेनाव्याप्येन नित्यत्वसिद्धिः व्याप्तिपक्षधर्मताशालिहेतोरेव साधकत्वादन्यथा प्रमेयत्वादिना ह्रदादावपि वह्निः सिध्येदिति भावः। केचित्तु गोत्वाद् गोत्वव्यञ्जकात् सास्नादितः गोसिद्धिः तादात्म्येन गोः सिद्धिर्यथा तथा तत्सिद्धिरित्यन्यत् पूर्ववदित्याहुः ॥ ३ ॥

सत्प्रतिपक्षदेशनाभासप्रकरणम् ॥

क्रमप्राप्तं जातिषट्कं लाघवेनैकसूत्रेण निरूपयति ।

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः**[२] ॥ ४ ॥

साध्यदृष्टान्तयोरित्यत्र साध्यपदमनुमितिविषयपरम्। तेन साध्यपक्षयोर्लाभः। तथा चानुमितिविषयस्य दृष्टान्तस्य वा यो धर्मस्तद्विकल्पात् तदापादनेन साध्यानुमितिविरोधात्। उभयसाध्यत्वाच्च साध्यदृष्टान्तान्यतरवृत्तिधर्म-

(१) युक्ताङ्गहीनत्वप्रदर्शनार्थमनयोः प्रत्युत्तरं सूत्रम्। गोत्वाद् गोसिद्धिवत् तत्सिद्धिरित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

(२) अथ वैचित्र्यात्मकविकल्पानां साधर्म्यादिनिरूप्यत्वात् साध्यदृष्टान्तधर्मविकल्पजातिप्रभवजातिषट्कप्रकरणम्। तल्लक्षणाय सूत्रम्। साध्यदृष्टान्तयोर्धर्मविकल्पादित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

CC-0. In Public Domain. Digitized by eGangotri

साध्यत्वाच्च उत्कर्षसमादयः षडित्यर्थः । तत्राविद्यमान-धर्मारोप उत्कर्षस्तेन सम उत्कर्षसमः । एवमुत्तरत्रापि । विद्यमानधर्मापचयोऽपकर्षः । वर्ण्यावर्ण्यसाध्येति भावप्रधानो निर्देशः । वर्ण्यत्वं सन्दिग्धसाध्यकत्वमवर्ण्यत्वं तदभावः विकल्पो व्यभिचारः साध्यत्वमनुमितिविधेयत्वम् । तत्रोत्कर्षसमलक्षणम् । व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन् साध्यसाधनान्यतरेण पक्षदृष्टान्तान्यतराविद्यमानधर्मस्य भावरूपस्य प्रसञ्जनमित्यर्थः । विद्यमानस्य प्रसञ्जनाभावादविद्यमानत्वलाभः । यथा शब्दोऽनित्यः कृतकत्वादितिवादिप्रयोगे घटे रूपसहचरितमनित्यत्वं कृतकत्वं शब्दवृत्ति स्यात् शब्दोऽपि रूपवान् स्यात् । एवं शब्दे श्रावणत्वसहचरितकृतकत्वं घटेऽपि स्यात् घटः श्रावणः स्यादविशेषात् । न चैवमर्थान्तरमिति वाच्यम् । विपर्यये साधनपक्षदृष्टान्तवैकल्यगमकत्वात् । असिद्धिदेशनाभासेयम् । क्वचित् साध्यस्य पक्षवैकल्यगमकतया बाधदेशनाभासा । क्वचिच्च साध्यस्य दृष्टान्तवैकल्यगमकतया विरुद्धदेशनाभासेति । साधर्म्यसमायां साध्यसाधनातिरिक्तेन साध्यविपर्ययसाधनमतो नाविशेष इति । पक्षदृष्टान्तान्यतरस्मिन्नन्यतरधर्मस्याभावरूपस्य साध्यसाधनान्यतरेणापादनमपकर्षसमा । यथा घटः शब्दे नोरूपत्वसहचरितकृतकत्ववान् नीरूपः स्यादिति । इयमपि दृष्टान्तवैकल्यादिदेशनाभासेति । पक्षवृत्तिहेतुना दृष्टान्ते सन्दिग्धसाध्यकत्वादिरूपपक्षत्वापादनं वर्ण्यसमा । यथा शब्दोऽनित्यः कृतकत्वादित्यादिप्रयोगे पक्षे पक्षतासहचरितकृतकत्वादिकं यदि घटादौ स्वीक्रियते तदा घटादिकमपि सन्दिग्धसाध्यः स्यादिति । सर्वत्रैव हेतुमति साध्यसंशयादनुपसंहारिहेतुदेशनाभासेयं भवति । यदि दृष्टान्ते हेतुर्न स्वीक्रियते साधनविकलो

दृष्टान्तः स्यादिति भावः। दृष्टान्तहेतुना पक्षे ऽसन्दिग्धसा-
ध्यकत्वादि रूपपक्षत्वाभावापादनमवर्ण्यसमा। दृष्टान्ते
घटादौ कृतकत्वादिहेतुरनित्यत्वादिरूपसाध्यसन्देहविशे-
ष्यत्वाभावसहचरितः तादृशहेतुरेव पक्षे शब्दे स्वीकार्यो-
ऽन्यथा तस्य गमकत्वाभावात् पक्षे गमकहेत्वभावात् स्व-
रूपासिद्धिः स्यादिति पक्षे तादृशहेतुः स्वीकार्य इति शब्दादौ
पक्षे सन्दिग्धसाधकत्वादिरूपपक्षत्वाभावादाश्रयासिद्धि-
रित्यसिद्धिदेशनाभासेयम्। दृष्टान्ते हेतुर्यादृशस्तादृशहेतुः
पक्षे चेत् तदा गमक इत्यभिमानेनेदम्। व्यभिचारितास-
म्बन्धेन पक्षदृष्टान्तवृत्तिधर्मेण हेतौ साध्यव्यभिचारापादनं
विकल्पसमा। यथा शब्दोऽनित्यः कृतकत्वादित्यादौ कृत-
कत्वे हेतौ गुरुत्वस्य दृष्टान्तधर्मस्य व्यभिचारितासम्बन्धेन
सत्त्वात् कृतकत्वमनित्यत्वस्यापि व्यभिचारि स्यात् गुरु-
त्वस्यानित्यत्वस्य च दृष्टान्तवृत्तित्वाविशेषादित्यनैकान्ति-
कदेशनाभासेयम्। पक्षवृत्तिनानुमितिविषयत्वरूपधर्मेण
पक्षतावच्छेदकादौ साध्यतुल्यतापादनं साध्यसमा। यथा
शब्दत्वस्यानित्यत्वानुमितिविषयत्वेऽनित्यत्ववत् शब्दत्व-
मपि प्राक् शब्दे ऽनिश्चितं स्यात् प्रागसिद्धस्यैवानुमितिवि-
षयत्वादिति पक्षतावच्छेदकविशिष्टपक्षस्याप्रसिद्ध्या आ-
श्रयासिद्धिरित्यसिद्धिदेशनाभासेयमपीति। केचित्तु सा-
ध्यदृष्टान्तयोर्धर्मविकल्पादित्यस्य पक्षे दृष्टान्ते चान्यतरस्मिन्
धर्मविकल्पो धर्मस्य वैचित्र्यं तच्च क्वचित् सत्त्वं क्वचिदसत्त्वम्।
साध्यते ऽत्रेतिव्युत्पत्त्या साध्यपदस्य पक्षपरत्वात्। हेतुरय-
मुत्कर्षसमादिपञ्चकेषु। उभयसाध्यत्वाच्चेति साध्यसमायां
हेतुरिति। साध्यसाधनान्यतररूपस्य विकल्पात् सत्त्वाद-
विद्यमानधर्मारोप उत्कर्षसमः व्याप्तिमपुरस्कृत्य पक्षदृष्टा-

CC-0. In Public Domain. Digitized by eGangotri

न्तान्यतरस्मिन् साध्यसाधनान्यतरधर्मेणाविद्यमानधर्मप्रसञ्जनमुत्कर्षसम इति फलितार्थः । यथा शब्दोऽनित्यः कृतकत्वादित्यादावनित्यत्वं कृतकत्वं घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यात् । तथा च विवक्षितविपरीतसाधनाद् विशेषविरुद्धो हेतुस्तद्देशनाभासेयम् । एवं श्रावणशब्दसाधर्म्यात् कृतकत्वाद् घटोऽपि श्रावणः स्यादविशेषात् । वस्तुतस्तु श्रावणत्वापादने ऽर्थान्तरमित्युक्तलक्षणे दृष्टान्तपदं साध्यपदं च न देयम् । अपकर्षसमायां तु धर्मविकल्पो धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वम् । तथा च पक्षदृष्टान्तान्यतरस्मिन् व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनमपकर्षसमा । यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् । आद्ये ऽसिद्धिदेशनाभासा द्वितीये बाधदेशनाभासा । एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटादौ कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यादिति । दृष्टान्ते साध्यसाधनवैकल्यदेशनाभासापीयम् । न च वैधर्म्यसमाप्यत्रैवान्तर्भाविता स्यादिति वाच्यम् । उपधेयसङ्करे ऽप्युपाधेरसङ्करात् । वर्ण्यसमायां तु साध्यः सिद्धभाववान् सन्दिग्धसाध्यकादिर्वा तस्य धर्मो हेतुस्तस्य विकल्पात् सत्त्वात् दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्यापादनं वर्ण्यसमा । तदयमर्थः । पक्षवृत्तिहेतुर्हि गमकः स च त्वया दृष्टान्ते ऽपि स्वीकार्यस्तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात् सपक्षवृत्तित्वानिश्चयादसाधारणो



CC-0. In Public Domain. Digitized by eGangotri

दृष्टान्तः स्यादिति भावः। दृष्टान्तहेतुना पक्षे ऽसन्दिग्धसा-
ध्यकत्वादिरूपपक्षस्याभावापादनमवर्ण्यसमा। दृष्टान्ते
घटादौ कृतकत्वादिहेतुनाऽनित्यत्वादिरूपसाध्यसन्देहविशे-
ष्यत्वाभावसञ्चारितः तादृशहेतुरेव पक्षे शब्दे स्वीकार्यो-
ऽन्यथा तस्य गमकत्वाभावात् पक्षे गमकहेत्वभावात् स्व-
रूपासिद्धिः स्यादिति पक्षे तादृशहेतुः स्वीकार्य इति शब्दादौ
पक्षे सन्दिग्धसाध्यकत्वादिरूपपक्षस्याभावादाश्रयासिद्धि-
रित्यसिद्धिदेशनाभासेयम्। दृष्टान्ते हेतुर्यादृशस्तादृशहेतुः
पक्षे चेत् तदा गमक इत्यभिप्रायेणेदम्। व्यभिचारितास-
म्बन्धेन पक्षदृष्टान्तवृत्तिधर्मेण हेतौ साध्यव्यभिचारापादनं
विकल्पसमा। यथा शब्दोऽनित्यः कृतकत्वादित्यादौ कृत-
कत्वे हेतौ गुरुत्वस्य दृष्टान्तधर्मस्य व्यभिचारितासम्बन्धेन
सत्त्वात् कृतकत्वमनित्यत्वस्यापि व्यभिचारि स्यात् गुरु-
त्वस्यानित्यत्वस्य च दृष्टान्तवृत्तित्वाविशेषादित्यनैकान्ति-
कदेशनाभासेयम्। पक्षवृत्तिनानुमितिविषयत्वलक्षणधर्मेण
पक्षतावच्छेदकादौ साध्यतुल्यतापादनं साध्यसमा। यथा
शब्दत्वस्यानित्यत्वानुमितिविषयत्वेऽनित्यत्ववत् शब्दत्व-
मपि प्राक् शब्दे ऽनिश्चितं स्यात् प्रागसिद्धस्यैवानुमितिवि-
षयत्वादिति पक्षतावच्छेदकविशिष्टपक्षस्याप्रसिद्ध्या आ-
श्रयासिद्धिरित्यसिद्धिदेशनाभासेयमपीति। केचित्तु सा-
ध्यदृष्टान्तयोर्धर्मविकल्पादित्यस्य पक्षे दृष्टान्ते चान्यतरस्मिन्
धर्मविकल्पो धर्मस्य वैचित्र्यं तच्च क्वचित् सत्त्वं क्वचिदसत्त्वम्।
साध्यते ऽत्रेति व्युत्पत्त्या साध्यपदस्य पक्षपरत्वात्। हेतुरप्यु-
त्कर्षसमादिपञ्चकेषु। उभयसाध्यत्वाच्चेति साध्यसमायां
हेतुरिति। साध्यसाधनान्यतररूपस्य विकल्पात् सत्त्वाद-
विद्यमानधर्मारोप उत्कर्षसमः यथा शिष्यगुरुत्वस्य पक्षदृष्टा-

CC-0. In Public Domain. Digitized by eGangotri

न्तान्यतरस्मिन् साध्यसाधनान्यतरधर्मेणाविद्यमानधर्मप्रसञ्जनमुत्कर्षसम इति फलितार्थः । यथा शब्दोऽनित्यः कृतकत्वादित्यादावनित्यत्वं कृतकत्वं घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यात् । तथा च विवक्षितविपरीतसाधनाद् विशेषविरुद्धो हेतुस्तद्देशनाभासेयम् । एवं श्रावणशब्दसाधर्म्यात् कृतकत्वाद् घटोऽपि श्रावणः स्यादविशेषात् । वस्तुतस्तु श्रावणत्वापादने ऽर्थान्तरमित्युक्तलक्षणे दृष्टान्तपदं साध्यपदं च न देयम् । अपकर्षसमायां तु धर्मविकल्पो धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वम् । तथा च पक्षदृष्टान्तान्यतरस्मिन् व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनमपकर्षसमा । यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् । आद्ये ऽसिद्धिदेशनाभासा द्वितीये बाधदेशनाभासा । एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटादौ कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यादिति । दृष्टान्ते साध्यसाधनवैकल्यदेशनाभासापीयम् । न च वैधर्म्यसमाप्यत्रैवान्तर्भाविता स्यादिति वाच्यम् । उपधेयसङ्करे ऽप्युपाधेरसङ्करात् । वर्ण्यसमायां तु साध्यः सिद्धभाववान् सन्दिग्धसाध्यकादिर्वा तस्य धर्मो हेतुस्तस्य विकल्पात् सत्त्वात् दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्यापादनं वर्ण्यसमा । तदयमर्थः । पक्षवृत्तिहेतुर्हि गमकः स च त्वया दृष्टान्ते ऽपि स्वीकार्यस्तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात् सपक्षवृत्तित्वानिश्चयादसाधारणो



CC-0. In Public Domain. Digitized by eGangotri

दृष्टान्तः स्यादिति भावः। दृष्टान्तहेतुना पक्षे ऽसन्दिग्धसाध्यकत्वादि रूपपक्षत्वाभावापादनमवर्ण्यसमा। दृष्टान्ते घटादौ कृतकत्वादिहेतुरनित्यत्वादिरूपसाध्यसन्देहविशेष्यत्वाभावसहचरितः तादृशहेतुरेव पक्षे शब्दे स्वीकार्यो-ऽन्यथा तस्य गमकत्वाभावात् पक्षे गमकहेत्वभावात् स्वरूपासिद्धिः स्यादिति पक्षे तादृशहेतुः स्वीकार्य इति शब्दादौ पक्षे सन्दिग्धसाधकत्वादिरूपपक्षत्वाभावादाश्रयासिद्धि-रित्यसिद्धिदेशनाभासेयम्। दृष्टान्ते हेतुर्यादृशस्तादृशहेतुः पक्षे चेत् तदा गमक इत्यभिमानेनेदम्। व्यभिचारितासम्बन्धेन पक्षदृष्टान्तवृत्तिधर्मेण हेतौ साध्यव्यभिचारापादनं विकल्पसमा। यथा शब्दोऽनित्यः कृतकत्वादित्यादौ कृतकत्वे हेतौ गुरुत्वस्य दृष्टान्तधर्मस्य व्यभिचारितासम्बन्धेन सत्त्वात् कृतकत्वमनित्यत्वस्यापि व्यभिचारि स्यात् गुरुत्वस्यानित्यत्वस्य च दृष्टान्तवृत्तित्वाविशेषादित्यनैकान्तिकदेशनाभासेयम्। पक्षवृत्तिनानुमितिविषयत्वरूपधर्मेण पक्षतावच्छेदकादौ साध्यतुल्यतापादनं साध्यसमा। यथा शब्दत्वस्यानित्यत्वानुमितिविषयत्वे ऽनित्यत्ववत् शब्दत्वमपि प्राक् शब्दे ऽनिश्चितं स्यात् प्रागसिद्धस्यैवानुमितिविषयत्वादिति पक्षतावच्छेदकविशिष्टपक्षस्याप्रसिद्ध्या आश्रयासिद्धिरित्यसिद्धिदेशनाभासेयमपीति। केचित्तु साध्यदृष्टान्तयोर्धर्मविकल्पादित्यस्य पक्षे दृष्टान्ते चान्यतरस्मिन् धर्मविकल्पो धर्मस्य वैचित्र्यं तच्च क्वचित् सत्त्वं क्वचिदसत्त्वम्। साध्यते ऽत्रेतिव्युत्पत्त्या साध्यपदस्य पक्षपरत्वात्। हेतुरयमुत्कर्षसमादिपञ्चकेषु। उभयसाध्यत्वाच्चेति साध्यसमायां हेतुरिति। साध्यसाधनान्यतररूपस्य विकल्पात् सत्त्वादविद्यमानधर्मारोप उत्कर्षसमः व्याप्तिमपुरस्कृत्य पक्षदृष्टा-

CC-0. In Public Domain. Digitized by eGangotri

न्तान्यतरस्मिन् साध्यसाधनान्यतरधर्मेणाविद्यमानधर्मप्रसञ्जनमुत्कर्षसम इति फलितार्थः । यथा शब्दोऽनित्यः कृतकत्वादित्यादावनित्यत्वं कृतकत्वं घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यात् । तथा च विवक्षितविपरीतसाधनाद् विशेषविरुद्धो हेतुस्तद्देशनाभासेयम् । एवं श्रावणशब्दसाधर्म्यात् कृतकत्वाद् घटोऽपि श्रावणः स्यादविशेषात् । वस्तुतस्तु श्रावणत्वापादने ऽर्थान्तरमित्युक्तलक्षणे दृष्टान्तपदं साध्यपदं च न देयम् । अपकर्षसमायां तु धर्मविकल्पो धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वम् । तथा च पक्षदृष्टान्तान्यतरस्मिन् व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनमपकर्षसमा । यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् । आद्ये ऽसिद्धिदेशनाभासा द्वितीये बाधदेशनाभासा । एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटादौ कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यादिति । दृष्टान्ते साध्यसाधनवैकल्यदेशनाभासापीयम् । न च वैधर्म्यसमाप्यत्रैवान्तर्भाविता स्यादिति वाच्यम् । उपधेयसङ्करे ऽप्युपाधेरसङ्करात् । वर्ण्यसमायां तु साध्यः सिद्ध्यभाववान् सन्दिग्धसाध्यकादिर्वा तस्य धर्मो हेतुस्तस्य विकल्पात् सत्त्वात् दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्यापादनं वर्ण्यसमा । तदयमर्थः । पक्षवृत्तिहेतुर्हि गमकः स च त्वया दृष्टान्ते ऽपि स्वीकार्यस्तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात् सपक्षवृत्तित्वानिश्चयादसाधारणो



CC-0. In Public Domain. Digitized by eGangotri

हेतुरित्यनैकान्तिकदेशनाभासेयम्। सन्दिग्धसाधकवृत्ति-हेतुर्यदि न दृष्टान्ते तदा साधनविकलो दृष्टान्तः स्यादिति। अवर्ण्यसमायां तु दृष्टान्ते सिद्धसाध्यके यो हेतुरूपो धर्मस्त-स्य विकल्पात् सत्त्वात् पक्षे शब्दादावसन्दिग्धसाधकत्वा-पादनम्। दृष्टान्ते हेतोर्यादृशत्वं तादृशहेतुरेव गमक इत्य-भिमानेनेदमापादनम्। यथा शब्दोऽनित्यः कृतकत्वादि-त्यत्र निश्चितसाध्यकघटादिवृत्तिर्हेतुः पक्षेऽपि स्वीकार्यो-ऽन्यथा स्वरूपासिद्धिः स्यात्। तथा च पक्षेऽपि दृष्टान्त-तुल्यतापत्त्या सन्दिग्धसाध्यकत्वलक्षणपक्षत्वाभावादा-श्रयासिद्धिरिति। असिद्धिदेशनाभासेयम्। विकल्पसमा-यां तु पक्षे दृष्टान्ते च यो धर्मस्तस्य विकल्पो विरुद्धः कल्पो व्यभिचारित्वम्। उपलक्षणं त्वेतत्। अन्यवृत्तिधर्मस्यापि बोध्यम्। तथा च कस्यचिद्धर्मस्य किञ्चिद्धर्मव्यभिचारदर्श-नेन धर्मत्वाविशेषात् प्रकृतहेतोः प्रकृतसाध्यव्यभिचारा-पादनं विकल्पसमा। यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनाद् गुरुत्वस्य नित्यत्व-व्यभिचारदर्शनात् नित्यत्वस्य मूर्तत्वव्यभिचारदर्शनाद् धर्मत्वाविशेषात् कृतकत्वमप्यनित्यत्वव्यभिचारि स्यादि-ति। अनैकान्तिकदेशनाभासेयम्। पक्षदृष्टान्तादेः प्रकृत-साध्यतुल्यतापादनं साध्यसमा। अयमाशयः। एतत्प्रयोगे साध्यस्यैवानुमितिविषयत्वम्। तथा च पक्षादेरनुमितिवि-षयत्वात् साध्यवत् साध्यता स्यादतः साध्यसमा। तथाहि पक्षादेः पूर्वं सिद्धत्वे साध्यत्वाभावान्नानुमितिविषयत्वं पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रयासिद्ध्यादयस्तद्देशनाभा-सा चेयम्। सूत्रे उभयसाध्यत्वादित्यस्य उभयं पक्षदृ-ष्टान्तौ तद्धर्मौ हेत्वादिस्तत्साध्यत्वं तदधीनानुमिति-विषयत्वं साध्यस्येव पक्षादेरपीति तुल्यत्वापादनमिति।

CC-0. In Public Domain. Digitized by eGangotri

लिङ्गोपहितभानमते लिङ्गस्याप्यनुमितिविषयत्वात् साध्यसमत्वं हेतोश्च साध्यत्वे हेतुमान् दृष्टान्तोऽपि साध्य इत्याशय इत्याहुः ॥ ४ ॥

एतासामसदुत्तरत्वे बीजमाह ।

**किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः**[1] ॥ ५ ॥

किञ्चित्साधर्म्याद् व्याप्तिपक्षधर्मतासहितात् साधर्म्यविशेषात् । उपसंहारसिद्धेः साध्यसिद्धेः । उपसंह्रियते यदिति व्युत्पत्त्या उपसंहारपदस्य साध्यपरत्वात् । वैधर्म्यादेतद्विपरीताद् व्याप्तिनिरपेक्षसाधर्म्यमात्रात् प्रतिषेधो न सम्भवतीत्यर्थः । तथा चोत्कर्षसमादिषु निरुक्तापादकानां व्यभिचारित्वान्न वाद्युक्तप्रतिषेधकत्वमन्यथा प्रमेयत्वरूपासाधकसाधर्म्यात् तद्दूषणमप्यसम्यक् स्यादिति भावः ॥ ५ ॥

ननु निरुक्तानामनापादकत्वे पक्षे यद्धर्मसहचारो हेतौ तद्धर्मवत्त्व एव हेतुमतो दृष्टान्ततेति कथं सङ्गच्छतामत आह ।

**साध्यातिदेशाच्च दृष्टान्तोपपत्तेः**[2] ॥ ६ ॥

साध्यातिदेशाच्च निश्चितसाध्यकत्वाच्च । हेतुमतो दृष्टान्ततोपपत्तेरित्यर्थः । चकारात् सन्दिग्धसाध्यकत्वादेव पक्षतोपपत्तिर्न तु दृष्टान्तवृत्तियावद्धर्मवत्त्व एव पक्षता

(१) एतत् सूत्रं धृत्वा न हेत्वर्थापरिज्ञानादिति सूत्रार्थ इति वार्त्तिकम् । आसां दुष्टत्वमूलप्रतिपादनपरं सूत्रम् । किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेध इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

(२) वर्ण्यावर्ण्यसाध्यसमेषु व्याघातान्तरमपि सूत्रयति साध्यातिदेशाच्च दृष्टान्तोपपत्तेरित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

CC-0. In Public Domain. Digitized by eGangotri

पक्षदृष्टान्तयोरविशेषापत्तेरिति बोध्यम् । केचित्तु वर्ण्यावर्ण्यसाध्यसमासु समाध्यन्तरमाह । साध्यातिदेशाच्चेति । दृष्टान्ते हि साध्यमतिदिश्यते तावतैव दृष्टान्तत्वमुपपद्यते न त्वशेषो धर्मः पक्षदृष्टान्तयोरभेदापत्तेः । पक्षादेरपि साध्यसमत्वमेतेन प्रत्युक्तम् । दृष्टोऽन्तो दृष्टान्तः पक्षः तस्माद् वह्निमानित्यन्ते पक्षकीर्तनात् । तथा च साध्यस्यातिदेशात् साधनात् पक्ष इत्युच्यते न तु पक्षः साध्यतेऽतिप्रसङ्गादिति भाव इत्याहुः ॥ ६ ॥

समाप्तं जातिषट्कप्रकरणम् ॥

क्रमप्राप्तौ प्राप्त्यप्राप्तिसमौ लक्षयति ।

**प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ[१] ॥ ७ ॥**

साध्यं कार्यं ज्ञाप्यं वा । हेतोरिति । कारणत्वे ज्ञापकत्वे वा वादिना उपन्यस्ते सतीति शेषः । प्राप्तिपक्षे आह । प्राप्त्याऽविशिष्टत्वात् । हेतोः साध्यस्य च प्राप्तित्वाविशेषात् । अप्राप्तिपक्षे आह । अप्राप्त्या साध्येन सह सम्बन्धाभावेनातिप्रसङ्गेनासाधकत्वाच्च यौ प्रयोगौ तौ प्राप्त्यप्राप्तिसमौ ये जाती ते इति वा । तथा च प्राप्त्याऽविशेषादनिष्टापादनेन प्रत्यवस्थानं प्राप्तिसमा । अप्राप्त्याऽसाधकत्वादनिष्टापादनेन प्रत्यवस्थानमप्राप्तिसमा । तत्राद्ये घटेन सम्बद्धो दण्डो घटकारणमित्युच्यते तदा घटो

(१) साध्यसमलक्षणज्ञानस्य सम्बन्धविषयत्वेन सम्बन्धविशेषणकव्याप्तिसमज्ञानहेतुत्वं प्राप्तिज्ञानस्य चाप्राप्तिबुद्धाविति सङ्गत्या प्राप्त्यप्राप्तिविकल्पोपक्रमजातिद्वयप्रकरणमारभत इत्यादिना एतत् सूत्रं धृत्वा व्याख्यावसरे तथापि हेतोरित्यनन्तरं यदा तदेत्यध्याहार्यं तस्य सूत्रे गुणत्वादित्युक्तमन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायैः ।

CC-0. In Public Domain. Digitized by eGangotri

दण्डकारणं स्यात् सम्बद्धत्वाविशेषादित्यनिष्टापादनम् । एवं ज्ञाप्यस्य वह्नेः प्रागेव सम्बद्धत्वं ज्ञातमस्तीति चेद् वह्निज्ञानमेव धूमज्ञानं जनयेदविशेषादित्यापादनम् । द्वितीये घटेनासम्बद्धो दण्डो घटकारणमित्युच्यते तदा दण्डः पटस्यापि कारणं स्यादसम्बद्धत्वाविशेषात् । एवं धूमो यद्यसम्बद्धोऽपि वह्निं ज्ञापयति तदा वह्न्यभावमपि ज्ञापयेदविशेषादित्यनिष्टापादनम् । इमे प्रतिकूलतर्कदेशनाभासे ॥ ७ ॥

अनयोरसदुत्तरत्वमाह ।

**घटादिनिष्पत्तिदर्शनात् पीडने चाव्यभिचारादप्रतिषेधः**[१] **॥ ८ ॥**

दण्डादिसत्त्व एव घटनिष्पत्तिदर्शनाच्छत्रुपीडने च श्येनयागादीनामव्यभिचारान्नोक्तापादनेन प्रतिषेध इत्यर्थः । तथा च कार्यनियतपूर्ववर्तिन एव कारणत्वं न तु प्रागपि कार्यमपेक्षितम् । पटादौ दण्डादेर्व्यभिचारादेव न कारणत्वमन्यथा लोकवेदसिद्धकार्यकारणभावोच्छेदे त्वदुक्तहेतुरप्यसाधकः स्यादिति भावः । एवं ज्ञाप्यज्ञापकभावोऽप्यवसेयः ॥ ८ ॥

समाप्तं प्राप्त्यप्राप्तिसमजातिद्वयप्रकरणम् ॥

क्रमप्राप्तौ प्रसङ्गसमप्रतिदृष्टान्तसमौ लक्षयति ।

---

(१) अत्र प्रत्युत्तरसूत्रम् । घटादिनिष्पत्तिदर्शनादित्यन्वीक्षानयतत्त्वबोधीयवर्धमानोपाध्यायलेखदर्शनाद घटादिनिष्पत्तिदर्शनादित्येतन्मात्रं तन्मते सूत्रपाठ इति निश्चीयते । तात्पर्यटीकायामपि घटादिनिष्पत्तिदर्शनादिति सूत्रमिति दृश्यते । पीडने चाभिचारादिति क्वचित् पाठः ।

CC-0. In Public Domain. Digitized by eGangotri

**दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थाना-च्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ[1]॥ ९ ॥**

कारणं प्रमाणं तस्यानपदेशादनभिधानात्। प्रत्यवस्थानम् दृष्टान्तस्य साध्यवत्त्वे किं प्रमाणमित्यभिधानं प्रसङ्गसम इत्यर्थः। यद्यपीदं सदुत्तरमेव तथापि दृष्टान्तस्य साध्यवत्त्वे प्रमाणं वाच्यं तत्रापि च प्रमाणान्तरमित्यनवस्थाप्रत्यवस्थाने तात्पर्यम्। तदुक्तमाचार्यैः। अनवस्थाभासप्रसङ्गः प्रसङ्गसम इति। एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थापि प्रसङ्गसम एव। पूर्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणाकृतिगणेष्वन्तर्भूतमिति विशेषः। अनवस्थादेशनाभासा चेयम्। प्रतिदृष्टान्तेनेति सावधारणम्। तेन प्रतिदृष्टान्तमात्रबलेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः। मात्रपदेन हेतोः पक्षधर्मताव्युदासः नातः साधर्म्यसमान्तर्भावः। यथा यदि घटदृष्टान्तेनानित्यः शब्दस्तदाकाशदृष्टान्तेन नित्य एव किं न स्यादिति बाधः प्रतिरोधो वा। बाधप्रतिरोधान्यतरदेशनाभासेयम् ॥ ९ ॥

प्रसङ्गसमस्यासदुत्तरत्वमाह।

**प्रदीपोपादानप्रसङ्गनिवृत्तिवत् तद्विनिवृत्तिः[2] ॥ १० ॥**

प्रदीपस्य घटादिप्रकाशकस्य उपादानप्रसङ्गनिवृत्तिवत् प्रकाशकान्तराकाङ्क्षानिवृत्तिवत्। तद्विनिवृत्तिः दृष्टान्ते

(१) अप्राप्तिसमज्ञानस्याभावविषयतया तद्विशेषणकप्रसङ्गसमधीहेतुत्वं तद्वुद्धेश्च सम्बन्धविषयतया साधनघटितप्रतिदृष्टान्तसमधीहेतुरूपतया सङ्गत्या सूत्रम्। दृष्टान्तस्य कारणानपदेशादित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः।

(२) प्रसङ्गसमदोषचर्चासूत्रम्। प्रदीपोपादानप्रसङ्गनिवृत्तिवत् तद्विनिवृत्तिरित्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः।

CC-0. In Public Domain. Digitized by eGangotri

साध्यवत्त्वप्रमाणाकाङ्क्षाविनिवृत्तिरित्यर्थः । तथा च यथा प्रदीपस्य स्वप्रकाशत्वं स्फुटं तथा दृष्टान्ते साध्यवत्त्वमपि लोकप्रसिद्धस्यैव दृष्टान्तत्वेन कथनात् । अथवा हेतोः साध्यसहचारज्ञानार्थं दृष्टान्तापेक्षा न तु दृष्टान्तदृष्टसाधनाद्यपेक्षा अनुपयोगात् । यथा घटादिप्रकाशकविवेचने प्रदीपापेक्षा न तु तत्प्रकाशकाद्यपेक्षापि । कथमन्यथा त्वदीयदूषणोपन्यासोऽपि तत्रानवस्थाप्रसङ्गेनाकाङ्क्षाया अनिवृत्तेरिति भावः ॥ १० ॥

प्रतिदृष्टान्तसमे दूषणमाह ।

**प्रतिदृष्टान्ताहेतुत्वे च नाहेतुर्दृष्टान्तः**[1] ॥ ११ ॥

प्रतिदृष्टान्तस्याहेतुत्वे साध्याभावासाधकत्वे दृष्टान्तोऽपि अहेतुः साध्यासाधक इति प्रतिबन्दिर्नेत्यर्थः । तथा च हेतौ व्याप्तिग्रहस्य साध्यसाधकत्वेन तदर्थमपेक्षितं साध्यसाधनसहचारज्ञानं दृष्टान्तोपन्यासो जनयतीति दृष्टान्तस्य हेतुता । प्रतिदृष्टान्तस्य च वाक्यं केवलं साध्याभावज्ञापकतया न बाधकता न वा सत्प्रतिपक्षोत्थापकता व्याप्त्याद्यबोधनादिति भावः ॥ ११ ॥

समाप्तं प्रसङ्गसमप्रतिदृष्टान्तसमप्रकरणम् ॥

क्रमप्राप्तमनुत्पत्तिसमं लक्षयति ।

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः**[2] ॥ १२ ॥

प्रागुत्पत्तेरिति । पक्षदृष्टान्तयोरिति शेषः । तथा च

(१) प्रतिदृष्टान्तसमे प्रत्युत्तरसूत्रम् । प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्त इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः । एवं प्रतिदृष्टान्तहेतुत्वे चेति न्यायसूची-निबन्धे ऽपि पाठः ।

(२) अनुत्पत्तिसमज्ञाने ऽभावविषयप्रतिदृष्टान्तज्ञानस्य हेतुत्वादनन्तरमनुत्पत्तिसमसूत्रम् । प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम इत्यन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

CC-0. In Public Domain. Digitized by eGangotri

पक्षदृष्टान्तयोरुत्पत्तेः पूर्वं तत्र कारणस्य साधनस्याभावात् प्रत्यवस्थानमनुत्पत्तिसमः । यथा घटो रूपवान् गन्धात् पटवदितिप्रयोगे घटोत्पत्तेः पूर्वं तत्र गन्धाभावेन स्वरूपासिद्धिः पटोत्पत्तेश्च पूर्वं तत्र गन्धाभावेन दृष्टान्तासिद्धिश्चेति । असिद्धिदेशनाभासेयम् । अथवा प्रागुत्पत्तेरिति । साधनाङ्गानामिति शेषः । तेन साध्यसाधनपक्षदृष्टान्तानामपि लाभः । तथा च घटादावुत्पत्तिक्षणे रूपाद्यनुत्पादात् तदानीं रूपाद्यभावमादाय बाधासिद्धी । तथा कारणाभावादित्यस्य बाधासिद्धिप्रतिबन्धकसत्त्वेन कारणाभावादित्यर्थः । तथा चोत्पत्तेः पूर्वं हेतुसाध्याभावेन प्रत्यवस्थानं लक्षणम् । जातित्वे सतीति विशेषणं देयम् । तेनोत्पत्तिक्षणावच्छिन्नो घटो गन्धवानित्यादौ बाधेन प्रत्यवस्थाने नातिव्याप्तिः ॥ १२ ॥

अत्रासदुत्तरत्वमाह ।

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः**[१] **॥ १३ ॥**

उत्पन्नस्य पक्षादेः । तथाभावात् साधनाङ्गत्वाद् घटादिरूपभावत्वाद्वा । कारणोपपत्तेः हेतुमत्त्वात् साध्यवत्त्वाच्च न कारणप्रतिषेध इत्यर्थः । तथा च हेत्वभाववत्पक्षोऽसिद्धिरनुत्पन्ने च तस्मिन् अधिकरणत्वासम्भवेनासत्त्वेन च तदसम्भवात् । एतेन दृष्टान्तासिद्धिरपि व्याख्याता । एवं हेत्वादीनां यदाकदाचित् सत्त्वेनैव साधनाङ्गता बोध्या ॥ १३ ॥

समाप्तमनुत्पत्तिसमप्रकरणम् ॥

---

(१) दोषचिन्तासूत्रम् । तथाभावावित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

CC-0. In Public Domain. Digitized by eGangotri

क्रमप्राप्तं संशयसमं लक्षयति ।

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः**[1] ॥ १४ ॥

सामान्ये गोत्वादौ दृष्टान्ते घटादावैन्द्रियकत्वं समानं नित्यत्वानित्यत्वान्यतरसहचरितत्वेन तुल्यं तस्मिन् । नित्यानित्यसाधर्म्यात् नित्यत्वानित्यत्वसहचरितैन्द्रियकत्वरूपसाधर्म्यवत्त्वज्ञानात् । शब्दे ऽनित्यत्वसंशयापादनं संशयसमः । इदं च शब्दे ऽनित्यत्वसाध्यकस्थलाभिप्रायेणोक्तम् । लक्षणं तु संशयकारणात् संशयापादनेन प्रत्यवस्थानमिति । साध्यान्तरस्थले ऽप्युदाहरणं बोध्यम् । साधर्म्यादित्युपलक्षणम् । तेन क्वचिदसमानधर्मदर्शनेन संशयापादने ऽपि संशयसमः । तथा च शब्दोऽनित्यः कृतकत्वादितिप्रयोगे गमकात् कृतकत्वाद् यथाऽनित्यत्वं निर्णीयते तथा संशायकादैन्द्रियकत्वादनित्यत्वं सन्दिह्यतामित्यापादनाकारः । तथा च संशयसामग्रीसत्त्वात् कोटिद्वयनिश्चयानुत्पादात् प्रतिपक्षदेशनाभासेयम् ॥ १४ ॥

अत्र समाधानम् ।

**साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशये ऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः**[2] ॥ १५ ॥

साधर्म्यात् समानधर्मदर्शनात् । संशये आपाद्यमाने

---

(१) संशयस्य विरोधिनिरूप्यत्वात् विरोधस्य चाभावगर्भत्वादभावविषयानुत्पत्तिसमस्य हेतुत्वेन तदनन्तरं संशयप्रकरणाय सूत्रम् । सामान्यदृष्टान्तयोरित्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

(२) अस्य प्रत्याख्यानसूत्रम् । साधर्म्यात् संशय इत्यादि तात्पर्यटीका । अत्र दुष्टत्वमूलसूत्रम् । साधर्म्यात् संशय इत्यादि अन्वीक्षानयतत्त्वबोधे वर्धमानोपाध्यायाः ।

CC-0. In Public Domain. Digitized by eGangotri

